नवियदश्रुतेः ॥१॥

वेदान्तेषु तत्र तत्र भिन्नप्रस्थाना उत्पत्तिश्रु
तय उपलभ्यन्ते । केचिदाकाशस्योत्पत्ति
मामनन्ति केचिन्न तथा । केचिद्वायोरुत्पत्ति
मामनन्ति केचिन्न । एवं जीवस्य प्राणानां च
। एवमेव क्रमद्वारकोऽपि विप्रतिषेधः श्रुत्य
न्तरेषूपलभ्यते । विप्रतिषेधाच्च परपक्षा
णामनपेक्षितत्वं स्थापितं, तद्वत्स्वपक्षस्यापि
विप्रतिषेधादेवानपेक्षितत्वमाशङ्क्येतेत्यतः
सर्ववेदान्तगतसृष्टिश्रुत्यर्थनिर्मलत्वा
य परः प्रपञ्च आरभ्यते । तदर्थनिर्मलत्वे च फ
लं यथोक्तशङ्कानिवृत्तिरेव । तत्र प्रथमं ॥

इति भाष्यम् + टी०

वियदादिविधातारं सीतास्याब्जमधुव्रतम्
नित्याप्यद्रिश्च कर्त्तात्माभिन्नं सर्वेश्वरं भजे ॥१॥ जीवस्यानुत्पत्तिप्रसङ्गेनाकाशस्याप्यु
त्पाद्यसंभवमाशङ्क्य परिहरन्नादौ वेदेदृशी
मतमाह नवियदश्रुतेः । भूतभोक्तृश्रुतीनां
मिथो विरोधशङ्कानिरासो वियत्पादार्थः ।
लिङ्गशरीरश्रुतीनां निरासः प्राणपादार्थः ।
यथा...परपक्षाउपक्ष्यास्त
था श्रुतिपक्षोऽपि उपेक्ष्य इति शङ्कायोने पादद्वयस्या
रम्भात् पूर्वपादेन दृष्टान्तसंगतीति समुदायार्थः

तावदाकाशमाश्रित्य चिन्त्यते किमस्याकाशस्योत्पत्तिरस्त्युत नास्तीति । तत्र तावत् प्रतिपाद्यते । न वियदश्रुतेरिति । न खल्वाकाशमुत्पद्यते । कस्मात् अश्रुतेः, न ह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति । छान्दोग्ये हि 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं' इति सच्छब्दवाच्यं ब्रह्म प्रकृत्य 'तदैक्षत तत्तेजोऽसृजत' इति च पञ्चानां महाभूतानां मध्यम तेज आदिं कृत्वा त्रयाणां तेजोऽबन्नानामुत्पत्तिः श्राव्यते । श्रुतिश्च नः प्रमाणमतीन्द्रियार्थविज्ञानोत्पत्तौ न चात्र श्रुतिरस्त्याकाशस्योत्पत्तिप्रतिपादिनी तस्मान्नास्त्याकाशस्योत्पत्तिरिति ॥

अस्ति तु ॥ २ ॥

तुशब्दः पक्षान्तरपरिग्रहे । मा नामाकाशस्य छान्दोग्येऽभूदुत्पत्तिः श्रुत्यन्तरे त्वस्ति । तैत्तिरीयकाः समामनन्ति

---

व्याकाशवाय्वोरुत्पत्तिमामनन्ति तैत्तिरीयकाः, नामनन्ति छन्दोगाः, जीवस्य प्राणानाञ्चोत्पत्तिं 'सर्वे एत आत्मनो व्युच्चरन्तीति' वाजिनः, एतस्माज्जायते प्राण इत्याथर्वणिका आमनन्ति । नन्वेवमाकाशपूर्विका क्वचित् सृष्टिः क्वचित्तेजःपूर्विकेति क्रमविरोधः । आदिपदात् 'स इमांल्लोकानसृजत' इत्यक्रमः, क्वचित् सप्त प्राणाः क्वचिदष्टावित्यादिः सङ्ख्याद्वारकश्च विरोधो ग्राह्यः, प्रपञ्चः पादद्वयं, तथा च पादद्वयस्य श्रुतीनां मिथोविरोधनिरासार्थत्वाच्छ्रुतिशास्त्राध्यायसङ्गतयः सिद्धाः । अत्राकाशस्योत्पत्त्यनुपपत्तिश्रुत्योर्मिथोविरोधोऽस्ति न वेति वाक्यभेदैकवाक्यत्वाभ्यां सन्देहे यद्युत्पत्तिस्तदा वाक्यभेदेन विरोधादप्रामाण्यमनयोः श्रुत्योरिति पूर्वपक्षयिष्यन् आदावनुत्पत्तिपक्षमेकदेशी व्याख्यातीत्याह तत्र तावदिति ॥

उत्पत्तिश्रुतिर्मुख्या नास्तीति गूढाभिसन्धिः एकदेशि पूर्वपक्षयति सूत्रकारः । अस्ति त्विति । एकवाक्यत्वेन प्रामाण्यसम्भवे विभिन्न श्रुती-

'सत्यं ज्ञानमनन्तं ब्रह्म' इति प्रकृत्य 'तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः' इति। ततश्च श्रुत्योर्विप्रतिषेधः क्वचित्तेजःप्रमुखा सृष्टिः क्वचिदाकाशप्रमुखेति । नन्वेकवाक्यताऽनयोः श्रुत्योर्युक्ता । सत्यं सा युक्ता न तु सावगन्तुं शक्यते, कुतः तत्तेजोऽसृजतेति सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयेन सम्बन्धानुपपत्तेः 'तत्तेजोऽसृजत तदाकाशमसृजत' इति। ननु सकृच्छ्रुतस्यापि कर्तुः कर्त्तव्यद्वयेन सम्बन्धो दृश्यते यथा ससूपं पक्त्वौदनं पचतीति। एवं तदाकाशं सृष्ट्वा तत्तेजोऽसृजतेति योजयिष्यामः। नैवं युज्यते, प्रथमजत्वं हि छान्दोग्ये तेजसोऽवगम्यते, तैत्तिरीयके चाकाशस्य, न चोभयोः प्रथमजत्वं सम्भवति। एतेनेतरश्रुत्यन्तरविरोधोऽपि व्याख्यातः 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्यत्रापि तस्मात् आकाशःसम्भूतस्तस्मात्तेजः सम्भूतमिति सकृच्छ्रुतस्यापादानस्य सम्भवनस्य च वियत्तेजोभ्यां

रप्रामाण्यमिति शङ्कते । नन्वेकवाक्यतेति । एकवाक्यत्वासम्भवादप्रामाण्यं युक्तमित्याह । सत्यमित्यादिना । एकस्य युगपत् कार्यद्वयान्वयेऽपि क्रमेण सम्बन्धसम्भवादेकवाक्यतेति सुखसिद्धान्ती शङ्कते । ननु सकृदिति । अप्रामाण्यवादी दूषयति । नैवमिति । क्रमो न युज्यते द्वयोः श्रुत-प्राथम्यभङ्गापत्तेरित्यर्थः । एकस्मात् द्विदलवीजादङ्कुरद्वयवदस्तूभयं प्रथम-मित्यत आह । न चेति । वायोरग्निरिति क्रमश्रुतिभङ्गादिति शेषः । छान्दोग्यश्रुतेस्तित्तिरिश्रुतिविरुद्धार्थत्वमुक्त्वा तित्तिरिश्रुतेस्तद्विरुद्धार्थत्वमाह । एतेनेति । एतत्पदार्थमाह । तस्मादिति । छान्दोग्ये श्रुतं तेजसः प्राथम्यं अत्र दुर्योज्यमित्यर्थः । किञ्च एतत्पदार्थः आत्मा छान्दोग्ये तेजस उपादानं श्रूयते अत्र तु वायुरिति नैकवाक्यतेत्याह । वायोरिति ।

युगपत् सम्बन्धानुपपत्तेः, वायोरग्निरिति च पृथगाम्नाया-। अस्मिन् विप्रतिषेधे कश्चिदाह ॥

## गौण्यसम्भवात् ॥ ३ ॥

नास्ति वियदुत्पत्तिः अश्रुतेरेव । या त्वितरा वियदुत्पत्तिवादिनी श्रुतिरुदाहृता सा गौणी भवितुमर्हति । कस्मात् । असम्भवात् । न ह्याकाशस्योत्पत्तिः सम्भावयितुं शक्या श्रीमत्कणभुगभिप्रायानुसारिषु जीवत्सु । ते हि कारणसामग्र्यसम्भवादाकाशस्योत्पत्तिं वारयन्ति । समवाय्यसमवायिनिमित्तकारणेभ्यो हि किल सर्वमुत्पद्यमानं समुत्पद्यते । द्रव्यस्य चैकजातीयकमनेकञ्च द्रव्यं समवायिकारणं भवति । न चाकाशस्यैकजातीयकमनेकञ्च द्रव्यमारम्भकमस्ति यस्मिन् समवायिकारणे सति असमवायिकारणे च तत्संयोगे आकाश उत्पद्येत । तदभावात्तु तदनुग्रहप्रवृत्तं निमित्तकारणं

---

एवं श्रुत्योर्विरोधादप्रामाण्यमिति पूर्वपक्षे प्राप्ते स एव वियदनुत्पत्तिवादी स्वमतेन प्रामाण्यं ब्रूत इत्याह । अस्मिन्निति ॥

एवमध्यायसमाप्तेरधिकरणेषु प्रथमं विरोधात् श्रुत्यप्रामाण्यमिति पूर्वपक्षफलं तत एकदेशिसिद्धान्तः पश्चान्मुख्यसिद्धान्ते श्रुतीनामविरोधेनैकवाक्यतया ब्रह्मणि समन्वयसिद्धिरिति फलं क्रमेणावगन्तव्यं तत्र श्रुत्योर्विरोधे सत्यध्ययनविध्युपात्तयोरप्रामाण्यायोगाद्वियदुत्पत्त्य- सम्भवरूपतां तुच्छीकृत्य छान्दोग्यश्रुतिर्मुख्यार्था इतरा गौणीत्यविरोध इत्येकदेशिमतं निगमयति । नास्तीत्यादिना । आकाशो नोत्पद्यते सामग्र्यभावादात्मवत्, न चास्य समवायिकारणं विजा- तीयस्यानयोरारम्भकत्वायोगादसंयुक्तत्वाच्च संयोग एव हि द्रव्यारम्भ-

दूरापेतमेवाकाशस्य भवति । उत्पत्तिमतां च तेजःप्रभृतीनां पूर्वोत्तरकालयोर्विशेषः सम्भाव्यते प्रागुत्पत्तेः प्रकाशादिकार्यं न बभूव पश्चाच्च भवतीति । आकाशस्य पुनर्न पूर्वोत्तरकालयोर्विशेषः सम्भावयितुं शक्यते । किं हि प्रागुत्पत्तेरनवकाशमसुषिरमच्छिद्रं बभूवेति शक्यतेऽध्यवसातुम् । पृथिव्यादिवैधर्म्याच्च विभुत्वादिलक्षणादाकाशस्याजत्वसिद्धिः । तस्मात् यथा लोके आकाशं कुरु आकाशो जात इत्येवंजातीयको गौणः प्रयोगो भवति, यथा च घटाकाशः करकाकाशो गृहाकाश इत्येकस्याप्याकाशस्यैवंजातीयको भेदव्यपदेशो भवति । वेदेऽपि 'आरण्यानाकाशेष्वालभेरन्' इत्येवमुत्पत्तिश्रुतिरपि गौणी द्रष्टव्या ॥३॥

---

न वा विकारत्वमतः समवाय्यसमवायिनोरभावाच्च चेत्यादिरित्यर्थः । प्रागभावशून्यत्वादात्मवदाकाशो नोत्पद्यते इत्याह । उत्पत्तिमतामिति । प्रकाशवायुमात्रभवः आदिपदात्तमोऽवयवविभागयोर्ग्रहणम् । मूर्तद्रव्याश्रयत्वं ह्याकाशस्य कार्यं, तच्च प्रलयेऽप्यस्ति परमाण्वाश्रयत्वात् अतो न प्रागभाव इत्यर्थः । प्रागभावासत्त्वं स्फुटयति । किं हीति । स्थूलाश्रयोऽवकाशः सूक्ष्माश्रयः छिद्रमल्पाश्रयः सुषिरमिति भेदः । किञ्चात्मवदाकाशो न जायते विभुत्वादस्पर्शद्रव्यत्वाच्चेत्याह । पृथिव्यादीति । तस्मादुक्ततर्कबलाद्गौणो द्रष्टव्येत्यन्वयः । भेदोक्तेर्गौणत्वे दृष्टोदाहरणमाह । वेदेऽप्यारण्यानिति । आकाशेष्विति भेदव्यपदेशो गौण इति सम्बन्धः ॥३॥

## शब्दाच्च ॥ ४ ॥

शब्दः खल्वप्याकाशस्याजत्वं ख्यापयति। यत आह 'वायुश्चान्तरिक्षञ्चैतदमृतम्' इति न ह्यमृतस्योत्पत्तिरुपपद्यते। 'आकाशवत् सर्वगतश्च नित्यः' इति च। आकाशेन ब्रह्म सर्वगतत्वनित्यत्वाभ्यां धर्माभ्यामुपमिमान आकाशस्यापि तौ धर्मौ सूचयति, न च तादृशस्योत्पत्तिरुपपद्यते। स यथानन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्य इति चोदाहरणं, आकाशशरीरं ब्रह्म आकाश आत्मेति च। न ह्याकाशस्योत्पत्तिमत्त्वे ब्रह्मणस्तेन विशेषणं सम्भवति नीलेनेवोत्पलस्य। तस्मान्नित्यमेवाकाशेन साधारणं ब्रह्मेति गम्यते ॥

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

इदं पदोत्तरं सूत्रम्। स्यादेतत् कथं पुनरेकस्य सम्भूतशब्दस्य 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्यस्मिन्नधिकारे परेषु तेजःप्रभृतिष्वनुवर्तमानस्य मुख्यत्वं सम्भवति

---

न केवलं तर्कादाकाशस्यानुत्पत्तिः किन्तु श्रुतितोऽपीत्याह सूत्रकारः। शब्दाच्चेति। नित्यत्वस्यानादित्वादिति भावः। आत्मेति च शब्द इत्योदाहरणमित्यन्वयः। आकाशः शरीरमस्येति बहुव्रीहिणात्मनत्वाभिधानात् ब्रह्मवदाकाशस्यानादित्वमित्यर्थः ॥

पदोत्तरमिति। षष्ठोत्तरमिति यावत्। तान्येव षट्पदानि पठति। स्यादेतदिति। अधिकारे प्रकरणे, यथैकस्मिन् ब्रह्मप्रकरणे सत्यं ब्रह्मानन्दो ब्रह्मेति वाक्ययोर्ब्रह्मशब्दस्य गौणत्वमानन्दे मुख्यता

आकाशे च गौणत्वमिति । अत उत्तरमुच्यते । स्यादेकस्यापि सम्भूतशब्दस्य विषयविशेषवशाद्गौणो मुख्यश्च प्रयोगो ब्रह्मशब्दवत् । यथैकस्यापि ब्रह्मशब्दस्य 'तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्म' इत्यस्मिन्नधिकारेऽन्नादिषु गौणः प्रयोगः आनन्दे च मुख्यः, यथा च तपसि ब्रह्मविज्ञानसाधने ब्रह्मशब्दो भक्त्या प्रयुज्यतेऽञ्जसा तु विज्ञेये ब्रह्मणि तद्वत् । कथं पुनरनुत्पत्तौ नभसः 'एकमेवाद्वितीयम्' इतीयं प्रतिज्ञा समर्थ्यते । ननु नभसा द्वितीयेन सद्वितीयं ब्रह्म प्राप्नोति कथञ्च ब्रह्मणि विदिते सर्वं विदितं स्यादिति । तदुच्यते । एकमेवेति तावत् स्वकार्यापेक्षयोपपद्यते । यथा लोके कश्चित् कुम्भकारकुले पूर्वेद्युर्मृद्दण्डचक्रादीनि चोपलभ्य परेद्युश्च नानाविधान्यमत्राणि प्रसारितान्युपलभ्य ब्रूयात् मृदेवैकाकिनी पूर्वेद्युरासीदिति । स च तयावधारणया मृत्कार्यजातमेव पूर्वेद्युर्नासीदित्यभिप्रेयात् न दण्डचक्रादि तद्वत् । अद्वितीयश्रुतिरधिष्ठात्रन्तरं वारयति यथा मृदोऽमत्रप्रकृतेः कुम्भकारोऽधिष्ठाता दृश्यते नैवं ब्रह्मणो जगत्प्रकृतेरन्योऽधिष्ठातास्तीति । न च नभसाऽपि द्वितीयेन सद्वितीयं ब्रह्म प्रसज्यते । लक्षणान्यत्वनिमित्तं हि नानात्वं, न च प्रागुत्पत्तेर्ब्रह्म-

---

तथैकवाक्यस्थस्यैकस्यापि सम्भूतशब्दस्य गुणमुख्यार्थभेदो योग्यतावशादित्याह । स्यादेति । उदाहरणान्तरमाह । यथा चेति । अभेदोपचारो भक्तिः । मुख्यमित्याक्षिपति । कथं पुनरिति । स एवाक्षेपं स्फुटयति । नन्विति । अद्वितीयश्रुतिबाधः सर्वविज्ञानप्रतिज्ञाबाधश्चेत्यर्थः । प्रथमाक्षेपं दृष्टान्तेन परिहरति । एकमेवेति । कार्यप-

नभसोर्लक्षणान्यत्वमस्ति। चीरोदकयोरिव संसृष्टयोर्व्यापित्वामूर्त्तत्वादिधर्मसामान्यात्। सर्गकाले तु ब्रह्म जगदुत्पादयितुं यतते स्तिमितमितरत्तिष्ठति तेनान्यत्वमवसीयते। तथाचाकाशशरीरं ब्रह्मेत्यादिश्रुतिभ्योऽपि ब्रह्माकाशयारभेदोपचारसिद्धिः। अत एव च ब्रह्मविज्ञाने सर्वविज्ञानसिद्धिः। अपि च सर्वं कार्यमुत्पद्यमानमाकाशेनाव्यतिरिक्तदेशकालमेवोत्पद्यते ब्रह्मणा चाव्यतिरिक्तदेशकालमेवाकाशं भवति इत्यतो ब्रह्मणा तत्कार्यैण च विज्ञातेन सह विज्ञातमेवाकाशं भवति। यथा चीरपूर्णे घटे कतिचिद्विन्दवः प्रक्षिप्ताः सन्तः चीरग्रहणेनैव गृहीता भवन्ति। न हि चीरग्रहणाद्विन्दुग्रहणं परिशिष्यते। एवं ब्रह्मणा तत्कार्यैश्चाव्यतिरिक्तदेशकालत्वात् गृहीतमेव ब्रह्मग्रहणेन नभो भवति तस्माद्भाक्तं नभसः सम्भवश्रवणमित्येवं प्राप्त इदमाह॥

---

द्वितीयमन्यत्वं प्रागवस्थायामवधारणस्यार्थः। कुले गृहे, अमत्राणि घटादीनि पात्राणि। एकमेवेत्यवधारणसामर्थ्यं कार्यमिति व्याख्याय द्वितीयपदव्याख्यामाह। अद्वितीयश्रुतिरिति। आकाशस्य द्वितीयत्वमङ्गीकृत्याद्वितीयादिपदसङ्कोचः कृतस्तदपि नाङ्गीकुरुत इत्याह। न च नभसापीति। धर्मशब्दे ब्रह्मनभसोः कथं भेदस्तत्राह। सर्गकाले त्विति। धर्मसाम्यादद्वितीयत्वोपचार इत्यर्थे श्रुतिमाह। तथा चाकाशेति। द्वितीयमाक्षेपं परिहरति। अत एवेति। अभेदोपचारादेवेत्यर्थः। नभसो ब्रह्मतत्कार्याभ्यामभिन्नदेशकालत्वाच्च तज्ज्ञाने ज्ञानमित्याह। अपि चेति॥

## प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात मिति' 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इ सर्वं विदितम्' इति 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञा भवति' इति 'न काचन मद्बहिर्धा विद्यास्तीति' चैवंज प्रति वेदान्तं प्रतिज्ञा विज्ञायते। तस्याः प्रतिज्ञाया अ महानिरनुपरोधः स्यात् यद्यव्यतिरेकः कृत्स्नस्य वस्तुजा तस्य विज्ञेयाद्ब्रह्मणः स्यात्। व्यतिरेके हि सति एकविज्ञा नेन सर्वं विज्ञायत इतीयं प्रतीज्ञा हीयेत। स चाव्य तिरेक एवमुपपद्यते यदि कृत्स्नं वस्तुजातमेकस्माद्ब्रह्म उत्पद्येत। शब्देभ्यश्च प्रकृतिविकाराव्यतिरेकन्यायेनैव प्र तिज्ञासिद्धिरवगम्यते। तथा हि येनाश्रुतं श्रुतं भवतीति

---

एवमाकाशस्यानुत्पत्तौ सर्वश्रुतीनामविरोध इत्येकदेशिमत प्राप्तः, तं मुख्यसिद्धान्ती दूषयति। प्रतिज्ञेति। अहानिरबाधः। मयजुराथर्वणाख्याभेदज्ञानशब्दार्थाः इति शब्दाः। न काचनेति ऽऽत्मभिन्नं ज्ञेयं नास्तीत्यर्थः। ननु सर्वस्य ब्रह्माव्यतिरेकात् प्रति ज्ञाया अहानिरिष्टिरस्तु तथापि जीवादिवदनुत्पन्नस्याऽपि नभसो ब्रह्म कल्पितत्वेनाव्यतिरेकात् प्रतिज्ञासिद्धिः किं न स्यात् किमुत्पत्त्ये त्याह। शब्देभ्यश्चेति। अव्यतिरेक एव न्यायस्तेनेत्यर्थः। अयं भा जीवस्य तावदात्मत्वात् ब्रह्माव्यतिरेकः अज्ञानतत्सम्बन्धयोः कल्पित नाव्यतिरेकः स्व न्याज्ञानायोगादज्ञानान्य जडद्रव्यस्य तु कार्यत्वेनैवाव्य तिरेकसिद्धिस्तस्याकार्यत्वे प्रधानवत् स्वातन्त्र्यादव्यतिरेकायोगात्। कि ञ्च न्यायविदः 'नित्यद्रव्याणि स्वतन्त्राणि भिन्नान्यनाश्रितानि' इति, स्यात् प्रतिज्ञासिद्धये आकाशस्य कार्यत्वेनैवाव्यतिरेको वाच्य

प्रतिज्ञाय मृदादिदृष्टान्तैः कार्य्यकारणाभेदप्रतिपादनपरैः प्रतिज्ञैषा समर्थ्यते तत्साधनायैव चोत्तरे शब्दाः 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत तत्तेजोऽसृजत' इति, एवं कार्यजातं ब्रह्मणः प्रदर्श्याव्यतिरेकं प्रदर्शयन्ति 'ऐतदात्म्यमिदं सर्वम्' इत्यारभ्याप्रपाठकसमाप्तेः. तद्यद्याकाशं न ब्रह्मकार्यं स्यात् न ब्रह्मणि विज्ञाते आकाशं विज्ञायेत ततश्च प्रतिज्ञाहानिः स्यात्, न च प्रतिज्ञाहान्या वेदस्याप्रामाण्यं युक्तं कर्तुम्। तथा च प्रति वेदान्तं ते ते शब्दास्तेन तेन दृष्टान्तेन तामेव प्रतिज्ञां ज्ञापयन्ति 'इदं सर्वं यदयमात्मा' 'ब्रह्मैवेदममृतं पुरस्ताद्' इत्येवमादयः, तस्मात् ज्वलनादिवदेव गगनमप्युत्पद्यते। यदुक्तं अश्रुतेर्न वियदुत्पद्यत इति तदयुक्तं वियदुत्पत्तिविषयश्रुत्यन्तरस्य दर्शितत्वात् 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इति, सत्यं दर्शितं, विरुद्धन्तु 'तत्तेजोऽसृजत' इत्यनेन श्रुत्यन्तरेण, नैकवाक्यत्वात् सर्वश्रुतीनां भवति, एकवाक्यत्वमविरुद्धानामिह तु विरोध उक्तः। सकृच्छ्रुतस्य

---

दृष्टान्तदृष्टिमात्रोत्थशब्दानाह। तथा चेति। तेन तेन दृष्टान्तेनेति यजुषि दुन्दुभ्यादिदृष्टान्तेनाथर्वणे ऊर्णनाभ्यादिदृष्टान्तेनेत्यर्थः। यजुषि प्रतिज्ञाबोधका इदं सर्वमितिशब्दाः आथर्वणे ब्रह्मैवेदमिति शब्दा इति भावः। एवमाकाशोत्पत्तिकथनादेकदेशिमते दूषिते मुख्यप्रामाण्यवादिनोक्तं धारयति। सत्यं दर्शितमिति। शब्दविरुद्धन्याह। [illegible]। तत्तेजोऽसृजतेति वाक्यस्य सद्वाकाशतेजोभ्यो युपयत् सम्बन्धे निमित्ताभावात् ब्रह्माकाशं सृष्ट्वा तेजोऽसृजतेति सम्बन्धे तेजःप्राथम्यश्रवणात् [illegible] विरुद्धार्थत्वेन तयोः

## प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात-मिति' 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इ-सर्वं विदितम्' इति 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति च प्रतिवेदान्तं प्रतिज्ञा विज्ञायते । तस्याः प्रतिज्ञाया अ-हानिरनुपरोधः स्यात् यद्यव्यतिरेकः कृत्स्नस्य वस्तुजा-तस्य विज्ञेयाद्ब्रह्मणःस्यात् । व्यतिरेके हि सति एकविज्ञा-नेन सर्वं विज्ञायत इतीयं प्रतीज्ञा हीयेत । स चाव्य-तिरेक एवमुपपद्यते यदि कृत्स्नं वस्तुजातमेकस्माद्ब्रह्मण उत्पद्येत । शब्देभ्यश्च प्रकृतिविकाराव्यतिरेकन्यायेनैव प्र-तिज्ञासिद्धिरवगम्यते । तथा हि येनाश्रुतं श्रुतं भवती-

एवमाकाशस्यानुत्पत्तौ सर्वश्रुतीनामविरोध इत्येकदेशिसिद्धान्ते प्राप्तः, तं मुख्यसिद्धान्ती दूषयति । प्रतिज्ञेति । अहानिरबाधः । मयजुराथर्वणशाखाभेदज्ञानमज्ञाणां इति शब्दाः । न काचनेति आत्मभिन्नं ज्ञेयं नास्तीत्यर्थः । ननु सर्वस्य ब्रह्माव्यतिरेकात् प्रति-ज्ञाया अहानिरित्यस्तु तथापि जीवादिवदनुत्पन्नस्याऽपि नभसो ब्रह्म-कल्पितत्वेनाव्यतिरेकात् प्रतिज्ञासिद्धिः किं न स्यात् किमुत्पत्त्ये-त्याह । शब्देभ्यश्चेति । अव्यतिरेक एव न्यायस्तेनेत्यर्थः । अयं भा-जीवस्य तावदात्मत्वात् ब्रह्माव्यतिरेकः अज्ञानतत्सम्बन्धयोः कल्पित-नाव्यतिरेकः स न्याप्तानायोगादज्ञानान्यजडद्रव्यस्य तु कार्यत्वेनैवाव्य-तिरेकसिद्धिरस्याकार्यत्वे प्रधानवत् स्वातन्त्र्यादव्यतिरेकायोगात् । त-कुन्यायविदः 'नित्यद्रव्याणि स्वतन्त्राणि भिन्नान्यमान्यतानि' इति, यात् प्रतिज्ञासिद्धये आकाशस्य कार्यत्वेनैवाव्यतिरेको वाच्य

प्रतिज्ञाय मृदादिदृष्टान्तैः कार्य्यकारणाभेदप्रतिपादनपरैः प्रतिज्ञैषा समर्थ्यते तत्साधनायैव चोत्तरे शब्दाः 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत तत्तेजोऽसृजत' इति, एवं कार्यजातं ब्रह्मणः प्रदर्श्याव्यतिरेकं प्रदर्शयन्ति 'ऐतदात्म्यमिदं सर्वम्' इत्यारभ्याप्रपाठकसमाप्तेः, तद्यद्याकाशं न ब्रह्मकार्यं स्यात् न ब्रह्मणि विज्ञाते आकाशं विज्ञायेत ततश्च प्रतिज्ञाहानिः स्यात्, न च प्रतिज्ञाहान्या वेदस्याप्रामाण्यं युक्तं कर्तुम्। तथा च प्रति वेदान्तं ते ते शब्दास्तेन तेन दृष्टान्तेन तामेव प्रतिज्ञां ज्ञापयन्ति 'इदं सर्वं यदयमात्मा' 'ब्रह्मैवेदममृतं पुरस्तात्' इत्येवमादयः, तस्मात् ज्वलनादिवदेव गगणमप्युत्पद्यते। यदुक्तं अश्रुतेर्न वियदुत्पद्यत इति तदयुक्तं वियदुत्पत्तिविषयश्रुत्यन्तरस्य दर्शितत्वात् 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इति, सत्यं दर्शितं, विरुद्धन्तु 'तत्तेजोऽसृजत' इत्यनेन श्रुत्यन्तरेण नैकवाक्यत्वात् सर्वश्रुतीनां भवति, एकवाक्यत्वमविरुद्धानामिह तु विरोध उक्तः। सकृच्छ्रुतस्य

---

दृष्टान्तसूचितमार्गोक्तशब्दानाह। तथा चेति। तेन तेन दृष्टान्तेनेति वस्तुषि दुन्दुभ्यादिदृष्टान्तेनार्थ्योर्षे ऊर्णनाभ्यादिदृष्टान्तेनेत्यर्थः। वस्तुषि प्रतिज्ञासाधका इदं सर्वमितिशब्दाः व्यापयन्ते ब्रह्मैवेदमिति शब्दा इति भावः। एवमाकाशोत्पत्तिकथनादेकदेशिमते दूषिते मुख्य प्रामाण्यवादिमतोक्तं स्मारयति। सत्यं दर्शितमिति। मुख्यनिगुन्याह। विरोधेति। तत्तेजोऽसृजतेति सकृच्छ्रुतस्य षट्दाकाशतेजोऽस्या युगपत् सम्बन्धे निमित्तक्रमाभावात् अर्थेनाकाशं सृष्ट्वा तेजो सृजतेति सम्बन्धे तेजःप्राथम्यपदश्रुति विरोधसम्बन्धेन तयोः

स्रष्टुः स्रष्टव्यद्वयसम्बन्धासम्भवात् द्वयोश्च प्रथमजत्वासम्भवा
द्विकल्पासम्भवाच्चेति। नैष दोषः। तेजःसर्गस्य तैत्तिरीयके
तृतीयत्वश्रवणात् 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत
आकाशाद्वायुः वायोरग्निः' इति। अशक्या हीयं श्रुतिरन्य
था परिणेतुं, शक्या परिणेतुं छान्दोग्यश्रुतिः तदा आकाशं
वायुञ्च सृष्ट्वा तत्तेजोऽसृजतेति। न हीयं श्रुतिः तेजोजनि
प्रधाना सती श्रुत्यन्तरप्रसिद्धामाकाशस्योत्पत्तिं वारयितुं शक्नो
ति। एकस्य वाक्यस्य व्यापारद्वयासम्भवात्। स्रष्टा त्वेकोऽपि
क्रमेणानेकं स्रष्टव्यं सृजेत् इत्येकवाक्यत्वकल्पनायां सम्भव
न्त्यां न विरुद्धार्थत्वेन श्रुतिर्हातव्या। न चास्माभिः सकृ

शाखाभेदेन प्राथम्यव्यवस्थाया अयोगादेकवाक्यतेति प्राप्ते सूत्र
दूषयति। नैष दोष इति। अप्रामाण्यकल्पनाद्वारं अपौरुषेयश्रुतीना
मेकवाक्यत्वेन प्रामाण्यकल्पनं तच्चैकवाक्यत्वं बलवच्छ्रुत्या दुर्बलश्रु
कल्प्यं, बलवती च तैत्तिरीयश्रुतिः प्रकृतिपञ्चम्या पौर्वापर्यावगमक
श्रुतत्वात्, छान्दोग्यश्रुतिस्तु दुर्बला। तेजःप्राथम्यश्रुत्यभावात् तेजःसर्ग
मात्रन्तु श्रुतं तृतीयत्वेन परिणेयमित्येकवाक्यतेत्यर्थः। यदुक्तं एकदे
ना छान्दोग्यश्रुत्याकाशोत्पत्तिर्बाध्यत इति तन्निरस्यति। किञ्च सा श्रु
किं तेजजन्मपरा तत्तेजोजन्म वियदनुत्पत्तिश्चेत्युभयपरा, आद्ये
तद्वारणासामर्थ्यात्। न द्वितीय इति। अविरोधादित्यर्थः। न द्वितीयः श्रुत्यन्त
विरोधेनोभयपरत्वकल्पनायोगाद्वाक्यभेदापत्तेश्चेत्याह। एकस्येति। न
कस्य कर्तुरनेकार्थसम्बन्धवद्वाक्यस्याप्यनेकार्थता किं न स्यादित्यत आह
स्रष्टा त्विति। एकस्य कर्तुरनेकार्थसम्बन्धो दृष्टः। न त्वेकस्य वाक्य
नानार्थत्वं दृष्टं 'नानार्थकप्रयोगे तु पद आनर्थक्यादावृत्त्या वाक्यं
एव। आनयनस्य जलक्षीराभ्यां पृथक्सम्बन्धादित्यर्थः। कल्पितत्वा
दित्येकेति। एकस्य शब्दस्यावृत्तिं विनाऽनेकार्थत्वं नास्ति तदनुत्पत्ति
शब्दस्य छान्दोग्य उपसंहृतःकाशादिसम्बन्धार्थमावृत्तिदोषः स्यादि

तस्य स्रष्टुः स्रष्टव्यद्वयसम्बन्धोऽभिप्रेयते, श्रुत्यन्तरवशेन स्रष्ट-व्यान्तरोपसंग्रहात् । यथा च 'सर्वं खल्विदं ब्रह्म तज्जलान्' इत्यत्र साक्षादेव सर्वस्य वस्तुजातस्य ब्रह्मजत्वं श्रूयमाणं न प्रदेशान्तरविहितं तेजःप्रमुखमुत्पत्तिक्रमं वारयति । एवं तेजसोऽपि ब्रह्मजत्वं श्रूयमाणं न श्रुत्यन्तर-विहितं नभःप्रमुखमुत्पत्तिक्रमं वारयितुमर्हति । ननु समविधानार्थमेतद्वाक्यं 'तज्जलानिति शान्त उपासीत' इति श्रुतेर्नैतत् सृष्टिवाक्यं, न तस्मादेतत्प्रदेशान्तरप्रसिद्धं क्रम-मनुरोद्धुमर्हति, तत्तेजोऽसृजतेत्येतत्सृष्टिवाक्यं तस्मादत्र यथा श्रुतिक्रमो ग्रहीतव्य इति, नेत्युच्यते । न हि तेजःप्रा-थम्यानुरोधेन श्रुत्यन्तरप्रसिद्धो वियत्पदार्थः परित्यक्तव्यो भ-वति पदार्थधर्मत्वात् क्रमस्य । अपि च तत्तेजोऽसृजतेति

---

त्याह । न चेति । छान्दोग्यस्थतेजोजन्म आकाशादिजन्मपूर्वकं तेजोजन्म-त्वात् तित्तिरिस्थतेजोजन्मवदित्याकाशादिजन्मोपसंहारे तदाकाशमसृ-जतेति वाक्यान्तरस्यैव कल्पनाप्रसक्तिदोष इत्यर्थः । श्रुत्यन्तरस्थः क्रमः श्रुत्यन्तरे न्याय्य इत्यत्र दृष्टान्तमाह । यथा चेति । सृष्टौ तात्पर्याता-त्पर्याभ्यां दृष्टान्तेतिवैषम्यं शङ्कते । नन्वित्यादिना । तेजःप्राथम्य-स्वीकारे आकाशधर्मो धर्मी तद्धर्मे प्राथम्यं चेति द्वयं श्रुत बाधनीय-मिति गौरवमाकाशप्राथम्यत्यागे केवलतेजःसर्गप्राथम्यमात्रबाध इति लाघव-मिति मत्वाह । नेत्युच्यत इति । किन्तु प्रधानधर्मितेजोगतद्वारं गुण-भूतस्य तेजःप्राथम्यस्य धर्मस्य त्याग इत्याह । न हीति । किञ्च किं सृष्टिपरश्रुतिसिद्धत्वात् तेजःप्राथम्यं त्यज्यते उत प्रथमस्थाने तेजसः सर्गश्रुत्याऽर्थात् प्राथम्यमानादाद्य इत्याह । अपि चेति । द्वितीयमनूद्य दूषयति । कथंचिदिति । यदुक्तं वस्तुनि विकल्पासम्भवादुभयोः प्राथम्यं याथाभेदेन व्यवस्थितं न भवति नाप्युभयोर्हि दध्याङ्कुरवत् सहभयोत्पत्तः

नात्र क्रमस्य वाचकः कश्चिच्छब्दोऽस्ति अर्थात्तु क्रमो गम्य
स च वायोरग्निरित्यनेन श्रुत्यन्तरप्रसिद्धेन क्रमेण निवा
र्यते। विकल्पसमुच्चयौ तु वियज्ज्वलनयोः प्रथमजत्वविषयावस
म्भवानभ्युपगमाभ्यां निवारितौ, तस्मान्नास्ति श्रुत्योर्विप्र
तिषेधः। अपि च छान्दोग्ये 'येनाश्रुतं श्रुतं भवति
इत्येतां प्रतिज्ञां वाक्योपक्रमे श्रुतां समर्थयितुमसमाम्नात
मपि वियदुत्पत्तावुपसंख्यातव्यं किमङ्ग पुनस्तैत्तिरीय
समाम्नातं नभो न संगृह्यते। यच्चोक्तमाकाशस्य सर्वेणान
न्यदेशत्वाद्ब्रह्मणा तत्कार्यैश्च सह विदितमेव तद्भवति, अतो
न प्रतिज्ञा हीयते न चैकमेवाद्वितीयमिति श्रुतिकोप
भवति क्षीरोदकवद्ब्रह्मनभसोरव्यतिरेकोपपत्तेरिति। अ
त्रोच्यते। न क्षीरोदकन्यायेनेदमेकविज्ञानेन सर्वविज्ञा
नं नेतव्यम्। मृदादिदृष्टान्तप्रणयनाद्धि प्रकृतिविकारन्यायेनै
वेदं सर्वविज्ञानं नेतव्यमिति गम्यते। क्षीरोदकन्यायेन
च सर्वविज्ञानं कल्प्यमानं न सम्यग्विज्ञानं स्यात्। न हि
क्षीरज्ञानगृहीतस्योदकस्य सम्यग्विज्ञानगृहीतत्वमस्ति

---

मारभ्य वायोरग्निरिति क्रमबाधापातादिति। तदिति तदिष्टमेवेत्याह। ...
न्तरेति। न केवलं श्रुतिद्वयोरविरोधः सौत्रार्थं [illegible]त्याह। ...
नेति। वियदुपसंख्यानेऽप्यन्वयः। वियदनुत्पत्तिवादिनोऽक्रमकृ
प्रतिज्ञाया अद्वितीयश्रुतेश्च मुख्यार्थतात्पर्याभावाच्च गौणार्थतेति दू
यति। यच्चोक्तमित्यादिना। प्रकृतिविकारन्यायः तदनन्यत्वन्यायः, उदक
क्षीरस्थमपि क्षीरज्ञानाद्य गृह्यते भेदादिति भावः। मास्तु सम्यग्
ज्ञानं श्रुतेर्भ्रान्तिमूलत्वप्रसङ्गादित्याशङ्क्यापौरुषेयत्वान्मैवमित्याह। न

न च वेदस्य पुरुषाणामिव मायालीकवञ्चनादिभिरर्थावधारणमुपपद्यते । सावधारणा चेयमेकमेवाद्वितीयमिति श्रुतिः क्षीरोदकन्यायेन नीयमाना पीड्येत । न च स्वकार्यापेक्षयेदं वस्त्वेकदेशविषयं सर्वविज्ञानमेकाद्वितीयतावधारणञ्चेति न्याय्यम् । मृदादिष्वपि हि तत्सम्भवात् न तदपूर्ववदुपन्यसितव्यं भवति 'श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति' इत्यादिना । तस्मादशेषवस्तुविषयमेवेदं सर्वविज्ञानं सर्वस्य ब्रह्मकार्यतापेक्षयोपन्यस्यत इति द्रष्टव्यम् । यत्पुनरेतदुक्तमसम्भवाद्गौणी गगनस्योत्पत्तिश्रुतिरिति तत्र ब्रूमः ॥ ६ ॥

## यावद्विकारन्तु विभागो लोकवत् ॥ ७ ॥

तुशब्दोऽसम्भवाशङ्काया व्यावृत्त्यर्थः । न खल्वाकाशोत्पत्त्यसम्भवाशङ्का कर्त्तव्या, यतो यावत् किञ्चिद्विकारजातं

---

न चेदस्येति । माया भ्रान्तिः तयाऽलीकं मिथ्याभाषणं तेन वञ्चनमयथार्थबोधनं आदिपदाद्विप्रलिप्साप्रमादकरणापाटवानि गृह्यन्ते । प्रतिज्ञासत्यत्वमभिधायाद्वितीयश्रुतिमुख्यत्वमाह । सावधारणेति । सर्वद्वैतनिषेधपरेत्यर्थः । उभयगौणत्वे ऽङ्गशङ्कुपन्यासो मृदादिदृष्टान्तैस्तत्साधनं च स्यादिति दोषान्तरमाह । न चेदादिना । कार्दमेव वस्त्वेकदेश आकाशो नोत्पद्यते तामपीमुन्य यादित्याकाशो विकारः विभक्तत्वाद्घटादिवदिति सत्प्रतिपक्षमाह । यत्पुनरित्यादिना ।

यो विभक्तः स विकार इत्यन्वयसत्त्वा यस्त्वविकारः स न विभक्तः यथात्मेति व्यतिरेकव्याप्तिमाह । न स्वविकृतं भवति । दिगादिषु व्यभि-

दृश्यते घटघटिकोदञ्चनादि वा कटककेयूरकुण्डलादि वा सूचीनाराचनिस्त्रिंशादि वा तावानेव विभागो लोके श्यते, न त्वविकृतं किञ्चित् कुतश्चिद्विभक्तमुपलभ्यते विभागश्चाकाशस्य पृथिव्यादिभ्योऽवगम्यते, तस्मात् सोऽ विकारो भवितुमर्हति। एतेन दिक्कालमनःपरमाण्वा दीनां कार्यत्वं व्याख्यातम्। नन्वात्माप्याकाशादिभ्यो वि भक्त इति तस्यापि कार्यत्वं घटादिवत् प्राप्नोति न आ न आकाशः सम्भूत इति श्रुतेः। यदि ह्यात्मापि विका स्यात् तस्मात् परमन्यन्न श्रुतमित्याकाशादि सर्वं का निरात्मकमात्मनः कार्यत्वे स्यात्, तथा च शून्यवादः प्र ज्येत। आत्मत्वादेवात्मनो निराकरणशङ्कानुपपत्तिः।

---

चारमाणस्य पक्षसमत्वाच्चैवमित्याह। एतेनेति। विभक्तत्वेनेत्यर्थः। त्मनि व्यभिचारं शङ्कते। नन्विति। धर्मिसमानसत्ताकविभागस्य हेतुत्व परमार्थात्मनि विभागस्य कल्पितत्वेन भिन्नसत्ताकत्वान्न व्यभिचार इत्या नेति। अत्र चात्मानात्मद्रव्यत्वं विशेषणं अतो नात्मानन्तःस्यस्वस्यादौ व्य चारः। नन्वात्मा कार्यः विभक्तत्वात् वस्तुत्वाद्वा घटवदित्याभासतुल्य अनुमानमित्याशङ्क्यात्मनःपरमकारणत्वेन श्रुतस्य कार्यत्वे शून्यताप्रसङ्ग बाधकस्तस्मात् तस्याभासत्वं नान्यत्र किञ्चिद्बाधकमस्ति प्रकृते आकाशस्य कार्यत्वे नित्यानेकद्रव्यकल्पना श्रौतप्रतिज्ञाहान्यादयो बाधकाः सन्ति नाभासतुल्यतेत्याह। आत्मन इति। शून्यप्रसङ्ग इति वदन्तं प्रत्या आत्मत्वादिति। आत्माभावः केनचित् ज्ञायते न वा, आद्ये यो ज्ञात परिशिष्यत इति न शून्यता, द्वितीयेऽपि न शून्यता मानाभावादित्यर्थः किञ्च यदि कार्यं सत्तास्फूर्त्योरन्यापेक्षं तर्हि निराकार्यमात्मा स्वसत्त निरपेक्षत्वान्न बाधयोग्य इत्याह। न ह्यात्मेत्यादिना। कस्य चित्का स्यागन्तुकः कार्यो न हि सत्ता स्फूर्तिरारभ्या यत्नादित्यर्थः

न ह्यात्माऽऽगन्तुकः कस्यचित् स्वयं सिद्धत्वात्। न ह्यात्माऽऽत्मनः प्रमाणमपेक्ष्य सिध्यति। तस्य हि प्रत्यक्षादीनि प्रमाणान्यसिद्धप्रमेयसिद्धये उपादीयन्ते। न ह्याकाशादयः पदार्थाः प्रमाणनिरपेक्षाः स्वयं सिद्धाः केनचिदभ्युपगम्यन्ते॥ आत्मा तु प्रमाणादिव्यवहाराश्रयत्वात् प्रागेव प्रमाणादिव्यवहारात् सिध्यति। न चेदृशस्य निराकरणं सम्भवति। आगन्तुकं हि वस्तु निराक्रियते न स्वरूपम्। य एव हि निराकर्ता तदेव तस्य स्वरूपम्। न ह्यग्नेरौष्ण्यं अग्निना निराक्रियते, तथाहमेवेदानीं जानामि वर्तमानं वस्तु अहमेवातीतमतीततरञ्चाज्ञासिषमहमेवानागतमनागततरञ्च ज्ञास्यामीत्यतीतानागतवर्तमानभावेनान्यथा भवत्यपि

---

त्व स्फूर्तेरनन्यायत्तत्वं विवृणोति। न हीति। तदुक्तं सुरेश्वराचार्यैः॥

"प्रमाता च प्रमाणञ्च प्रमेयं प्रमितिस्तथा।
यस्य प्रसादात् सिध्यन्ति तत्सिद्धौ किमपेक्षते" ॥ इति ॥

था श्रुतिराह 'पुरुषः स्वयं ज्योतिस्तस्य भासा सर्वमिदं विभाति' इति व। नन्वात्मनः स्वतः सिद्धौ प्रमाणवैयर्थ्यं तत्राह। तस्येति। ननु प्रमेयस्यापि स्वप्रकाशत्वं किं न स्यादित्यत आह। न हीति। अतो न प्रमाणवैयर्थ्यमिति भावः। आत्माऽपि मानाधीनसिद्धिकः किं न स्यादित्यत आह। आत्मा त्विति। अयमर्थः निश्चितसत्ताकं हि ज्ञानं प्रमेयसत्तानिश्चायकं तेन घटो दृष्टो न वेति ज्ञानसंशयेन दृष्टः इति व्यतिरेकनिश्चये कार्यस्वरूपानिश्चयात् ज्ञानसत्तानिश्चयश्च न स्वतः, कार्यस्य स्वप्रकाशत्वायोगाच्चापि ज्ञानान्तरादनवस्थानादतः साक्षिणैव ज्ञानसत्तानिश्चयो वाच्यः। स्य कल्पनायां तु ज्ञानाधीनसत्तानिश्चयः अन्योन्याश्रयः स्यादतः सर्वसाधकत्वादात्मा स्वतः सिद्ध इति। स्वप्रकाशस्यापि बाधः किं न स्यादित्यत

ज्ञातव्ये न ज्ञातुरन्यथाभावोऽस्ति सर्वदा वर्तमानस्वभावत्वात्, तथा भस्मीभवत्यपि देहे नात्मन उच्छेदो वर्तमानस्वभावत्वादन्यथास्वभावत्वं वा न सम्भावयितुं शक्यम्। एवमप्रत्याख्येयस्वभावत्वादेवाकार्यत्वमात्मनः कार्यत्वञ्चाकाशस्य। यत्तूक्तं समानजातीयमनेकं कारणद्रव्यं व्योम्नो नास्तीति तत् प्रत्युच्यते, न तावत् समानजातीयमेवारभते न भिन्नजातीयमिति नियमोऽस्ति न हि तन्तूनां तत्संयोगानाञ्च समानजातीयत्वमस्ति द्रव्यगुणत्वाभ्युपगमात्। न च निमित्तकारणानामपि तुरीवेमादीनां समानजातीयत्वनियमोऽस्ति। स्यादेतत् समवायिकारणविषय एव समानजातीयत्वाभ्युपगमो न कारणान्तरविषय इति

---

व्याह। न चेति। जडं हि परायत्तप्रकाशत्वादागन्तुकं बाधयोग्यं न प्रकाशात्मस्वरूपं, तस्य सर्वबाधसाक्षिस्वरूपस्य निराकर्त्रन्तराभावात् स्वस्य स्वनिराकर्तृत्वायोगात्। न हि सुनिपुणेनापि स्वाभावो द्रष्टुं शक्यत इत्यर्थः। एवं स्वतः स्फूर्तित्वादात्माऽबाध्य इत्युक्त्वा स्वतःसत्ताकत्वान्न बाध्य इत्याह। तथाहमेवेति। ज्ञानज्ञेययोः सत्ताव्यभिचारेऽपि ज्ञातुः सदेकरूपत्वान्न सत्ताव्यभिचार इत्यर्थः। मास्तु जीवतो ज्ञातुरभावः मृतस्य तु स्यादित्यत आह। तथेति। उच्छेदो विनाशोऽन्यथास्वभावत्वं मिथ्यात्वं वा सम्भावयितुमपि न शक्यं, अनुभवसिद्धसत्स्वभावस्य बाधकाभावादित्यर्थः। एवमात्मनः शून्यत्वनिरासेन शून्यताप्रसङ्गस्यानिष्टत्वमुक्तं, ततश्चात्मनः कार्यत्वानुमानं व्याभास इत्याह एवमिति। अकार्यात्मनः सिद्धौ तस्याविद्यासहितस्योपादानस्यादृष्टादिनिमित्तस्य च सत्त्वादाकाशानुत्पत्तिहेतोः सामग्रीशून्यत्वस्य स्वरूपासिद्धिरुक्तमतिप्रसङ्गबाधाच्चाकाशस्य कार्यत्वं निरवद्यमित्याह। कार्यत्वञ्चेति। व्याकाशविद्यमानविजातीयत्वाच्चाकाशारम्भकत्वमित्युक्तमनूद्य निरस्यति

तदप्यनैकान्तिकम् । सूत्रगोबालैश्चानेकजातीयैरेका रज्जुः सृज्यमाना दृश्यते । तथा सूत्रैरूर्णादिभिश्च विचित्रान् कम्बलान् वितन्वते । सत्त्वद्रव्यत्वाद्यपेक्षया वा समानजातीयत्वे कल्प्यमाने नियमानर्थक्यं सर्वस्य सर्वेण समानजातीयकत्वात्, नाप्यनेकमेवारभते नैकमिति नियमोऽस्ति । अणुमनसोराद्यकर्मारम्भाभ्युपगमात् । एकैको हि परमाणुः मनश्चाद्यं स्वकर्मारभते न द्रव्यान्तरैः संहत्येत्यभ्युपगम्यते । द्रव्यारम्भे एवानेकारम्भकत्वनियम इति चेन्न, परिणामाभ्युपगमात् । भवेदेष नियमो यदि संयोगसचिवं द्रव्यं द्रव्यान्तरस्यारम्भकमभ्युपगम्येत । तदेव तु द्रव्यं विशेषवदवस्थान्तरमापद्यमानं कार्यं नामाभ्युपगम्यते तच्च क्वचिदनेकं परिणमते मृद्बीजाद्यङ्कुरादिभावेन क्वचिदेकं

---

नित्यत्वादिना । किं कारणमात्रस्य साजात्यनियमः उत समवायिनः त्वाद्यं निरस्य द्वितीयं शङ्कते । स्यादेतदिति । किं समवायितावच्छेदकधर्मेण साजात्यं उत सत्तादिना, नाद्य इत्याह । तदपीति । न च त्त्वादि न द्रव्यान्तरमिति वाच्यं पटादेरपि तथात्वापाताद्द्वितीयोऽप्यदृष्टः, आत्माविद्ययोर्वस्तुत्वेन साजात्यादित्याह । सत्त्वेति । उपादानस्य साजात्यनियमं निरस्य संयुक्तानेकत्वनियमाद्द्वितीयस्याद्वयस्याप्यात्मन पादानत्वसिद्धये निरस्यति । नापीत्यादिना । क्रियारम्भकमात्रस्यायं नियमः उत द्रव्यारम्भकस्य नाद्य इत्याह । अस्तीति । अणुकस्य मनस चासमवायिकारणसंयोगजनकमाद्यं कर्म, यद्यपरदेशसंयुक्ते अणुमनसी आद्यकर्मारम्भके तथापि कर्मसमवायिन एकत्वादनेकत्वनियमभङ्ग इत्याह । एकैको हीति । द्रव्यान्तरैः समवायिभिरित्यर्थः । तीयतुल्यात्यारम्भादानङ्गीकारेण दूष्यति । श्लोकादिना । न सम्भु-

परिणमते चीरादिदध्यादिभावेन। नेश्वरशासनमस्त्वं क्रमेव कारणं कार्यं जनयतीति, अतः श्रुतिप्रामाण्यात् कस्माद्ब्रह्मण आकाशादिमहाभूतोत्पत्तिक्रमेण जगज्जन्म मितिनिश्चीयते। तथाचोक्तं 'उपसंहारदर्शनान्नेति चेन्न चीरवद्धि' [ब्रा० सू० २।१।२४] इति। यच्चोक्तमाकाशस्योत्पत्तौ न पूर्वोत्तरकालयोर्विशेषः सम्भावयितुं शक्यत इति तदयुक्तं, येनैव हि विशेषेण पृथिव्यादिभ्यो व्यतिरिच्यमानं नभःस्वरूपवदिदानीमध्यवसीयते स एव विशेषः प्रागुत्पत्तेर्नासीदिति गम्यते। यथाच ब्रह्म न स्थूलादिभिः पृथिव्यादिस्वभावैः स्वभाववत् 'अस्थूलमनण्वित्यादिश्रुतिभ्यः' एवमाकाशस्वभावेनापि न स्वभाववदनाकाशमिति श्रुतेरवगम्यते, तस्मात् प्रागुत्पत्तेरनाकाशमच्छिद्रमिति स्थितम्। यदप्युक्तं पृथिव्यादिवैधर्म्यादाकाशस्याजत्वमि[ति]

---

[अ]वगम्यते तस्मादेव नियम इति शेषः। यत्तु, चीरपरमाणुषु रसान्तरोत्पत्तौ तैरव दध्यारब्ध इति तन्न, चीरनाशे मानाभावात् रसान्तरेऽप्येकद्रव्यारभ्यत्वसम्भवाच्च द्रव्यगुणसङ्केतस्य पौरुषेयस्य श्रुत्यर्थे याचेतुत्वादिति भावः। लोके कर्तुः सहायदर्शनात् असहायादुब्र[ह्मणः] कथं सर्ग इति तत्राह। तथा चोक्तमिति। प्रागभावशून्यत्वं हेतुरसिद्ध इत्याह। यच्चोक्तमित्यादिना। शब्दाश्रयत्वं विशेषः शब्दादिमानाकाशः प्रलये नास्ति 'नासीद्रजो नो व्योम' इति श्रुतेः। नन्वाकाशाभावे काठिन्यं स्यादिति चेत्, सुशिक्षितोऽयं नैयायिकतनयः। न ह्याकाशाभावस्तद्धर्मो वा काठिन्यं किन्तु मूर्तद्रव्यविशेषः तत्संयोगो वा काठिन्यं, तच प्रलये नास्तीति भावः। 'आकाशशरीरं ब्रह्म' इति श्रु[ते]रस्त्वोपपद्ब्रह्मस्वभावस्याकाशस्य सति ब्रह्मणि कथमभावस्तत्राह। अ[स्थूल]मेति। विभुत्वादाकाशसमं ब्रह्मेति श्रुत्यर्थः। विभुत्वासर्वद्रव्यनिर[पेक्ष]...

तदप्यसत्, श्रुतिविरोधे सत्युत्पत्त्यसम्भावानुमानस्याभासत्वोपपत्तेः, उत्पत्त्यनुमानस्य च दर्शितत्वात्, अनित्यमाकाशमनित्यगुणाश्रयत्वात् घटादिवदित्यादि प्रयोगसम्भवाच्च। आत्मनानैकान्तिकमिति चेत् न, तस्योपनिषदं प्रत्यनित्यगुणाश्रयत्वासिद्धेः। विभुत्वादीनाञ्चाकाशस्योत्पत्तिवादिनं प्रत्यसिद्धत्वात्। यच्चोक्तमेतच्छब्दाच्चेति तत्रामृतत्वश्रुतिस्तावद्वियत्यमृता दिवौकस इतिवद्द्रष्टव्या। उत्पत्तिप्रलययोरुपपादितत्वात् ‘आकाशवत् सर्वगतश्च नित्यः’ इत्यपि प्रसिद्धमहत्त्वेनाकाशेनोपमानं क्रियते, निरतिशयमहत्त्वाय नाकाशसमत्वाय यथेषुरिव सविता धावतीति चि-

---

प्रत्यसिद्धतां विभुत्वादिलिङ्गस्याहितागमबाधमाह। यदपीत्यादिना। धर्मिविकाराभावे गुणनाशो न स्यादिति तदर्थमनित्यपदं गुणाश्रयत्वमेव हेतुः, तच्च स्वसमानसत्ताकगुणवत्त्वमतो निर्गुणात्मनि न व्यभिचारः। भूतत्वमादिपदार्थः। स्वरूपासिद्धिमप्याह। विभुत्वादीनाञ्चेति। सर्वमूर्तसंयोगः परिमाणविशेषो वा विभुत्वं निर्गुणात्मनि दृष्टान्तेनासिद्ध संयोगस्य सावयवत्वनियतस्याजत्वसाध्यविरुद्धता च, स्वरूपोपचयरूपं तु विभुत्वमात्माकाशयोर्न समं, ‘ज्यायानाकाशात्’ इति श्रुतेः। क्वचिदाकाशवाच्यन्तु ब्रह्मणो यत्किञ्चित् सर्वसम्बन्धेन व्यपदिश्यते असङ्गत्वेन वा पञ्चीकरणादसर्वगत्वमसिद्धं कार्यद्रव्यत्वान्निरवयवत्वमप्यसिद्धं, द्रव्यत्वजातिश्चात्मन्यसिद्धेत्यर्थः। नित्य इत्यंशेन साम्यं न विवक्षितम्। ननु यथाऽनन्तोऽयमाकाश एवमनन्त आत्मेति श्रुतिर्नित्यत्वेनैव साम्यं ब्रूते नेत्याह। एतेनेति। आकाशस्य कार्यत्वेनानित्यत्वादित्यर्थः। श्रुतिस्त्वापेक्षिकाऽऽनन्त्यद्वारा मुख्याऽऽनन्त्यं बोधयतीति भावः। ब्रह्मणोऽप्याकाशस्य न मुख्योपमानत्वमित्याह। ज्यायानिति। मुख्योपमानाभावे श्रुतिर्न तदेति

प्रगतित्वायोच्यते नैपुणतुल्यगतित्वाय तद्वत्। एतेनानन्त्वोपमानश्रुतिर्व्याख्याता। ज्यायानाकाशादित्यादिश्रुतिस्थस्य ब्रह्मणः सकाशात् आकाशस्योनपरिमाणत्वसिद्धिः। तस्य प्रतिमास्तीति च ब्रह्मणोऽनुपमानत्वं दर्शयति, अतोऽन्यदार्त्तम्' इति च ब्रह्मणोऽन्येषामाकाशादीनामार्त्तत्वं दर्शयति। तपसि ब्रह्मशब्दवत् आकाशस्य जन्मश्रुतेर्गौणत्वमित्येतदाकाशसम्भवश्रुत्यनुमानाभ्यां परिहृतं, तस्मात् ब्रह्मकार्यं वियदिति सिद्धम्॥

## एतेन मातरिश्वा व्याख्यातः॥ ८॥

अतिदेशोऽयं एतेन वियद्व्याख्यानेन मातरिश्वापि वियदाश्रयो वायुर्व्याख्यातः। तत्राप्येते यथायोगं पक्षा रचयितव्याः। न वायुरुत्पद्यते, छन्दोगानामुत्पत्तिप्रकरणेऽनाम्नानादित्येकः पक्षः, अस्ति तु तैत्तिरीयाणामुत्पत्तिप्रकरणे आम्नानं 'आकाशाद्वायुरिति पक्षान्तरम्। ततश्च श्रुत्यो

---

तस्मादाकाशस्योपमानमात्रेण नित्यत्वं नास्तीति भावः। अनित्यत्वे नाश[...]श्रुतिमाह। अतोऽन्यदिति। यत्तु, एकस्यैव सम्भूतशब्दस्य गौणत्वं मुख्यत्वं [...]स्यादिति तन्न, आकाशोऽपि तस्य मुख्यत्वसम्भवादित्याह। तपसीति [...] यत्रवृत्तिस्तैत्तिरीयश्रुत्या छान्दोग्यश्रुतेर्नयनादेकवाक्यतया सृष्टिर्ब्रह्मात्मा[...] समन्वय इत्युपसंहरति। तस्मादिति॥

एतेन मातरिश्वा व्याख्यातः। अतिदेशत्वान्न पृथक् सङ्गत्याद्यपेक्षा[...] तत्तेजोऽसृजतेति श्रुतेः। आकाशाद्वायुरिति श्रुत्या विरोधोऽस्ति न वा [...] एकवाक्यभावाभावाभ्यां संशये गौणपक्षपूर्वपक्षसिद्धान्तपक्षावतिदिशति [...] तत्रामोत्यादिना। पूर्वत्र ह्याकाशानन्तर्यं तेजसः स्थापितं तत्र वायु[...]

विप्रतिषेधे सति गौणी वायोरुत्पत्तिश्रुतिः असम्भवादित्ययं पराऽभिप्रायः, असम्भवश्च दर्शितः। 'सैषाऽनस्तमिता देवता यद्वायुः' इत्यस्तमयप्रतिषेधादमृतत्वादिश्रवणाच्च प्रतिज्ञानुपरोधाद्यावद्विकारञ्च विभागाभ्युपगमादुत्पद्यते वायुरिति सिद्धान्तः। अस्तमयप्रतिषेधो अपरविद्याविषय आपेक्षिकः, अग्न्यादीनामिव वायोरस्तमयाभावात्। कृतं प्रतिविधानञ्चामृतत्वादिश्रवणम्। ननु वायोराकाशस्य च तुल्ययोरुत्पत्तिप्रकरणे श्रवणाश्रवणयोरेकमेवाधिकरणमुभयविषयमस्तु किमतिदेशेनासति विशेषे इति, उच्यते, सत्यमेवमेतत्, तथापि मन्दधियां शब्दमात्रकृताशङ्कानिवृत्त्य-

---

तेजसो वायुजत्वश्रवणादन्यथा वायोरन्यतः श्रुतिबाधात् पौर्वापर्ये तेजः प्राथम्यभङ्गाच्चेत्याकाशवदिति पूर्वपक्षे गौणश्रुत्यभिप्रायमाह। सैषेति। अस्तमयप्रतिषेधो मुख्योत्पत्त्यसम्भवे लिङ्गं, वायुरन्तरिक्षं चैतदमृतमिति। तस्यैव लिङ्गस्य व्याख्यासः वायुरेव व्यष्टिः समष्टिरिति सर्वात्मत्वलिङ्गान्तरमादिपदार्थः। तथा संवर्गविद्यायां वायुर्वावैतान् सर्वानग्न्यादीन् संहरतीति शब्दगम्यं सर्वसंहर्तृत्वं लिङ्गान्तरं ग्राह्यम्। एतैर्लिङ्गैर्वायुरनाद्यनन्त इति प्रतीतेरुत्पत्तिश्रुतिर्गौणीत्यविरोधः। श्रुत्योरिति प्राप्ते प्रतिपिपादयिषितप्रकरणस्थश्रुतेर्बलीयस्त्वात् तद्बाधकानां तत्र तत्र वायूपासनावाक्यानां भूयस्त्वादुक्तविभक्त्यादिलिङ्गानुपपत्त्या च मुख्यैव वायोरुत्पत्तिः, तथा चाकाशं वायुश्च सृष्ट्वा तेजोऽसृजतेति श्रुत्योरेकवाक्यतया ब्रह्मणि समन्वयः। लिङ्गानि तूपास्यवायुस्तावकत्वादापेक्षिकतया व्याख्येयानीति मुख्यसिद्धान्तमाह। प्रतिज्ञेत्यादिना। कृतं प्रतिविधानं आपेक्षिकत्वेन समाधानं लिङ्गस्य तद्वा। अधिकरणारम्भमाक्षिप्याकाशाधिकरणेनाह। नन्वित्यादिना। वायुर्वावैतान् सर्वान् संवृङ्क्ते इत्यादिशब्दमात्रं शङ्कामूलं नार्थं

र्थोऽयमतिदेशः क्रियते । संवर्गविद्यादिषु ह्युपास्यत्व वायोर्महाभागत्वश्रवणात्, अस्तमयप्रतिषेधादिभ्यश्च भव नित्यत्वाशङ्का कस्यचिदिति ॥ ८ ॥

## असम्भवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

वियत्पवनयोरसम्भाव्यमानजन्मनोरप्युत्पत्तिमुपश्रु ब्रह्मणोऽपि भवेत् कुतश्चिदुत्पत्तिरिति स्यात् कस्यचिन्मति तथा विकारेभ्य एवाकाशादिभ्य उत्तरेषां विकाराणा त्पत्तिमुपश्रुत्याकाशस्यापि विकारादेव ब्रह्मण उत्पत्तिरि कश्चिन्मन्येत, तामाशङ्कामपनेतुमिदं सूत्रम् । असम्भ विति । न खलु ब्रह्मणः सदात्मकस्य कुतश्चिदन्यतः सं उत्पत्तिराशङ्कितव्या, कस्मात् अनुपपत्तेः, सन्मात्रं ब्रह्म न तस्य सन्मात्रादेवोत्पत्तिः सम्भवति, असत्यति

---

इति द्योतनार्थं मात्रपदम् । तामेव शङ्कामाह । संवर्गेति । अ समुद्रप्राप्तिशौर्यं दिशां यत्र वेदेत्युपास्तिश्चादिशब्दार्थः ॥

असम्भवस्तु सतोऽनुपपत्तेः । 'अनाद्यनन्तं महतः परं ध्रु चास्य कश्चिज्जनिता' इत्यादि ब्रह्मानादित्वश्रुतीनां त्वं जातो भ विश्वतोमुख इत्युत्पत्तिश्रुत्या विरोधोऽस्ति नेवेत्यक्रमाक्रमभावाभावा सन्देहे अस्ति विरोध इति पूर्वपक्षे यथा शब्दादेरन्यतमस्यादित्वमुत्पत्तिश्रु त्वादापेक्षिकं तथा ब्रह्मानादित्वं स्यादापेक्षिकमिति दृष्टान्तसङ्गत्या एकदे पक्षं प्रापयति । वियदिति । ब्रह्म कुतश्चिज्जायते कारणत्वादाका दिवत् इत्यनुमानानुगृहीतजन्मश्रुतिर्बलीयसीत्याह । तत्रेति । न चा दिकारणाभावेनानवस्था बीजाङ्कुरवदनादित्वोपपत्तेः । तथा च दीप दीपवद्ब्रह्मान्तराद्ब्रह्मान्तरोत्पत्तिः, उत्पत्तिश्रुत्या चानादित्वश्रुति

प्रकृतिविकारभावानुपपत्तेः। नापि सद्विशेषात् दृष्टविपर्ययात् सामान्याद्धि विशेषा उत्पद्यमाना दृश्यन्ते। मृदादेर्घटादयो न तु विशेषेभ्यः सामान्यं नाप्यसतो निरात्मकत्वात्, कथं 'असतः सज्जायेत' इति चाक्षेपश्रवणात् 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' इति च ब्रह्मणो जनयितारं वारयति। वियत्पवनयोः पुनरुत्पत्तिः प्रदर्शिता न तु ब्रह्मणः साऽस्तीति वैषम्यम्। न च विकारेभ्यो विकारान्तरोत्पत्तिदर्शनाद्ब्रह्मणोऽपि विकारत्वं भवितुमर्हतीति मूलप्रकृत्यनभ्युपगमेऽनवस्थाप्रसङ्गात्। या मूलप्रकृतिरभ्युपगम्यते तदेव च नो ब्रह्मेत्यविरोधः॥

.......................................................................

त्यनाद्यनन्तब्रह्मसमन्वयासिद्धिरिति प्राप्ते मुख्यसिद्धान्तमाह। तार्किति। ब्रह्म न जायते कारणशून्यत्वाच्छशविषाणवद्व्यतिरेकेण घटवदित्यनुमानादुपपत्तिपक्षे चाकारणकार्यवादप्रसङ्गाद्ब्रह्मानादित्वश्रुतयो बलीयस्य इति कारणत्वलिङ्गबाधाज्जन्मश्रुतिः कार्यभेदेन व्याख्येयेत्यनाद्यनन्तब्रह्मसमन्वयसिद्धिरिति सिद्धान्तफलम्। न च हेत्वसिद्धिः कारणस्यानिरूपणात्। तथा हि किं सन्मात्रस्य ब्रह्मणः सन्मात्रमेव सामान्यं कारणं सद्विशेषो वा उभयथा न सम्भवतीत्याह। सन्मात्रं चेत्यादिना। दीपस्तु दीपान्तरे निमित्तमित्युदाहरणम्। वियत्पवनयोर्ब्रह्मणश्च विभक्तत्वाविभक्तत्वाभ्यां कारणभावाभावाभ्यां च वैषम्यम्। कारणत्वलिङ्गस्याप्रामाणिकानवस्था। तर्कस्यापि बाधमाह। न च विकारेभ्य इत्यादिना। कारणस्यानभ्युपगमे असत्कार्यवादप्रसङ्गः, अनादिकारणानभ्युपगमेऽनवस्थाप्रसङ्गः, तदभ्युपगमे ब्रह्मवादप्रसङ्गः, कारणान्तरस्य प्रधानादेर्निरासादिति भावः॥

## तेजोऽतस्तथाह्याह ॥ १० ॥

छान्दोग्ये सन्मूलत्वं तेजसः श्रावितं, तैत्तिरीयके तु वायुमूलत्वं, तत्र तेजोयोनिं प्रति श्रुतिविप्रतिपत्तौ सत्यां प्राप्तं तावत् ब्रह्मयोनि तेजः इति। कुतः, सदेवेत्युपक्रम्य तत्तेजोऽसृजतेत्युपदेशात्, सर्वविज्ञानप्रतिज्ञायाश्च ब्रह्मप्रभवत्वे सर्वस्य सम्भवात्, तज्जलानिति चाविशेषश्रुतेः, एतस्माज्जायते प्राण इति चोपक्रम्य श्रुत्यन्तरे सर्वस्याविशेषेण ब्रह्मजत्वोपदेशात्, तैत्तिरीयके च 'स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किञ्च' इत्यविशेषश्रवणात्। तस्माद्वायोरग्निरिति क्रमोपदेशो द्रष्टव्यः, वायोरनन्तरमग्निः सम्भूत इति, एवं प्राप्ते उच्यते। तेजोऽतो मातरिश्वनो जायत इति। कस्मात् तथाह्याह 'वायोरग्निः' इति। अव्यवहिते हि तेजसो ब्रह्मजत्वे सत्यसति वायुजत्वे वायोरग्निरिती

तेजोऽतस्तथाह्याह। 'तत्तेजोऽसृजत' इति 'वायोरग्निः' इति च श्रुत्योर्विरोधोऽस्ति न वेति सन्देहे सामान्यात् सामान्योत्पत्त्यसम्भवेऽपि ब्रह्मवाय्वोः सामान्ययोस्तेजोरूपविशेषोपादानत्वसम्भवात् व्यवस्थया विरोध इति प्रत्युदाहरणेन पूर्वपक्षः सर्वत्राध्यायसमाप्तेरेकवाक्य सम्भवासम्भवौ संशयबीजम्। पूर्वपक्षे श्रुतीनां विरोधादप्रामाण्यं सिद्धान्ते प्रामाण्यमित्युक्तं न विस्मर्तव्यम् एवं पूर्वपक्षे कार्यमात्रस्य ब्रह्म त्वात् कल्पितस्य वायोस्तेजःकल्पनाधिष्ठानत्वायोगात् ब्रह्मैव तेजस उपादानं सर्वकार्याणां ब्रह्मैवोपादानमित्यर्थे श्रुतीनां भूयस्त्वाच्च तदनुरोधा द्वायोरिति क्रमार्था पञ्चमीत्यविरोध इत्येकदेशिसिद्धान्तं प्रापयति प्राप्तं तावद्ब्रह्मयोनि तेज इत्यादिना। श्रुतीनां विरोधमात्रोपन्यासे पूर्वपक्षः अपसिद्धान्ते नाविरोधात् तावदेकदेशिपक्ष इति ज्ञेयम्। तदु यमपि मुख्यसिद्धान्तापेक्षया पूर्वपक्षत्वेन व्यवस्थियते। सिद्धान्तयति

श्रुतिः कदर्थिता स्यात्। ननु क्रमार्थैषा भविष्यतीत्युक्तं नेति ब्रूमः। 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इति पुरस्तात् सम्भवति अपादानभूतात्मनः पञ्चमीनिर्देशात् तस्यैव च सम्भवतेरिहाधिकारात् परस्तादपि तदधिकारे पृथिव्या ओषधयः इत्यपादाने पञ्चमीदर्शनाद्वायोरग्निरित्यपादानपञ्चम्यैवैषेति गम्यते। अपि च वायोरूर्ध्वमग्निः सम्भूत इति कल्प्य उपपदार्थयोगः, क्लृप्तस्तु कारकार्थयोगः वायोरग्निः सम्भूत इति तस्मादेषा श्रुतिर्वायुयोनित्वं तेजसोऽवगमयति नन्वितरापि श्रुतिर्ब्रह्मयोनित्वं तेजसोऽवगमयति तत्तेजोऽसृजतेति। न तस्याः पारम्पर्यजत्वेऽप्यविरोधात्। यदापि ह्याकाशं वायुञ्च सृष्ट्वा वायु

---

एवं प्राप्त इति। कदर्थिता बाधितार्थेति यावत्। वायोस्तेजःप्रकृतित्वं पञ्चमीश्रुत्या निर्धारितं, न च कल्पितस्योपादानत्वासम्भवः, अधिष्ठानत्वासम्भवेऽपि रज्ज्वादिवत्परिणामित्वसम्भवात्, सतस्तु ब्रह्मणः छान्दोग्ये स्रष्टृत्वमात्रं श्रुतं नोपादानत्वम्। न च बहु स्यामिति कार्याभेदश्रवणलिङ्गादुपादानत्वसिद्धिः लिङ्गात् श्रुतेर्बलीयस्त्वेन श्रुत्यविरोधेन लिङ्गस्य नेयत्वात्। नयनञ्चेत्थं वायोर्ब्रह्मानन्यत्वाद्वायुजस्यापि तेजसो ब्रह्मप्रकृतिकत्वमविरुद्धमिति सिद्धान्त्यभिप्रायः। इहाधिकारादिति वायोरग्निः सम्भूत इति वाक्ये सम्भवतेरित्यर्थः। तदधिकारे सम्भूत्यधिकारे निरपेक्षकारकविभक्तेरुपपदसापेक्षविभक्त्यपेक्षया प्रबलत्वाच्च न क्रमार्थां पञ्चमीत्याह। अपि चेति। ऊर्ध्वमनन्तरमिति चोपपदं विना पञ्चमीमात्रात् क्रमो न भातीति कल्प्य उपपदार्थयोगः प्रकृत्यर्थोपादानकारकन्तु निरपेक्षपञ्चम्या भाति विशेषतोऽत्र प्रकरणादपादानार्थत्वं पञ्चम्याः क्लृप्तं सति विरोधे बाध्यमिति स्थितिरित्यर्थः। पारम्पर्यजत्वमेवाह। यदापीति। तथा धेनोः सृतं यत् क्षीरं साक्षात् कार्यं दध्यादिकन्तु

भावापन्नं ब्रह्म तेजोऽसृजतेति कल्प्यते तदापि ब्रह्मजत्वं तेजसो न विरुध्यते, यथा तस्याः शृतं तस्या दधि तस्या आमिक्षेत्यादि। दर्शयति च ब्रह्मणो विकारात्मनावस्थानं 'तदात्मानं स्वयमकुरुत' इति। तथा चेश्वरस्मरणं भवति 'बुद्धिर्ज्ञानमसंमोह' इत्याद्यनुक्रम्य 'भवन्ति भावा भूतानां मत्त एव पृथग्विधाः' इति। यद्यपि बुद्ध्यादयः स्वकारणेभ्यः प्रत्यक्षं भवन्तो दृश्यन्ते तथापि सर्वस्य भावजातस्य साक्षात् प्रणाड्या वा ईश्वरवंश्यत्वात्। एतेनाक्रमसृष्टिवादिन्यः श्रुतयो व्याख्याताः तासां सर्वथोपपत्तेः क्रमवत्सृष्टिवादिनीनामन्यथानुपपत्तेः प्रतिज्ञापि सद्वंश्यत्वमात्रमपेक्षते नाव्यवहितजन्यत्वमित्यविरोधः॥

## आपः॥ ११॥

अतस्तथाह्याहेत्यनुवर्तते। आपोऽतस्तेजसो जायन्ते।

पारम्पर्यजत्वमित्यर्थः। दधि संहतं कठिनक्षीरमामिक्षा। ब्रह्मणो वि- भावे मानमाह। दर्शयति चेति। पारम्पर्यजस्यापि तज्जत्वम्- स्मृतिमाह। तथा चेति। अन्तःकरणादिभ्यो जायमानबुद्ध्यादीनां मत्त एवेत्यवधारणं कथमित्याशङ्क्याह। यद्यपीत्यादिना। प्रणाड्या पर- म्परया ईश्वरसंश्लेषात् तज्जत्वात् परमकारणान्तरनिरासार्थं अवधारणमुक्तमिति शेषः। एतत्पदार्थमाह। तासामिति। तज्जत्वानिर्वा- वस्तूनां साक्षात् प्रणाड्या वा ब्रह्मजत्वस्य सर्वथोपपत्तेरित्यर्थः। क्र- मश्रुतीनां जगत्क्रमसृष्ट्यनुसारेण क्रमायत्याद्वियद्वायुद्वारा तेजःका- ब्रह्मणि समन्वय इति सिद्धम्॥

आपः। अतिदेशोऽयं तथा ह्याथर्वणे मुण्डकश्रुतौ 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य

कस्मात् तथाह्याह 'तदपोऽसृजत' इति 'अग्नेरापः' इति च। सति वचने नास्ति संशयः। तेजसस्तु सृष्टिं व्याख्याय पृथिव्या व्याख्यास्यन्नपोऽन्तरायमीत्याप इति सूत्रयाम्बभूव॥

**पृथिव्यधिकाररूपशब्दान्तरेभ्यः॥ १२॥**

'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त' इति श्रूयते। तत्र संशयः। किमनेनान्नशब्देन व्रीहियवाद्यभ्यवहार्यं वौदनाद्युच्यते किं वा पृथिवीति। तत्र प्राप्तं तावत् व्रीहियवाद्योदनादि वा परिग्रहीतव्यमिति, तत्र ह्यन्नशब्दः प्रसिद्धो लोके वाक्यशेषोपेतमर्थमुपोद्बलयति, तस्माद्यत्र क्वचन वर्षति तदेव भूयिष्ठमन्नं भवतीति

---

रिणी' इति मन्त्रे अपां वह्निजत्वं श्रुतम्। अग्नेराप इति श्रुत्या तस्य विरोधोऽस्ति न वेति सन्देहे तुल्यत्वादस्ति विरोध इति पूर्वपक्षे अपामग्निदाह्यत्वेन विरोधादग्निजत्वासम्भवात् क्रमार्थां पञ्चमीत्यविरोध इत्यभिप्रायच्छायासुक्ततेजोन्यायमतिदिशन् व्याचष्टे। अत इति। सत्यप्यविरोधे कथमपामग्निजत्वनिर्णयस्तत्राह। सति वचन इति। विद्युदग्नितयोरप्तेजसोर्विरोधेऽप्यग्नेराप इति वचनादतीन्द्रिययोस्तयोर्नास्ति विरोध इति निर्णीयत इत्यर्थः। न केवलं श्रुत्यविरोधज्ञानायायमतिदेशः किन्तु पञ्चभूतोत्पत्तिक्रमनिर्णयार्थञ्चेत्याह। तेजस इति। तस्मात्तेजोभावापन्नं ब्रह्मापि श्रुतिसमन्वय इति सिद्धम्॥

पृथिव्यधिकाररूपशब्दान्तरेभ्यो विषयमुक्त्वान्नशब्दसंज्ञाभूतप्रकरणाभ्यां संशयमाह। ताइति। अभ्यवहार्यं भक्ष्यं, अत्र श्रुतौ यद्यन्नमोदनादिकं तदा अन्नः पृथिवीति श्रुत्या विरोधः, यदि पृथिवी तदा न विरोध इति फलं बोध्यम्। अप्पृथिव्योः कार्यकारणभावादधिकरणसङ्गतिः। अन्नश्रुतिरूढिभ्यामविरुद्धाभ्यां पूर्वपक्षः। तदेव तत्त्वं चेति श्रुत्यर्थः। तथाच क्वचिदन्नं कचिदन्नः पृथिवी ततोऽन्नमिति विरोधश्चैकवाक्यतेति प्राप्ते

व्रीहियवाद्येव हि सति वर्षणे बहु भवति न पृथिवीति, ए
प्राप्ते ब्रूमः । पृथिव्येवेयमन्नशब्देनाद्भ्यो जायमाना विवक्षि
त इति । कस्मात् अधिकारात् रूपात् शब्दान्तराच्च । अ
धिकारस्तावत् तत्तेजोऽसृजत, तदपोऽसृजतेति च महा
भूतविषयो वर्तते तत्र क्रमप्राप्तां पृथिवीं महाभू
विलङ्घ्य नाकस्माद्व्रीह्यादिपरिग्रहो न्याय्यः, तथा रूपम
वाक्यशेषे पृथिव्यनुगुणं दृश्यते यत्कृष्णं तदन्नस्येति ।
द्योदनादेरभ्यवहार्यस्य कृष्णत्वनियमोऽस्ति नापि व्रीह्या
दीनाम् । ननु पृथिव्या अपि नैव कृष्णत्वनियमोऽस्ति, प
यःपाण्डुरस्याङ्गाररोहितस्य च क्षेत्रस्य दर्शनात् । ना
दोषो बाहुल्यापेक्षत्वात् । भूयिष्ठं हि पृथिव्याः कृष्णं रू
न तथा श्वेतरोहिते । पौराणिका अपि पृथिवीच्छाया
शर्वरीमुपदिशन्ति, सा च कृष्णाभासेत्यतः कृष्णं रू
पृथिव्या इति श्लिष्यते । श्रुत्यन्तरमपि समानाधिकारम

---

सिद्धान्तयति । एवं प्राप्त इति । अधिकारः प्रकरणं, रूपं लिङ्गं
क्षीरं तद्वत् पाण्डुरं श्वेतं, अङ्गारवत् रोहितं रक्तम् । शब्दान्तरश
स्थानं व्याचष्टे । श्रुत्यन्तरमपीति । अपामानन्तर्यं पृथिव्याः स्थानं श्रु
त्यन्तरसिद्धान्तेनाप्यन्नस्य पृथिवीत्वमित्यर्थः । तत्र सृष्टिकाले यदपां
यो मण्डवद्घनीभाव आसीत् स एव समहन्यत कठिनः संहतोऽभूत्
अपां कठिना परिणतिः पृथिव्यभवदिति श्रुत्यर्थः । मोऽन्नाद्य
स्मिन् स्थान इति विचारयामाह । पृथिव्यधिकारेति । पञ्चमीयं हेतुभ
त्वलिङ्गवहिताच्छ्रुतेः कथं प्रकरणलिङ्गस्थानैर्बाध इत्याशङ्क्याह
वाक्यशेषोऽपीति । प्रबलदुर्बलप्रमाणसन्निपाते बहूनां दुर्बलानामनु
ग्रहं प्रबलप्रमाणस्याल्पबाधेन कथञ्चिन्नयनमिति न्यायेन श्रुतिलिङ्गयो
रन्नमात्रनिष्ठत्वं बाधित्वा नाचारात्मकपृथिवीनिष्ठत्वं नीयते ताभ्यामन्नमात्र

पृथिवीति भवति तद्यदपां शर आसीत् तत्समहन्यत सा पृथिव्यभवदिति च। पृथिव्यास्तु व्रीह्यादेरुत्पत्तिं दर्शयति पृथिव्या ओषधयः ओषधीभ्योऽन्नमिति च। एवमधिकारादिषु पृथिव्याः प्रतिपादकेषु सत्सु कुतो व्रीह्यादिप्रतिपत्तिः। प्रसिद्धिरप्यधिकारादिभिरेव बाध्यते। श्यामवर्णोऽपि पार्थिवत्वादन्नाद्यस्य तद्द्वारेण पृथिव्या एवाङ्गः प्रभवत्वं सूचयतीति द्रष्टव्यं, तस्मात् पृथिवीयमन्नशब्देति ॥ १२ ॥

## तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ १३ ॥

किमिमानि वियदादीनि भूतानि स्वयमेव स्वविकारान् सृजन्ति आहोस्वित् परमेश्वर एव तेन तेनात्मनावतिष्ठमानोऽभिध्यायंस्तं तं विकारं सृजतीति सन्देहे सति प्राप्तं तावत् स्वयमेव सृजन्तीति। कुतः आकाशाद्वायुर्वायोरग्निरित्यादि

---

पक्षे प्रकरणादीनां पृथिवीमात्रविषयाणामत्यन्तबाधापत्तेरिति भावः। अन्नस्य वृष्टिजत्वोक्तिद्वारा पृथिव्या अन्नजन्यत्वं सूच्यते। पृथिव्यजा पृथिवीत्यादन्नशब्दस्यानुमानादितात्पर्यार्थः। एवं तित्तिरिश्रुत्यनुसारेण छान्दोग्यश्रुतेर्नयनादविरुद्धो भूतसृष्टिश्रुतीनां ब्रह्मणि समन्वय इति सिद्धम् ॥ १२ ॥

सम्प्रति तानि भूतान्याश्रित्याश्रयाश्रयिभावसङ्गत्या तेषां स्वातन्त्र्यमाशङ्क्य निषेधति। तदभिध्यानादेव तु तल्लिङ्गात् सः। उक्तभूतान्याश्रित्य संशयपूर्वपक्षौ दर्शयति। किमिमानीत्यादिना। संशयबीजानुक्तौ पूर्वोक्तस्पष्टश्रुत्योर्बीजमिति ज्ञेयम्। ननु भूतानां किं स्वातन्त्र्यमुपादानत्वमात्रमुत कर्तृत्वं वा, नाद्यः, ईक्षणानुपपत्तेरित्यादिन्यायविरोधादिति शङ्कते। नेति। न द्वितीयः अचेतनत्वादिति भावः।

स्वातन्त्र्यश्रवणात् । नन्वचेतनानां स्वतन्त्राणां प्रवृत्तिः प्रति-
षिद्धा, नैष दोषः, तत्तेज ऐक्षत ता आप ऐक्षन्तेति च भूता-
नामपि चेतनत्वश्रवणादित्येवं प्राप्तेऽभिधीयते । स्वयमे-
परमेश्वरः तेन तेनात्मनावतिष्ठमानोऽभिध्यायंस्तं तं विका-
सृजतीति । कुतस्तल्लिङ्गात् । तथा हि शास्त्रं यः पृथिव्यां ति-
ष्ठन् यः पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी
शरीरं यः पृथिवीमन्तरो यमयतीत्येवंजातीयकं साध्य-
क्षाणामेव भूतानां प्रवृत्तिं दर्शयति । तथा 'सोऽकामय-

---

यथा मनुष्यादिशब्दैस्तत्तद्देहाभिमानिनो जीवा उच्यन्ते तथाकाशादिश्रु-
त्यादिश्रुतौ आकाशादिशब्दैस्तत्तद्भूताभिमानिदेवता उच्यन्ते, ता-
स्वकार्ये वाय्वादौ कर्तृत्वसम्भवान्निरपेक्षनिमित्तत्वं पक्षस्यार्थः । एवं त-
त्मानं स्वयमकुरुतेति श्रुतौ स्वयमिति विशेषणाद्ब्रह्मणोऽन्यानपेक्षं कर्तृ-
त्वं श्रुतम् । तथा च मिथोनिरपेक्षेश्वरभूतकर्तृत्वश्रुत्योर्विरोधान्न ब्रह्म-
समन्वय इति सकलं पूर्वपक्षमाह । नैष दोष इति । भूतानां तदभिमा-
देवतानामित्यर्थः । यथा आकाशादिभावापन्नब्रह्मणः सर्वोपादानत्वं त-
तदभिमानिदेवताजीवभावमापन्नब्रह्मणः कर्तृत्वमिति परम्परया ईश्वर-
त्वश्रुत्यविरोधः । स्वयमिति विशेषणं ईश्वरान्तरनिरासार्थं न जीवभा-
वेनानिरासार्थमित्येकदेशिसिद्धान्त ऊहनीयः । मुख्यसिद्धान्तमाह । स्व-
यम इति । आकाशादिशब्दैर्न देवतालक्षणा मुख्यार्थं बाधकाभा-
वात्पक्षस्य प्रकृतित्वायोक्तस्य दृढतरत्वात् , तथा चाचेतनानां भू-
कर्तृत्वमेव नास्ति, कुतः ईश्वरानपेक्षकर्तृत्वं यद्यपि देवतानां कर्तृ-
त्वमस्ति तथापीश्वरनियम्यत्वश्रवणाच्चेतनानामपि न स्वातन्त्र्यं किमु-
ताचेतनानां भूतानां न स्वातन्त्र्यमिति मत्वोक्तम् । तल्लिङ्गादिति । तत्त-
दात्मनावस्थितस्य ब्रह्मणः उपादानत्वेऽपि जीवव्यावृत्तेश्वरत्वाका-
रात् सर्वकर्तृत्वं न जीवत्वद्वारा तस्य सर्वनियन्तृत्वाल्लिङ्गादित्यर्थः ।

बहु स्यां प्रजायेय' इति प्रस्तुत्य 'सच्च त्यच्चाभवत् तदात्मानं स्वयमकुरुत' इति तस्यैव सर्वात्मभावं दर्शयति । यत्त्वी-क्षणश्रवणमप्तेजसोस्तत् परमेश्वरावेशवशादेव द्रष्टव्यं 'नान्योऽतोऽस्ति द्रष्टा' इतीक्षित्रन्तरप्रतिषेधात् प्रकृतत्वाच्च सत ईक्षितुः तदैक्षत बहु स्यां प्रजायेयेत्यत्र ॥ १३ ॥

## विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥

भूतानामुत्पत्तिक्रमश्चिन्तितः, अथेदानीमप्ययक्रमश्चिन्त्यते किमनियतेन क्रमेणाप्यय उतोत्पत्तिक्रमेणाथ वा तद्विपरीतेनेति । त्रयोऽपि चोत्पत्तिस्थितिप्रलया भूतानां ब्रह्मायत्ताः श्रूयन्ते, 'यतो वा इमानि भूतानि जायन्ते

---

प्रकरणाच्च साक्षात् सर्वकर्तृत्वमित्याह । नान्योऽत । पूर्वोक्तमनूद्य निरस्यति । यत्त्विति । परमेश्वरस्यान्तर्यामिभावेनावेशः सम्बन्धः । तदभावान्नेक्षणश्रवणं न तावता तेषां चेतनत्वं स्वातन्त्र्यं चेत्यर्थः । अनेन तदभिध्यानादिति पदं व्याख्यातं, इत्थं सूत्रयोजना । स ईश्वरस्तत्तदात्मना स्थितोऽपि साक्षादेव सर्वकर्ता तस्यान्तर्यामित्वलिङ्गाज्जीवत्वद्वारा कर्तृत्वं नाम जीवस्यैव कर्तृत्वमित्यन्तर्यामिणः कर्तृत्वासिद्धेरन्तर्यामित्वायोगात् तदभिध्यानादीश्वरेच्छादेव भूतेषु स्रुतेस्तथोपपत्तेश्चेति तत्रोक्त ऐक्षतेति श्रुत ईक्षिता परमात्मैवेत्यत्र सूत्रान्तरं प्रकरणाच्चाह । नान्य इति । तस्मादीश्वरपदार्थबोधप्रसङ्गेनेश्वरादन्यस्य स्वातन्त्र्याभावाच्चेश्वरकर्तृत्वश्रुते-स्तत्सूत्रा विरोध इति सिद्धम् ॥ १३ ॥

विपर्ययेण तु । यद्यत्र श्रुतिविरोधो न परिह्रियते तदा नङ्क्ष्यत्यतो-ऽप्युत्पत्तिक्रमे निर्णीते लयक्रमो बुद्धिस्थो विचार्यत इति प्रासङ्गिकत्वेन पादस्यान्तरसङ्गतिमिति मत्वाह । भूतानामिति । उत्पत्तिक्रमश्रुति-परीतक्रमनिर्णयात् विलयो भूतानां प्रातिलोम्येन लयध्यानपूर्वकं

येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति' इति, तत्र नियमोऽविशेषादिति प्राप्तं, अथवोत्पत्तेः क्रमस्य श्रुतत्वा प्रलयस्यापि क्रमाकाङ्क्षिणः स एव क्रमः स्यादित्येवं प्राप्ते ततो ब्रूमः विपर्ययेण तु प्रलयक्रमोऽत उत्पत्तिक्रमाद्भवितु र्हति, तथा हि लोके दृश्यते येन क्रमेण सोपानमारूढस्त विपरीतक्रमेणावरोहतीति, अपि च दृश्यते मृदो जा घटशरावाद्यप्ययकाले मृद्भावमप्येति, अद्भ्यश्च जातं हिम करकाद्यब्भावमप्येतीति। अतश्चोपपद्यत एतद्यत् पृथि अद्भ्यो जाता सती स्थितिकालव्यतिक्रान्तावपोऽपीयात्, आप श्च तेजसो जाताः सत्यस्तेज अपीयुः, एवं क्रमेण सूक्ष्म सूक्ष्मतरं चानन्तरमनन्तरतरं कारणमपीत्यसर्वं कार्यजात परमकारणं परमसूक्ष्मञ्च ब्रह्माप्येतीति वेदितव्यम्। न हि स्वकारणव्यतिक्रमेण कारणकारणे कार्याप्ययो न्याय्यः स्मृतावप्युत्पत्तिक्रमविपर्ययेणैवाप्ययक्रमस्तत्र तत्र दर्शित

प्रत्यग्ब्रह्मणि मनःसमाधानं फलं, पूर्वपक्षे तु कारणनाशे सति का नाश इति सर्वलयाधारब्रह्मसिद्धिरुक्तसमाध्यसिद्धिरिति भेदः। सति ... नां लये क्रमचिन्ता स एव नास्तीति केचित्तान् प्रत्याह। तयोऽपि ... अनियम इत्यन्नास्त्ययोक्तं श्रौतस्य प्रलयस्य क्रमाकाङ्क्षायां श्रौत उत्प... क्रम एव ग्राह्यः, श्रौतत्वेनान्तरङ्गत्वादित्यत्र पूर्वपक्षः, सति कारणे ... नश्यतीति लोके दृश्यते। तथा च श्रौतोऽप्युत्पत्तिक्रमो लयेन ... किन्तु लौकिकक्रम एव स्वकृत्यते श्रुतेर्लौकिकदृष्टपदार्थबोधाधीनत्वेन श्रौ... दपि लौकिकस्यान्तरङ्गत्वाद्ग्राह्यत्वाच्च, कारणमेव हि कार्यस्य ... तदनन्यत्वन्यायेन स्थापितम्। न हि स्वरूपनाशे कार्यस्य ... स्थितिर्युक्ता, तस्मादयोग्य उत्पत्तिक्रमो लयस्य न ग्राह्यः लौकिक...

'जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते'॥

इत्येवमादौ॥ उत्पत्तिक्रमस्तूत्पत्तावेव श्रुतत्वात् नाप्यये भवितुमर्हति, नचासावयोग्यत्वादप्ययेनाकाङ्क्ष्यते, न हि कार्ये ध्रियमाणे कारणस्याप्ययो युक्तः कारणाप्यये कार्यस्यावस्थानानुपपत्तेः। कार्याप्यये तु कारणस्यावस्थानं युक्तं मृदादिष्वेवं दृष्टत्वात्॥

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्॥ १५॥

भूतानामुत्पत्तिप्रलयावनुलोमप्रतिलोमक्रमाभ्यां भवत इत्युक्तं, आत्मादिरुत्पत्तिः प्रलयश्चात्मान्त इत्यप्युक्तं, सेन्द्रियस्य तु मनसो बुद्धेश्च सद्भावः प्रसिद्धः श्रुतिस्मृत्योः। बुद्धिस्तु

परोधेन निराकाङ्क्षत्वादिति सिद्धान्तयति। तथैव नन्वित्यादिना। क्रमेण परम्परया सर्वकार्यस्याधारत्वं ब्रह्मणः क्षित्यादावीयते साक्षादेव तत् किं न स्यादित्यत आह। न हि कारणव्यतिक्रमेणेति। घटनाशे मृदनुपलब्धिप्रसङ्गादित्यर्थः। 'वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते' इति स्मृतिशेषः आदिपदार्थः। योग्यतार्थीनं सम्बन्ध इति न्यायादयोग्यक्रमबाध इति सिद्धम्॥

अन्तरा विशेषात्। उक्तभूतोत्पत्तिलयक्रमस्य प्रसङ्गात् किं करणोत्पत्तिक्रमेण विरुध्यते न वेति करणानामभौतिकत्वभौतिकत्वाभ्यां सन्देहे विरोधानुपादपूर्वपक्षमाह। भूतानामित्यादिना। करणान्तेन न चेति यदन्तं प्रकृत्य। सेन्द्रियस्येति। 'मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः'। श्रोत्रादीनीन्द्रियाण्यन्ये' इति स्मृतिर्द्रष्टव्या। अन्त-

सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुः' इ-त्यादिलिङ्गेभ्यः । तयोरपि कस्मिंश्चिदन्तराले क्रमेणोत्पत्तिप्र-यावुपसंप्राप्तौ, सर्वस्य वस्तुजातस्य ब्रह्मजत्वाभ्युपगमात् । अ-थाथर्वणे उत्पत्तिप्रकरणे भूतानामात्मनश्चान्तराले करणा-न्यनुक्रम्यन्ते 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति, तस्मा-त्पूर्वोक्तोत्पत्तिप्रलयक्रमभङ्गप्रसङ्गो भूतानामिति चेत्, अवि-शेषात् । यदि तावद्भौतिकानि करणानि ततो भूतोत्पत्ति-प्रलयाभ्यामेवैषामुत्पत्तिप्रलयौ भवत इति नैतयोः क्रमान्त-रं मृग्यम् । भवति च भौतिकत्वे लिङ्गं, करणानां, 'अन्नम

---

पराः शब्दाः लिङ्गानीत्युच्यन्ते । करणानां क्रमाकाङ्क्षामा-तयोरिति । आकाङ्क्षायां श्रुतिसिद्धः क्रमो ग्राह्य इत्याह । अ-न्तेति । विज्ञायतेऽनेनेति विज्ञानं सेन्द्रिया बुद्धिः । आत्मनो भू-तानां अन्तरा मध्ये तल्लिङ्गात् स्पष्टवाक्यात् 'एतस्माज्जायते प्राणो म-न' इत्यादिरूपाद्विज्ञानमनसी अनुक्रम्येते । तथा च करणक्रमेण पू-र्वोक्त-क्रमभङ्ग इति शङ्काक्षरार्थः । न च करणानां भौतिकत्वाद्भूतानन्तर्यं वा-च्यं, तेषां भौतिकत्वे मानाभावात् । तथा चात्मनः प्रथममाका-शस्य पश्चाद्वायोरित्युपक्रमस्यात्मनः करणानि ततो भूतानीति क्रमेण वि-रोध इति त्रिवृत्वश्रुत्योर्विरोधाच्च ब्रह्मणि समन्वय इति पूर्वपक्ष-सिद्धान्तयति । नेति । 'आत्मन आकाशः' इत्यादि तैत्तिरि-यश्रुत्याः कार्यकारणभावेनार्थतः क्रमो भाति न तथाथर्वणपाठेन क-र्यक्रमविरोधिक्रमविशेषस्यान्यतः पाठक्रमस्यार्थक्रमधीशेषस्य योग्य-त्वायोगादिति श्रुत्यर्थक्रमाविरोधेन पाठस्य नेयत्वाद्भूतानन्तर्यं कर-णानामित्यर्थः । किन्तु भौतिकत्वात् तेषां तदानन्तर्यमित्याह । यदि-न च प्राणस्याधिकारत्वायोगादन्नमयमित्यादि मयटो न विकारा-

हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इत्येवं जातीयकम्। व्यपदेशोऽपि क्वचिद्भूतानां करणानाञ्च ब्राह्मणपरिव्राजकन्यायेन नेतव्यः। अथ त्वभौतिकानि करणानि तथापि भूतोत्पत्तिक्रमो न करणैर्विशेष्यते, प्रथमं करणान्युत्पद्यन्ते चरमं भूतानि प्रथमं वा भूतानि उत्पद्यन्ते चरमं करणानीति। आथर्वणे तु समाम्नाय क्रममात्रं करणानां भूतानाञ्च न तत्रोत्पत्तिक्रम उच्यते। तथान्यत्रापि पृथगेव भूतक्रमात् करणक्रम आम्नायते 'प्रजापतिर्वा इदमग्र आसीत् स आत्मानमैक्षत स मनोऽसृजत तन्मन एवासीत्

---

वाच्यं करणानां विभक्तत्वेन कार्यतया कारणाकाङ्क्षायामन्नमयमित्यादिश्रुतेराकाङ्क्षितोक्त्यर्थमर्थवति बाधके मयटो विकारार्थतया युक्तत्वात्। प्राचुर्यार्थत्वे त्वनाकाङ्क्षितोक्तिप्रसङ्गाच्छ्रुत्यैव तेजोऽबन्नप्राशने वाक्प्राणमनसां दृष्टिस्तदभावे ह्रास इति विकारत्वस्य दर्शितत्वाच्च विवादावसरः। यद्वा स्थूलभूताधीना तेषां वृद्धिर्विकारो मयडर्थः सूक्ष्माणां भौतिकत्वे लिङ्गं प्राणेन्द्रियमनांसि भौतिकानि भूताधीनवृद्धिमत्त्वाद्देहवदिति भावः। ननु तेषां भौतिकत्वे कथमाथर्वणे पृथग्जन्मकथनं भूतजन्मोक्त्यैव तज्जन्मसिद्धेरित्यत आह। व्यपदेशोऽपीति। प्रौढवादेन तेषामभौतिकत्वमुपेत्यापि श्रुत्यविरोधमाह। अथ त्विति। करणानां भूतानाञ्च पौर्वापर्ये मानाभावात् नोक्तभूतक्रमभङ्गः। न चाथर्वणवाक्यं मानं पाठमात्रत्वादित्यर्थः। तर्हि कथं क्रमनिर्णयस्तत्राह। तथेति। इदंस्थूलं उत्पत्तेः प्राक् प्रजापतिः सूत्रात्मासीत्। ननु लिङ्गदेहस्य मनोघटितत्वात् प्रजापतेश्च लिङ्गसमष्टिरूपत्वात् कथं प्रजापतिसृष्ट्यनन्तरं मनःसृष्टिरिति विचारणीयम्। अत्र सूक्ष्मभूतात्मकप्रजापतिसर्गः प्रथमस्ततो मन आदिसर्गः इति क्रमो भवतीति भावः। एवञ्च भूतकर-

तदात्मानमैक्षत तद्वाचमसृजत' इत्यादिना । तस्मान्नास्ति भूतोत्पत्तिक्रमस्य भङ्गः ॥

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥

स्तो जीवस्याप्युत्पत्तिप्रलयौ जातो देवदत्तो मृतो देवदत्त इत्येवंजातीयकाल्लौकिकव्यपदेशाज्जातकर्मादिसंस्कारविधानाच्चेति स्यात् कस्यचिद्भ्रान्तिः, तामपनुदामः, न जीवस्योत्पत्तिप्रलयौ स्तः शास्त्रफलसम्बन्धोपपत्तेः । शरीरानुविनाशिनि हि जीवे शरीरान्तरगतेष्टानिष्टप्राप्तिपरिहारार्थौ विधिप्रतिषेधावनर्थकौ स्याताम् । श्रूयते च 'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते' इति । ननु लौकिको जन्ममरणव्यपदेशो जीवस्य दर्शितः सत्यं दर्शितः भाक्तस्त्वेष जीवस्य जन्ममरणव्यपदेशः, किमाश्रयः पुनरयं मुख्यो यदपेक्षया भाक्त इति, उच्यते । चराचरव्यपाश्रयः

---

श्रोत्पत्तिश्रुत्योरविरोधात् ब्रह्मणि समन्वयसिद्धिरिति सिद्धान्तफलं व- र्त । तस्मादिति ॥

चराचरभावित्वात् । एवं तावत् तत्पदवाच्यकारणनिर्णयाय भू- श्रुतीनां विरोधो निरस्तः इदानीमापादसमाप्तेस्त्वंपदार्थशुद्धौ जीवश्रुतीनां विरोधो निरस्यते इह जीवो न जायते म्रियते इत्यादिश्रुतेः जातेष्ट्यादिशास्त्रेण विरोधोऽस्ति न वेति सन्देहे विरोधोऽस्तीति प्राप्तं लौकिकजन्मादिव्यपदेशच्छायाज्जातेष्ट्यादिशास्त्रेण जीवाजत्वादिश्रुतिबाध इ- पूर्वपक्षयति । स्त इति । तथा च कारणोत्पत्त्यैव भूतक्रमस्य बाध- भावेऽपि जीवोत्पत्तिक्रमेण बाधः स्यादिति प्रासङ्गिकसङ्गतिः । पूर्वपक्षे जीवमुक्त्यसिद्धिः सिद्धान्ते तत्सिद्धिरिति भेदः । चेतनजन्माद्युद्देशे

स्थावरजङ्गमशरीरविषयौ जन्ममरणशब्दौ, स्थावरजङ्गमानि हि भूतानि जायन्ते च म्रियन्ते च अतस्तद्विषयौ जन्ममरणशब्दौ मुख्यौ सन्तौ तत्स्थे जीवात्मन्युपचर्येते। तद्भावभावित्वात्। शरीरप्रादुर्भावतिरोभावयोर्हि सतोर्जन्ममरणशब्दौ भवतः नासतोः। नहि शरीरसम्बन्धादन्यत्र जीवो जातो मृतो वा केनचिदुपलक्ष्यते। "स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः" "स उत्क्रामन् म्रियमाणः" इति च शरीरसंयोगवियोगनिमित्तावेव जन्ममरणशब्दौ दर्शयति। जातकर्मादिविधानमपि देहप्रादुर्भावापेक्षमेव द्रष्टव्यं, अभावाज्जीवप्रादुर्भावस्य। जीवस्य परस्मादात्मन उत्पत्तिर्वियदादीनामिवास्ति नास्ति वेत्येतदुत्तरेण सूत्रेण वक्ष्यति। देहाश्रयौ तावज्जीवस्य स्थूलावुत्पत्तिप्रलयौ न स्तः इत्येतदनेन सूत्रेणाचोचत्॥

---

चेतनस्य तस्य जन्मान्तरीयफलसाधनं जातकर्मादि संस्कारो विधीयते तथा चोद्देश्यविधेययोर्मिथोविरोधे सति विधेयाविरोधेनोद्देश्यं नेयमिति न्यायात् जन्मादिकं देहोपाधिकं न स्वत इति सिद्धान्तयति। चराचरेति। जीवापेतं जीवेन त्यक्तं इदं शरीरं जन्मादिव्यपदेशश्चराचरदेहविषयो मुख्यः जीवे तु भाक्तो गौणः औपाधिकजन्मादिविषयः स्यादुपाधिजन्माभावे भावादसत्यभावादिति सूत्रार्थः। जीवस्यौपाधिकजन्ममृत्योः श्रुतिमप्याह। स वा इति। जायमानपदार्थमाह। शरीरमिति। म्रियमाणत्वं व्याचष्टे। उत्क्रामन्निति। ननूत्तरत्र जीवस्य जन्मादि निरस्यते अत्रापि तन्निरासे पुनरुक्तिरित्याशङ्क्याह। जीवस्येति। तदेवं जातेष्ट्यादिशास्त्रस्यौपाधिकजन्मादिविषयत्वान्न जीवस्याजन्यत्वश्रुतिविरोध इति सिद्धम्॥

# नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः॥ १७॥

अस्त्यात्मा जीवाख्यः शरीरेन्द्रियपञ्जराध्यक्षः कर्मफल-
सम्बन्धी, स किं व्योमादिवदुत्पद्यते ब्रह्मण आहोस्विद्ब्रह्म-
वदेव नोत्पद्यत इति श्रुतिविप्रतिपत्तेर्विषयः कासुचिच्छ्रु-
तिष्वग्निविस्फुलिङ्गादिनिदर्शनैर्जीवात्मनः परस्मात् ब्रह्मण
उत्पत्तिराम्नायते, कासुचित्त्वविकृतस्यैव परस्य ब्रह्मणः का-
र्यप्रवेशेन जीवभावो विज्ञायते न चोत्पत्तिराम्नायत इति।
तत्र प्राप्तं तावदुत्पद्यते जीव इति, कुतः प्रतिज्ञानुप-
रोधात्। 'एकस्मिन् विदिते सर्वमिदं विदितम्' इतीयं प्रति-
सर्वस्य वस्तुजातस्य ब्रह्मप्रभवत्वे सति नोपरुध्येत, तत्त्वान्त-
रत्वे तु जीवस्य प्रतिज्ञेयमुपरुध्येत। न चाविकृतः पर-
मात्मैव जीव इति शक्यते विज्ञातुं, लक्षणभेदात्। अपहत-
पाप्मत्वादिधर्मको हि परमात्मा, तद्विपरीतो हि जीवः।
विभागाच्चास्य विकारत्वसिद्धिः। यावान् हि आकाशादिः
प्रविभक्तः स सर्वो विकारः, तस्य चाकाशादेरुत्पत्तिः सम-
धिगता जीवात्मापि पुण्यापुण्यकर्मा सुखदुःखभाक् प्रति-
शरीरं विभक्त इति तस्यापि प्रपञ्चोत्पत्त्यवसरे उत्पत्तिर्भवि-
तुमर्हति।

---

नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः। 'अग्नेर्यथा विस्फुलिङ्गवदेतस्मात् परमात्मनः
सर्वे जीवात्मनो व्युच्चरन्ति' इत्यादिजीवोत्पत्तिश्रुतीनां 'स एष इह प्र-
विष्ट आनखाग्रेभ्यः' 'अज आत्मा' इत्याद्यनुत्पत्तिश्रुतीनाञ्च मिथो विरोधे
संशये प्राप्तं देहजन्मनाशयोर्जीवजन्मनाशौ, देहान्तरभोग्यस्व-
र्गादिविध्याद्यप्रामाण्यात्। कल्पान्तयोर्भस्म इव जीवस्य तौ किं न स्या-

अपि च यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः' इति प्राणादेर्भोग्यजातस्य सृष्टिं शिष्ट्वा सर्वे एते आत्मानो व्युच्चरन्तीति भोक्तॄणामात्मनां पृथक् सृष्टिं शास्ति। 'यथा सुदीप्तात् पावकात् विस्फुलिङ्गाः सहस्रशः प्रभवन्ति सरूपास्तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति' इति च जीवात्मनामुत्पत्तिप्रलयावुच्येते सरूपवचनात्। जीवात्मानो हि परमात्मना सरूपा भवन्ति चैतन्ययोगात्। न च क्वचिदश्रवणमन्यत्र श्रुतं वारयितुमर्हति, श्रुत्यन्तरगतस्यापि अविरुद्धस्याधिकस्यार्थस्य सर्वत्रोपसंहर्त्तव्यत्वात्। प्रवेशश्रुतिरप्येवं सति विकारभावापत्त्यैव व्याख्यातव्या 'तदात्मानं स्वयमकुरुत' इत्यादिवत् तस्मादुत्पद्यते जीव इत्येवं प्राप्ते ब्रूमः, नात्मा जीव उत्पद्यत इति। कस्मादश्रुतेः, न ह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति भूयःसु प्रदेशेषु। ननु क्वचिदश्रवणमन्यत्र श्रुतं न वारयतीत्युक्तं, सत्यमुक्तं उत्पत्तिरेव त्वस्य न सम्भवतीति वदामः। कस्मात् नित्यत्वाच्च ताभ्यः। चशब्दादजत्वादिभ्यश्च। नित्यत्वं ह्यस्य श्रुतिभ्योऽवगम्यते, तथाजत्वमविकारित्वमविकृतस्यैव ब्रह्मणो जीवात्मनावस्थानं ब्रह्मात्मता चेति। न चैवंरूपस्योत्पत्तिरुपपद्यते. ताः काः श्रुतयः 'न

---

तस्माच्छ्रुतादिति प्रकृताक्षरस्येव पूर्वपक्षमाह। तत्र प्राप्तं नात्मेति। फलं पूर्ववत्, उपरोधो बाधः। नन्वविकृतब्रह्मैवात्र प्रविष्टं जीवो न तत्कार्यमिति प्रतिज्ञाविरुद्धत्वात्। न चेति। जीवः परस्माद्भिन्नः विरुद्धधर्मवत्त्वाद्भिन्नस्याविकारत्वे प्रतिज्ञाबाध इति तर्कोपेताविरुद्धत्वनिदानुपपत्तेर्जीवस्यात् प्रवेशश्रुतिर्विकारापत्त्यात्मना प्रति-

जीवो म्रियते' 'स वा एष महानज आत्माऽजरो ऽमृतोऽभयो ब्रह्म' 'न जायते म्रियते वा विपश्चित्' 'अजो नित्यः शाश्वतोऽयं पुराणः" तत् सृष्ट्वा तदेवानुप्राविशत्' 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' 'स एष इह प्रविष्ट आनखाग्रेभ्यः' 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म सर्वानुभूः' इत्येवमाद्या नित्यत्ववादिन्यः सत्यो जीवस्योत्पत्तिं प्रतिवध्नन्ति। ननु प्रविभक्तत्वाद्विकारो विकारत्वाच्चोत्पद्यत इत्युक्तं, अत्रोच्यते नास्य प्रविभागः स्वतोऽस्ति, 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इति श्रुतेः, बुद्ध्याद्युपाधिनिमित्तं त्वस्य प्रविभागप्रतिभानमाकाशस्येव घटादिसम्बन्धनिमित्तम्। तथा च शास्त्रं 'स वा अयमात्मा ब्रह्म विज्ञान

ष्ठित ईश्वर इति व्याख्येयमिति समुदायार्थः, स्वरूपा इति दृष्टान्त भांशो जीव इति निश्चीयते। ननु आत्मनः आकाशः सम्भूत इत्या जीवस्योत्पत्त्यश्रवणादनुत्पत्तिसत्त्वाच्च। न चेति। एवं विकारवे विकारप्रपञ्चात्मना स्वात्मानमकुरुतेति यद्विकारजीवात्मना प्रवेश इत्यर्थः अजत्वादिति श्रुतिः कल्पमध्ये जीवस्यानुत्पत्त्वादिविषया तत्त्वमसीति तिव स्फुट इत्यभेदवाक्यवद्व्याख्येयेति प्राप्ते सिद्धान्तयति। एवमिति धर्मिवत् सत्यो विभागो हेतुरौपाधिको वा नाद्यः असिद्धेरित्याह अत्रोच्यते नास्तीति। द्वितीये जीवस्य न स्वतो विकारत्वसिद्धिः अकल्पादित्याह। बुद्ध्यादीति। औपाधिकभेदे मानमाह। देति। मयटो विकारार्थत्वमाशङ्क्याह। तन्मयत्वेति। जाड्यः सजडः स्त्रीपरतन्त्रः। स्त्रीमय इतिवज्जीवस्य स्वरूपाज्ञानाद्बुद्ध्यादि रतन्त्रत्वेन भेदवत्त्वादिभानात् प्राचुर्यार्थे मयट्प्रयोग इत्यर्थः। निरस्य तदनुपाध्युत्पत्तेर्गतिमाह। यद्यपीति। जीवस्यौपाधिकजन्मनाश

मयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः' इत्येवमादि ब्रह्मण एवाविकृतस्य सतोऽस्यैकस्यानेकबुद्ध्यादिमयत्वं दर्शयति। तन्मयत्वञ्चास्य तद्विविक्तस्वरूपानभिव्यक्त्या तदुपरक्तस्वरूपत्वं स्त्रीमयो जाल्म इत्यादिवद्द्रष्टव्यम्। यदपि क्वचिदस्योत्पत्तिप्रलयश्रवणं तदप्यत एवोपाधिसम्बन्धान्नेतव्यं, उपाध्युत्पत्त्या चास्योत्पत्तिस्तत्प्रलये च प्रलय इति। तथा च दर्शयति 'प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' इति। तथोपाधिप्रलय एवायं नात्मप्रलय इत्येतदपि, 'अत्रैव मा भगवान्मोहान्तमापीपदन्न वा अहमिमं विजानामि न प्रेत्य संज्ञास्ति इति प्रश्नपूर्वकं प्रतिपादयति, 'न वा अरे अहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य

---

श्रुतिमाह। तथेति। एतेभ्यो देहात्मना परिणतेभ्यो भूतेभ्यः समुत्थाय जनित्वा तान्येव लीयमानान्यनुपश्चाद्विनश्यति प्रेत्यौपाधिकमरणानन्तरं संज्ञा नास्तीत्यर्थः। ननु प्रज्ञानघनः संज्ञा नास्तीति च विरुद्धमित्यत आह। तथेति। उपाधिलयाद्विशेषज्ञानाभावः। एवं संज्ञाभावो नात्मस्वरूपविज्ञानाभाव इत्युत्तरं प्रतिपादयति श्रुतिरित्यन्वयः। अत्रैवात्मविज्ञानघने प्रेत्य संज्ञा नास्तीत्युक्त्या मां मोहान्तं मोहमध्यं भगवानापीपददपीपतन्निममर्थं न जानामि ब्रूहि त्वदुक्तेरर्थमिति मैत्रेयीप्रश्नार्थः। उत्तरमाह। न वा इति। मोहकरं वाक्यमुक्तमिति: पूर्वावस्थानाशो धर्मोऽस्येत्युच्छित्तिधर्मा परिणामी, तस्मादविनाशीत्यर्थः, तर्हि न प्रेत्य संज्ञेति कथमत आह। मात्रेति। मात्राभिर्विषयेन्द्रियसंसर्गात् तद्योगमित्यर्थः। बिम्बप्रतिबिम्बयोरिव विरुद्धधर्मभेदोऽस्त्वत इत्यत हेतुमाह। अतं कर्तुमिति जीवस्य विकारित्वे सत्ययोगात् तत्कर्मोति

५५

भवति' इति । प्रतिज्ञानुपरोधोऽप्यविकृतस्यैव ब्रह्मणो वै... वभावाभ्युपगमात् । लक्षणभेदोऽप्यनयोरुपाधिनिमित्त... अत ऊर्ध्वं विमोक्षायैव ब्रूहीति च प्रकृतस्यैव विज्ञानम... स्यात्मनः सर्वसंसारधर्मप्रत्याख्यानेन परमात्मभावप्रति... नात् । तस्मान्नैवात्मोत्पद्यते प्रविलीयते वेति ॥ १७ ॥

## ज्ञोऽत एव ॥ १८ ॥

स किं काणभुजानामिवागन्तुकचैतन्यः स्वतोऽचे... आहोस्वित् साङ्ख्यानामिव नित्यचैतन्यस्वरूप एवेति वा... विप्रतिपत्तेः संशयः । किं तावत् प्राप्तं आगन्तुकमात्मचै... तन्यमात्मनः संयोगजमग्निघटसंयोगजरोहितादिगु... दिति प्राप्तम् । नित्यचैतन्यत्वे हि सुप्तमूर्च्छितग्रहावि... नामपि चैतन्यं स्यात्, ते पृष्टाः सन्तो न किञ्चिद्वयम...

---

वाक्यमखण्डार्थमिति वक्तव्यं, तथा च फलवत्प्रधानवाक्यार्थैकवाक्यतयो... त्वस्तुतीनां बलवत्त्वादत्वश्रुत्यादिकमध्यस्तमनुवदन्त्युत्पत्त्यादिश्रुतय इ... इति सिद्धम् ॥

ज्ञोऽत एव । 'आत्मैवास्य ज्योतिः' इत्याद्यात्मस्वप्रकाशत्व... 'पश्यंश्चक्षुः शृण्वन् श्रोत्रम्' इत्यनित्यज्ञानवत्त्वश्रुतिभिर्विरोधोऽस्ति... स्तीति यस्य लोकस्य चक्षुर्द्रष्टा श्रोत्रं श्रोतेत्यर्थः । प्रागुक्तजीवानु... त्पत्तिहेतुमादाय स्वप्रकाशत्वसाधनार्थेतनाध्यभावः सङ्गतिः । अनुत्प... स्वप्रकाशं ब्रह्मैवोपहितं जीव इति जीवस्य स्वप्रकाशता सिद्धा... चैवं मतार्थता अनुत्पन्नस्याऽपि जीवस्य स्वप्रकाशत्वे ज्ञानसाधनवैय... तर्कसहितानित्यज्ञानश्रुतिबलेन स्वप्रकाशत्वश्रुतेर्बाध्यतया... दृष्टायां तदैक्यायोग्यतायै स्वप्रकाशत्वस्यात्मन साधनात्, तथा च... जीवस्य ब्रह्मैक्यायोग्यता सिद्धान्ते तद्योग्यतेत्यापादसमाप्तेः फल...

तयामहीति जल्पन्ति। स्वस्थाश्च चेतयमाना दृश्यन्ते. अतः कादाचित्कचैतन्यत्वादागन्तुकचैतन्य आत्मेत्येवं प्राप्तेऽभिधीयते। ज्ञः, नित्यचैतन्योऽयमात्मा, अतएव यस्मादेव नोत्पद्यते परमेव ब्रह्माविकृतमुपाधिसम्पर्काज्जीवभावेनावतिष्ठते। परस्य हि ब्रह्मणः चैतन्यस्वरूपत्वमाम्नातं 'विज्ञानमानन्दं ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' इत्यादिषु श्रुतिषु। तदेव चेत् परं ब्रह्म जीवस्तस्माज्जीवस्याऽपि नित्यचैतन्यस्वरूपत्वमग्न्यौष्ण्यप्रकाशवदिति गम्यते। विज्ञानमयप्रक्रियायाञ्च श्रुतयो भवन्ति "असुप्तः सुप्तानभिचाकशीति" इत्यत्र 'अयं पुरुषः स्वयंज्योतिर्भवति' 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते'

---

गन्तव्यम्। इष्टापत्तिं निराचष्टे। तं प्रति इति। साधनाधीनज्ञानत्वान्न स्वप्रकाशो जीवो व्यतिरेकेणेश्वरवदित्याह। अतः कादाचित्केति। यथाश्रुते साध्ये हेतोः साध्याविशेष इति मन्तव्यं अतो जीवस्य स्वप्रकाशत्वश्रुतिर्बाध्येति प्राप्ते सिद्धान्तयति। एवमिति। चेच्छब्दो निश्चयार्थः। न केवलं स्वप्रकाशब्रह्माभेदाज्जीवस्य स्वप्रकाशता किन्तु श्रुतितोऽपीत्याह। विज्ञानमयेति। योऽयं विज्ञानमय इति प्रकरणमित्यर्थः। असुप्तः स्वयं भासमान एवात्मा सुप्तान् लुप्तव्यापारान् वागादीनभिलक्ष्य चाकशीति सुप्तार्थान् पश्यतीति यावत्। अत्र स्वप्ने विज्ञातुर्बुद्धिवृत्तस्य साक्षिणो विज्ञातेर्विनाशो नास्तीत्यर्थः। घ्राणादिजन्यगन्धादिज्ञानानुसन्धानविलये आत्मनो ज्ञानरूपत्वं बाध्यमिति श्रुत्यन्तरेणाह। अथेति। आत्मनो नित्यचिद्रूपत्वेऽपि स्वतोऽसङ्गतया गन्धाद्यसम्बन्धात् तत्सम्बन्धघटनात्मकवृत्त्यर्थानि घ्राणसाधनानि इति न तेषां वैयर्थ्यमित्याह। नवेति। परिच्छेदो वृत्तिः गन्धाय तद्गोचरान्तःकरणवृत्तये इत्यर्थः। प्राज्ञस्याप्यात्मनस्तत्वेऽपि चैतन्याभावात्मा चिद्रूप इत्युक्तं दर्शयति। ननु यदा सुप्तो न पश्यतीति यत् तत्सुषुप्ते शानुप्रज्ञान एव

इत्येवं रूपाः। अत 'यो वेदेदं जिघ्राणि' इति 'स चा
इति च सर्वैः करणद्वारैरिदं वेदेदं वेदेति विज्ञानेना
न्धानात् तद्रूपत्वसिद्धिः, नित्यस्वरूपचैतन्यत्वे घ्राणा
र्थक्यमिति चेन्न, गन्धादिविषयविशेषपरिच्छेदार्थत्वा
तथाहि दर्शयति गन्धाय घ्राणमित्यादि यत्तु सुप्ताद
चेतयन्त इति तस्य श्रुत्यैव परिहारोऽभिहितः।
प्रकृत्य "यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति न हि
दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् न तु तद्द्विती
ततोऽन्यद्विभक्तं यत् पश्येत्" इत्यादिना। एतदुक्तं भ
विषयाभावादियमचेतयमानता न चैतन्याभावा
यथा वियदाश्रयस्य प्रकाशस्य प्रकाश्याभावादनभि
स्वरूपाभावात् तद्वत्। वैशेषिकादितर्काश्च श्रुतिविरो
भासीभवति तस्मान्नित्यचैतन्यस्वरूप एवात्मेति निश्चि

---

न च पश्यतीत्यत्र हेतुः। नहीति। नाशायोग्यत्वादित्यर्थः। किं
पश्यतीत्यत आह। न त्विति। वृत्तेः साधनाधीनत्वोक्त्या
नस्य साधनाधीनत्वं हेतुरसिद्ध इत्युक्तं, साधनवैयर्थ्यतर्कोऽपि
गृह्णन्नित्याद्यनित्यज्ञानश्रुतीनां वृत्तिविषयत्वं व्याख्यातं,
ज्ञानं द्रव्यत्वादित्यादितर्काश्चागमबाधिताः फलवत्प्रधानवाक्या
प्रकाशत्वागमस्य बलवत्त्वात्। किञ्च निरवयवात्मनो मनःसंयो
क्तानित्यज्ञानगुणता समवायाभावाच्च न स्वसमवेतज्ञानवेद्यता कर्म
रोधाच्च। किञ्च ज्ञानस्यास्वैकवृत्तित्वे घटवदात्मैव ज्ञानं ।
रिमाणवत्तुल्या कामः संकल्प इत्याद्यया जडरूपाणामात्म
गौरवमिदनवद्यमात्मनः स्वप्रकाशत्वमिति सिद्धम् ॥

## उत्क्रान्तिगत्यागतीनां ॥ १९ ॥

इदानीन्तु किंपरिमाणो जीव इति चिन्त्यते, किमणुपरिमाण उत मध्यमपरिमाण आहोस्विन्महत्परिमाण इति । ननु नात्मोत्पद्यते नित्यचैतन्यश्चायमित्युक्तं, अतश्च पर एवात्मा जीव इत्यापतति, परस्य चात्मनोऽनन्तत्वमाम्नातं, तत्र कुतो जीवस्य परिमाणचिन्तावतार इति, उच्यते सत्यमेतत्, उत्क्रान्तिगत्यागतिश्रवणानि तु जीवस्य परिच्छेदं प्रापयन्ति, स्वशब्देन चास्य क्वचिदणुपरिमाणत्वमाम्नायते, तस्य सर्वस्यानाकुलत्वोपपादनायायमारम्भः । तत्र प्राप्तं तावदुत्क्रान्तिगत्यागतीनां श्रवणात् परिच्छिन्नोऽणुपरिमाणो जीव इति, उत्क्रान्तिस्तावत् 'स यदास्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति' इति । गतिरपि, 'ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इति, आगतिरपि 'तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणः' इति, आसामुत्क्रान्तिगत्यागतीनां श्रवणात् परिच्छिन्नस्ता-

---

स्वप्रकाशत्वादात्मस्वरूपादीषद्बहिष्ठं परिमाणमेवाश्रित्याध्यायशेषेणा-नार्थभिचिन्तनेनाशङ्क्य विचारयति । उत्क्रान्तिगत्यागतीनाम् । विषयसंशयौ दर्शयति । इदानीमिति । नात्मश्रुतेरित्यादिना गतार्थत्वमाशङ्क्य आत्माणुत्वश्रुतीनां महत्त्वश्रुतीनाञ्च विरोधभञ्जनार्थमस्याधिकरणस्यारम्भ इत्याह । ननु इत्यादिना । न केवलं श्रुतोत्क्रान्त्याद्यनुपपत्त्याऽऽत्मनोऽणुत्वं किन्तु योऽणुरात्मेति श्रुत्यापीत्याह । स्वशब्देनेति । तर्हि परे जीवस्याणुत्वात् मध्यमार्तिः विद्वान् तत्त्वविदिति मत्वा तत्त्वं व्याकुर्वन् पूर्वपक्षमाह । तत्र प्राप्तमित्यादिना । उक्तेरणुरिति

वज्जीव इति प्राप्नोति, न हि विभोश्चलनमवकल्पत इति सति च परिच्छेदे शारीरपरिमाणत्वस्यार्हतपरीक्षा निरस्तत्वादणुरात्मेति गम्यते ॥

स्वात्मना चोत्तरयोः ॥ २० ॥

उत्क्रान्तिः कदाचिदचलतोऽपि ग्रामस्वाम्यनिवृत्तिवद्देहस्वाम्यनिवृत्त्या कर्मक्षयेणावकल्प्येत, उत्तरे तु गत्यागती नाचलतः सम्भवतः, स्वात्मना हि तयोः सम्बन्धो भवति गमेः कर्तृस्थक्रियात्वात्। अमध्यमपरिमाणस्य च गत्यागती अणुत्व एव सम्भवतः। सत्योश्च गत्यागत्योरुत्क्रान्तिरपसृप्तिरेव देहादिति प्रतीयते, न ह्यनपसृप्तस्य देहाद्गत्यागती स्यातां देहप्रदेशानाञ्चोत्क्रान्तावपादानत्ववचनाच्च वा मूर्ध्नो वा न्येभ्यो वा शरीरदेशेभ्य इति। स एतास्ते

---

उत्तरसूत्रादात्मग्रहणं पूरितं, उत्क्रान्तिः श्रूयत इति शेषः मुमूर्षुः जीव एतैर्मुखादिभिश्चन्द्रलोकादिमं लोकं प्रति सं यातीत्यर्थः ॥

उत्क्रान्तिरात्मनो देहान्निर्गमो न भवति येनाणुत्वं स्यात् स्वामित्वनिवृत्तिरिति चेन्न। तदङ्गीकृत्याप्यणुत्वमावश्यकमित्याह स्वात्मनेति। उत्क्रान्तेरुत्तरयोर्गत्यागत्योः स्वात्मना कर्त्रा सम्बन्धमिति सूत्रयोजना, पाकानाश्रयस्य पक्तृत्ववद्गमनाश्रयस्यापि गन्तृत्वं किं न स्यादित्यत आह। गमेरिति। गमनस्य कर्तरि संयोगविभागरूपातिशयहेतुत्वात् कर्तृस्थत्वं लोकसिद्धमित्यर्थः। जीवोऽणु परिमाणत्वे सति गतिमत्त्वात् परमाणुवदित्याह। अमध्यमेति। कारं व्यजति। सत्योश्चेति। न स्वाम्यनिवृत्तिमात्रं उत्क्रान्तिः किन्तु देहान्निर्गम एवोत्क्रान्तिरित्यत्र लिङ्गान्तरमाह। देहप्रदेशानां

मात्राः समभ्याददानो हृदयमेवान्ववक्रामति शुक्रमादाय पुनरेति स्थानमिति चान्तरेऽपि शरीरे शारीरस्य गत्यागती भवतस्तस्मादप्यस्याणुत्वसिद्धिः ॥२०॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥२१॥

अथापि स्यान्नाणुरयमात्मा, कस्मादतच्छ्रुतेः अणुत्वविपरीतपरिमाणश्रवणादित्यर्थः। 'स वा एष महानज आत्मा, योऽयं विज्ञानमयः प्राणेषु, आकाशवत् सर्वगतश्च नित्यः, सत्यं ज्ञानमनन्तं ब्रह्म' इत्येवंजातीयका हि श्रुतिरात्मनोऽणुत्वे विप्रतिषिध्येतेति चेत् नैष दोषः। कस्मादितराधिकारात्। परस्य हि आत्मनः प्रक्रियायामेषा परिमाणान्तरश्रुतिः, परस्यैवात्मनः प्राधान्येन वेदान्तेषु वेदितव्यत्वेन प्रकृतत्वात्, विरजः पर आकाशादित्येवंविधाच्च परस्यैवात्मनः तत्र तत्र विशेषाधिकारात्। ननु 'योऽयं विज्ञानमयः प्राणेषु' इति शारीर एव महत्त्वसम्बन्धित्वेन

---

अपादानत्वं अवधित्वं चक्षुष्टो वा मूर्धादिभ्य एव आत्मा निष्क्रामतीति शेषः। किञ्च देहमध्येऽपि जीवस्य गत्यागतिश्रुतेरणुत्वमित्याह। स इति। इन्द्रियाणि गृह्णन् स्वप्नादौ हृदयं स जीवो गच्छति शुक्लं प्रकाशकं इन्द्रियग्रामकादाय पुनर्जागरितस्थानमागच्छतीत्यर्थः ॥२०॥

इतराधिकारादिति ब्रह्मप्रकरणात्। ननु महत्त्वश्रुतेः कथं परप्रकरणस्थत्वमित्यत आह। परस्यैवेति। या वेदान्तश्रुतिः सा परप्रकरणस्थैवेत्युत्सर्गात् तस्यास्तत्स्थत्वं अन्यथाधीतत्वादित्याह। विरज इति। निर्दोष इत्यर्थः। विज्ञानमयश्रुत्या प्रकरणं शारीरमिति शङ्कते। नन्विति। अणोर्जीवस्य ब्रह्मणा भेदाभेदाङ्गीकाराज्जीवाभेददृष्ट्या महत्त्वो-

प्रतिनिर्दिश्यते । शास्त्रदृष्ट्या त्वेष निर्देशो वामदेववद्द्रष्टव्यः, तस्मात् प्राज्ञविषयत्वात् परिमाणान्तरश्रवणस्य न जीवस्याणुत्वं विरुध्यते ॥२१॥

## स्वशब्दोन्मानाभ्यां च ॥ २२ ॥

इतश्चाणुरात्मा यतः साक्षादेवास्याणुत्ववाची शब्दः श्रूयते, 'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश' इति, प्राणसम्बन्धाच्च जीव एवायमणुरभिहित इति गम्यते । तथा चोन्मानमपि जीवस्याणिमानं गमयति 'वालाग्रशतभागस्य शतधा कल्पितस्य तु । भागो जीवः स विज्ञेयः' इति 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' इति चोन्मानान्तरम् । नन्वणुत्वे सत्येकदेशस्थस्य सकलदेहगतोपलब्धिर्विरुध्यते, दृश्यते च जाह्नवीह्रदनिमग्नानां सर्वाङ्गशैत्योपलब्धिर्निदाघसमये च सकलशरीरपरितापोपलब्धिरित्यत उत्तरं पठति ॥२२॥

---

क्रियेथा वामदेवस्याहं मनुरिति सर्वात्मत्वोक्तिरविरोधवाद् वाक्येति ॥२१॥

एवमुत्क्रान्त्यादिभिरणुत्वमनुमितं, तत्र श्रुतिमप्याह । स्वशब्देति । बालाग्रादुद्धृतः शततमो भागस्तस्मादप्युद्धृतः शततमो भागो जीव इति उद्धृत्य मानमुन्मानमल्पत्वाल्पपरिमित्यर्थः । आरः प्रोतः, तोत्रप्रोतायःशलाकाग्रमाराग्रं, तस्मादुद्धृता मात्रा मानं यस्य स जीवस्तथा ॥२२॥

## अविरोधश्चन्दनवत् ॥ २३ ॥

यथाहि हरिचन्दनविन्दुः शरीरैकदेशसम्बद्धोऽपि सन् सकलदेहव्यापिनमाह्लादं करोति, एवमात्मापि देहैकदेशस्थसकलदेहव्यापिनीमुपलब्धिं करिष्यति. त्वक्सम्बन्धाच्चास्य सकलशरीरगता वेदना न विरुध्यते. त्वगात्मनोर्हि सम्बन्धः कृत्स्नायां त्वचि वर्त्तते. त्वक् च कृत्स्नशरीरव्यापिनीति॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥

अत्राह यदुक्तमविरोधश्चन्दनवदिति तदयुक्तं, दृष्टान्तदार्ष्टान्तिकयोरतुल्यत्वात्, सिद्धे ह्यात्मनो देहैकदेशस्थत्वे चन्दनदृष्टान्तो भवति, प्रत्यक्षन्तु चन्दनस्यावस्थितिवैशेष्यमेकदेशस्थत्वं सकलदेहाह्लादनं च आत्मनः पुनः सकलदेहोपलब्धिमात्रं प्रत्यक्षं नैकदेशवर्त्तित्वम् । अनुमेयन्तु तदिति यदप्युच्येत, न चात्रानुमानं सम्भवति । किमात्मनः सकलशरीरगता वेदना त्वगिन्द्रियस्येव सकलदेहव्यापिनः सतः किं वा विभोर्नभस इव आहोस्विच्चन्दनविन्दोरिवाणोरेकदे-

---

त्वात्मसंयुक्तायास्त्वचो देहव्यापित्वादुपलब्धिकरत्वस्य मच्छिद्राऽणु-र्मोऽप्यापिकार्यकारित्वमविरुद्धम् । त्वगात्मनोरिति सम्बन्धस्य त्वगवच्छिन्नत्वादव्याप्तिर्न्न्यैकत्वादात्मसंयोगस्य कृत्स्नत्वङ्निष्ठत्वेत्यर्थः ॥

सिद्धे हीति । न तु सिद्धमित्युच्यत इत्यर्थः । विशेष एव वैशेष्यं चन्दनविन्दोरल्पत्वस्य प्रत्यक्षत्वात् त्वग्व्याप्त्यव्यापिकार्यकारित्वकल्पना युक्ता, जीवस्य त्वणुत्वे सन्देहाद्व्यापिकार्यदृष्ट्या व्यापित्वकल्पनमेव युक्तम् ।

ग्रस्यस्येति संशयानिवृत्तेरिति । अत्रोच्यते नायं दोषः। कस्मात् अभ्युपगमात् । अभ्युपगम्यते ह्यात्मनोऽपि चन्दनस्येव देहैकदेशवृत्तित्वमवस्थितिवैशेष्यं कथमिति उच्यते । हृदि हि । एष आत्मा पठ्यते वेदान्तेषु 'हृदि ह्येष आत्मा' 'स वा एष आत्मा,' 'हृदि कतम आत्मा' इति 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' इत्याद्युपदेशेभ्यः। तस्माद्दृष्टान्तदार्ष्टान्तिकयोरवैषम्याद्युक्तमेवैतदविरोधश्चन्दनवदिति ॥ २४ ॥

## गुणाद्वा लोकवत् ॥ २५ ॥

चैतन्यगुणव्याप्तेर्वाणोरपि सतो जीवस्य सकलदेहव्यापि कार्यं न विरुध्यते । यथा लोके मणिप्रदीपप्रभृतीनामपवरकैकदेशवर्त्तिनामपि प्रभाऽपवरकव्यापिनी सती कृत्स्नेऽपवरके कार्यं करोति तद्वत् । स्यात् कदाचिच्चन्दनस्य सावयवत्वात् सूक्ष्मावयवविसर्पणेनापि सकलदेहे आह्लादयितृत्वं न त्वणोर्जीवस्यावयवाः सन्ति यैरयं सकलदे

व्यापिकार्याश्रयो व्यापीत्यत्राह नेदिति चन्द्रप्रभाभागार्थः ।' आत्मा व्यापिकार्यकारित्वाच्चन्दनबिन्दुवदित्यनुमानमयुक्तं, त्वगादौ व्यभिचारादित्याह । न चालानुमानमिति । पूर्वोक्तश्रुतिभिर्जीवस्याणुत्वनिश्चयाद्वृत्तिस्थलश्रुतिभिरेकदेशस्थत्वनिश्चयाच्च न दृष्टान्तवैषम्यमिति परिहारभागार्थमाह अत्रोच्यत इति ॥ २४ ॥

आत्मवत्तद्धर्मज्ञानस्याप्यणुत्वं स्यात्, कदाचित्कन्तु देहपरिमाणमित्यत्राह तत एव व्यापित्वमिति मतान्तरमाह । गुणाद्वेति । नाणुत्वेन चन्दनदृष्टान्तापरितोषः सूचितस्तमाह । स्यादिति । उत्तरकम

विप्रसर्पेदित्याशङ्क्य गुणाद्वा लोकवदित्युक्तं, कथं पुनर्गुणो गुणिव्यतिरेकेणान्यत्र वर्त्तेत, नहि पटस्य शुक्लो गुणः पटव्यतिरेकेणान्यत्र वर्त्तमानो दृश्यते। प्रदीपप्रभावद्भवेदिति चेन्न, तस्या अपि द्रव्यत्वाभ्युपगमात्। निविडावयवं हि तेजोद्रव्यं प्रदीपः, प्रविरलावयवन्तु तेजोद्रव्यमेव प्रभेति अत उत्तरं पठति ॥

व्यतिरेको गन्धवत् ॥२६॥

यथा गुणस्याऽपि सतो गन्धस्य गन्धवद्द्रव्यव्यतिरेकेण वृत्तिर्भवति अप्राप्तेष्वपि कुसुमादिषु गन्धवत्सु गन्धोपलब्धेः, एवमणोरपि सतो जीवस्य चैतन्यगुणव्यतिरेको भविष्यति, अतश्चानैकान्तिकमेतद्गुणत्वाद्रूपादिवत् आश्रयविश्लेषानुपपत्तिरिति गुणस्यैव सतो गन्धस्याश्रयविश्लेषदर्शनात्, गन्धस्याऽपि सहैवाश्रयेण विश्लेष इति चेन्न, यस्मान्मूलद्रव्या-

---

व्याचष्टे शङ्कते। कथमिति। ज्ञानं न गुण्यतिरिक्तदेशव्यापि गुणत्वाद्रूपवत्, न च प्रभायां व्यभिचारस्तस्या अपि द्रव्यत्वादिति प्राप्ते गन्धव्यभिचारमाह। अत उत्तरमिति ॥

गुणस्य द्रव्यव्यतिरेकेणाश्रयविश्लेषः। ननु विश्लिष्टावयवानामल्पत्वाद्द्रव्यक्षयो न भातीत्यत आह। अपचीयमानमपीति। अपरिधारणे, पूर्वावस्थातो भिन्नं गात्रीयमाणमिव तद्द्रव्यमनुमीयत इत्यर्थः। विमतं अवि-श्लिष्टावयवं पूर्वावस्थातो गुरुत्वाद्यपचयहीनत्वात् सम्मतवदिति भावः। प्रकृतं। स्यादेतदिति। विश्लिष्टानामल्पत्वादितरप्रत्यक्षत्वं, अवयवान्तराणां प्रवेशादित्यपि द्रव्यम्। विशेषोऽवयवानां विश्लेषप्रवेशरूपः

ढ्विश्लेषस्तस्य क्षयप्रसङ्गात् । अक्षीयमाणमपि तत्पूर्वावस्था तो गम्यते, अन्यथा तत्पूर्वावस्थैर्गुरुत्वादिभिर्हीयेत । स्यादेतत् गन्धाश्रयाणां विश्लिष्टानामवयवानामल्पत्वात् सन्नपि विश्लेषो नोपलक्ष्यते, सूक्ष्मा हि गन्धपरमाणवः सर्वतो विप्रसृता गन्धबुद्धिमुत्पादयन्ति नासिकापुटमनुप्रविशन्त इति चेत्, न अतीन्द्रियत्वात् परमाणूनां, स्फुटगन्धोपलब्धेश्च नागकेशरादिषु । न च लोके प्रतीतिर्गन्धवद्द्रव्यमाघ्रातम् इति, गन्ध एवाघ्रात इति तु लौकिकाः प्रतीयन्ति । रूपादिष्वाश्रयव्यतिरेकानुपलब्धेर्गन्धस्याप्ययुक्त आश्रयव्यतिरेक इति चेत्, न प्रत्यक्षत्वादनुमानाप्रवृत्तेः, तस्माद्यद्यथा लोके दृष्टं तत् तथैवानुमन्तव्यं निरूपकैर्नान्यथा । न हि रसो गुणो जिह्वयोपलभ्यत इति अतो रूपादयोऽपि गुणा जिह्वयैवोपलभ्येरन्निति नियन्तुं शक्यते ॥

## तथा च दर्शयति ॥ २७ ॥

हृदयायतनत्वमणुपरिमाणत्वं चात्मनोऽभिधाय तस्यै

---

मर्वापि न क्षायते, तथा च गुरुत्वापचयो न भातीति हेतोरन्यथासिद्धिरिति शङ्कार्थः । व्यागच्छन्तोऽवयवाः परमाणवस्त्रसरेणवो वा, नाद्यस्तद्रूपवद्गन्धस्याप्यनुपलब्धिप्रसङ्गादिति परिहरति । नेति । द्वितीयं प्रत्याह । स्फुटेति । त्रसरेणुगन्धश्चेत् स्फुटो न स्यादित्यर्थः । अतो गन्धस्य पुष्पादिस्थस्यैव गुणव्यतिरेको वाच्य इति भावः । गन्धो न गुणिविश्लिष्टः गुणत्वात् रूपवदिति शङ्कते । रूपेति । निरोध्य प्रत्यक्षत्वाद्बाधश्च त्वाच्च । नेति ॥

आत्मनश्चैतन्यगुणेनैव देहव्याप्तिरित्यत्र श्रुतिमाह सूत्रकारः । तथा च दर्शयतीति । तद्व्याचष्टे । हृदयेति ॥

'आलोमभ्य आनखाग्रेभ्यः' इति चैतन्येन गुणेन समस्तशरीरव्यापित्वं दर्शयति॥

पृथगुपदेशात्॥ २८॥

'प्रज्ञया शरीरं समारुह्य' इति चात्मप्रज्ञयोः कर्तृकरणभावेन पृथगुपदेशात् चैतन्यगुणेनैवास्य शरीरव्यापिताऽवगम्यते, तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति च कर्तुः शरीरात् पृथग्विज्ञानस्योपदेशः, एतमेवाभिप्रायमुपोद्बलयति, तस्मादणुरात्मेत्येवं प्राप्ते ब्रूमः॥

तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्॥ २९॥

तुशब्दः पक्षं व्यावर्तयति। नैतदस्त्यणुरात्मेति, उत्पत्त्यश्रवणात्, परस्यैव तु ब्रह्मणः प्रवेशश्रवणात् तादात्म्योपदेशाच्च परमेव ब्रह्म जीव इत्युक्तम्। परमेव चेद्ब्रह्म जीवः तस्माद्यावत् परं ब्रह्म तावानेव जीवो भवितुमर्हति, परस्य च ब्रह्मणो विभुत्वमाम्नातं, तस्माद्विभुर्जीवः। तथा च 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' इत्ये-

---

तत्रैव व्यवन्तरार्थं सूत्रम्। पृथगिति। विज्ञानमिन्द्रियाणां ज्ञानशक्तिं विज्ञानेन चैतन्यगुणेनादाय शेत इत्यर्थः। एतं चैतन्यगुणव्याप्तिगोचरमभिप्रायम्॥

तस्मादणुत्वविभुत्वश्रुतीनां विरोधादप्रामाण्यप्राप्तावणुत्वं जीवस्य विभुत्वमीश्वरस्येति व्यवस्थयाविरोध इत्येकदेशिपक्षो दर्शितस्तं दूषयन् सिद्धान्तसूत्रं व्याचष्टे। तुशब्द इत्यादिना। तस्माद् ब्रह्माभिन्नत्वात् विभुर्जीवः ब्रह्मपदितत्त्वमसानानुपपत्तिरिति श्रुतीस्मृती आह। तथा च स वा एष इति। नित्यः सर्वगतः स्थाणुरित्याद्याः स्मार्तवादाः। एतेन जीवस्य

वंजातीयका जीवविषया विभुत्ववादाः श्रौताः स्मार्ताश्च समर्थिता भवन्ति। न चाणोर्जीवस्य सकलशरीरगता वेद पपद्यते। त्वक्सम्बन्धात् स्यादिति चेत्, न, त्वक्कण्ट तोदनेऽपि सकलशरीरगतैव वेदना प्रसज्येत, त्वक्कण्ट योर्हि संयोगः कृत्स्नायां त्वचि वर्तते, त्वक्च कृत्स्नश व्यापिनीति पादतल एव तु कण्टकतुन्ना वेदनां प्रति न्ते। न चाणोर्गुणव्याप्तिरुपपद्यते गुणस्य गुणिदेशत गुणत्वमेव हि गुणिनमनाश्रित्य गुणस्य हीयेत। प्रदीप भायाश्च द्रव्यान्तरत्वं व्याख्यातं, गन्धोऽपि गुणत्वाभ्यु मात् साश्रय एव सञ्चरितुमर्हति, अन्यथा गुणत्वहानि ङ्गात्। तथा चोक्तं भगवता द्वैपायनेन 'उपलभ्याप्सु

---

नत्वाभेदज्ञानेऽणुत्वाभावधीस्तस्यां तदित्यन्योऽन्याश्रय इति निरस्तम् ध्यानमहावाक्यानुगुणश्रुतिस्मृतिभिरणुत्वाद्यापन्नियत्यानन्तरमभेदज्ञानम् धानवाक्यविरोधे गुणभूताणुत्वश्रुतीनामौपाधिकाणुत्वविषयकत्व न्यान्यकल्पनेति न्यायादिति भावः। किञ्च सर्वदेहव्यापिवेदना न्यथानुपपत्त्याऽणुत्वविषयत्वेन कथञ्चिदर्थवादा नेयाः लौकिकन्या तेषां दुर्बलत्वादिति न्यायादिति मत्वाह। न चाणोरिति। त्वचीति। यद्वात्मसम्बन्धस्य त्वग्व्याप्त्या देहव्यापिनी वेद नर्थक्तिप्रसङ्ग इति दूषयति। नेति। प्रसङ्गस्येष्टत्वं निरस्यति। पर्शेति। तस्मादल्पमहतोः संयोगो न महद्व्यापी कण्टकसंयोग व्याप्यप्रदर्शनात्, तथा च कण्टकसंयोगस्त्वगेकदेशस्य एवेति देह वेदनानुपपत्तिः। न च निरंशे त्वगात्मसम्बन्धस्य व्यापित्वात् एकांशे देहव्यापिवेदनाप्रसङ्ग इति वाच्यम्। यावतो विषयसम्बन्ध

न्यं केचिद्ब्रूयुरनैपुणाः। पृथिव्यामेव तं विद्यादपो वायुञ्च संश्रितमिति। यदि चैतन्यं जीवस्य समस्तशरीरं व्याप्नुयान्नाणुर्जीवः स्यात्, चैतन्यमेव ह्यस्य स्वरूपमग्नेरिवौष्ण्यप्रकाशौ, नात्र गुणगुणिविभागो विद्यत इति। शरीरपरिमाणत्वञ्च प्रत्याख्यातं, परिशेषाद्विभुर्जीवः। कथं तर्ह्यणुत्वादिव्यपदेश इत्यत आह। तद्गुणसारत्वात् तु तद्व्यपदेश इति। तस्या बुद्धेर्गुणास्तद्गुणा इच्छा द्वेषः सुखं दुःखं इत्येवमादयस्तद्गुणाः सारः प्रधानं यस्यात्मनः संसारित्वे सम्भवति स तद्गुणसारस्तस्य भावस्तद्गुणसारत्वम्। न हि बुद्धेर्गुणैर्विना केवलस्यात्मनः संसारित्वमस्ति बुद्ध्युपाधिधर्माध्यासनिमित्तं हि कर्तृत्वभोक्तृत्वादिलक्षणं संसारित्वमकर्त्तुरभोक्तुश्चासंसारिणो नित्यमुक्तस्य सत आ-

---

तावद्द्रव्यात्मसम्बन्धस्तावद्द्रव्यवेदनाहेतुरिति नियमात्। न चैवं विषयत्वक्सम्बन्ध एव तद्धेतुरस्तु किमात्मव्याप्त्येति वाच्यम्। वेदना हि सुखं दुःखं तदनुभवश्च, न चैषां व्यापकानां कार्याणामल्पमुपादानं सम्भवति कार्यस्योपादानादधिकदेशत्वानुपपत्तेः। न चैषां व्यापकत्वमसिद्धं स्रोतसि गङ्गानिमग्नस्य सर्वाङ्गव्यापिनः शैत्यानुभवस्य दुरपह्नवत्वात्। यदुक्तं गुणस्यापि गुणिविश्लेषो गन्धवदिति तत्रेत्याह। न वायोरिति। गन्धो नाश्रयाद्विश्लिष्टः गुणत्वाद्रूपवदित्यनुमानागममाह। तथा चोक्तमिति। न च प्रत्यक्षबाधः गन्धस्य प्रत्यक्षत्वेऽपि निराश्रयस्याप्रत्यक्षत्वात्तत्र [illegible] स्फुटगन्धोपलब्धावपि, द्रव्यान्तरप्रवेशाद् सूक्ष्मता मूलद्रव्यस्य इति भावः। एवं चैतन्यस्य गुणत्वकल्पेनात्र तद्द्वारा परमाणुत्वं निरस्तं, सम्प्रति तस्य गुणत्वमसिद्धमित्याह। यदि चैतन्यमिति। [illegible] सूत्रं विना विभु-[illegible]त्वं प्रसाध्याणुत्वादव्यपदेशविषयदर्शनार्थं सूत्रं व्याचष्टे। [illegible]।

त्मनं स्तस्मात् तद्गुणसारत्वाद्बुद्धिपरिमाणेनास्य परिमाण
पदेशः, तदुत्क्रान्त्यादिभिश्चास्योत्क्रान्त्यादिव्यपदेशो न स्व
तथा च,

"वालाग्रशतभागस्य शतधा कल्पितस्य तु।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते"।

इत्यणुत्वं जीवस्योक्त्वा तस्यैव पुनरानन्त्यमाह। त
वमेव समञ्जसं स्यात् यद्यौपचारिकमणुत्वं जीवस्य
पारमार्थिकञ्चानन्त्यम्। न ह्युभयं मुख्यमवकल्पेत। न
नन्त्यमौपचारिकमिति शक्यं विज्ञातुं सर्वोपनिषत्सु ब्र
त्मभावस्य प्रतिपिपादयिषितत्वात्। तथेतरस्मिन्नप्यु
बुद्धेर्गुणेनात्मगुणेन चैव 'आराग्रमात्रो ह्यवरोऽपि
इति बुद्धिगुणसम्बन्धेनैवाराग्रमात्रतां शास्ति न स्वेनै
ना। 'एषोऽणुरात्मा चेतसा वेदितव्यः' इत्यत्रापि न
वस्याणुपरिमाणत्वं शिष्यते परस्यैवात्मनश्चक्षुराद्यनव

---

अन्तरा विज्ञानमनसी हृदि ह्योति च प्रकृता बुद्धिर्योग्यत्वात् त
परामृश्यते। बुद्धिगुणानामात्मन्यध्यासादणुत्वाद्युक्तिर्न स्वतः आन
तिविरोधादित्याह। तथा चेति। व्याकार्यकारणद्रव्यसमानाधिकर
तत्त्वमसीति वाक्यस्य सोऽयमिति वाक्यवदखण्डाभेदार्थत्वादानन्त्यं
मुख्यमध्यस्तमित्यर्थः। उक्तश्चैतदक्षराधिकरणे 'प्रतिपाद्यविरुद्धं
विशेषणमविवक्षितं' इति प्राप्यवाक्यमाराप्यवाक्यस्वेतप्रत्य
तस्याद्यं निरस्य द्वितीयं निरस्यति। तथेतरस्मिन्नपीति। बुद्धेर्गु
मिश्चेनात्मन्यध्यस्तो गुणो भवति तेनात्मगुणेनाध्यस्तेनैवाराग्रपरि
उपलक्षणः जीवो दृष्टः स्वतस्त्वनन्त एवेत्यर्थः। 'न चक्षुषा गृह्यते'

त्वेन ज्ञानप्रसादावगम्यत्वेन च प्रकृतत्वात्, जीवस्यापि च मुख्याणुपरिमाणत्वानुपपत्तेः, तस्मात् दुर्ज्ञानत्वाभिप्रायमिदमणुत्ववचनमुपाध्यभिप्रायं वा द्रष्टव्यम्। तथा प्रज्ञया शरीरं समारुह्येत्येवंजातीयकेष्वपि भेदोपदेशेषु बुद्ध्यैवोपाधिभूतया जीवः शरीरं समारुह्येत्येवं योजयितव्यं व्यपदेशमात्रं वा शिलापुत्रकस्य शरीरमित्यादिवत्। न ह्यत्र गुणगुणिविभागो विद्यत इत्युक्तम्। हृदयायतनत्ववचनमपि बुद्धेरेव तदायतनत्वात्। तथोत्क्रान्त्यादीनामप्युपाध्यायत्ततां दर्शयति 'कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि' इति, 'स प्राणमसृजत' इति। उत्क्रान्त्यभावे हि गत्यागत्योरप्यभावो विज्ञायते, न ह्यनपसृप्तस्य देहाद्गत्यागती स्याताम्। एवमुपाधिगुणसारत्वाज्जीवस्याणुत्वादिव्यपदेशः प्राज्ञवत्, यथा प्राज्ञस्य परमात्मनः सगुणेषूपासनेषूपाधिगुणसारत्वादणीयस्त्वादिव्यपदेशोऽणीयान् व्रीहेर्वा यवाद्वा मनोमयः प्राणशरीरः सर्वगन्धः सर्वरसः सत्यकामः सत्यसंकल्प इत्येवंप्रकारस्तद्वत्।

---

वाचा नान्यैर्देवैस्तपसा कर्मणा वा। ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः' इत्यात्मा यतोऽणुरात्मेत्युक्तः पर एव यदि जीवः तथाप्यस्याणुत्वं दुर्ज्ञानार्थं इत्याह। जीवस्यापीति। यदुक्तं दशकुपदेशाद्भिन्नत्वगुणेनैवात्मनो देहव्याप्तिरिति तत्राह। तथा प्रज्ञयेति। बुद्धिप्रज्ञयेत्यर्थः। यदि चैतन्यं प्रज्ञा तदा भेदोपचार इत्याह। व्यपदेशमात्रं वेति। ननु चैतन्यं गुण इति भेदो गुण्योऽस्तु नेत्याह। न ह्यत्रेति। निर्गुणत्वश्रुतेरित्यर्थः। अन्यदपि पूर्वोक्त

स्यादेतद् यदि बुद्धिगुणसारत्वादात्मनः संसारित्वं कल्प्येत ततो बुद्ध्यात्मनोर्भिन्नयोः संयोगावसानमवश्यं भावीति बुद्धिवियोगे सत्यात्मनो विभक्तस्यानालक्ष्यत्वादसत्त्वमसंसारित्वं वा प्रसज्येतेत्यत उत्तरं पठति ॥

यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥३

नैवमनन्तरनिर्दिष्टदोषप्रसङ्ग आशङ्कनीयः, कस्मात् यावदात्मभावित्वात् । बुद्धिसंयोगस्य यावदयमात्मा संसारी भवति यावदस्य सम्यग्दर्शनेन संसारित्वं न निवर्तते तावदस्य बुद्ध्या संयोगो न शाम्यति । यावदेव चायं बुद्ध्युपाधिसम्बन्धस्तावदेवास्य जीवस्य जीवत्वं संसारित्वं च, परमार्थतस्तु न जीवो नाम बुद्ध्युपाधिपरिकल्पितस्वरूपव्यतिरेकेणास्ति । न हि नित्यमुक्तस्वरूपात् सर्वज्ञादीश्वरादन्यश्चेतनो धातुर्द्वितीयो वेदान्तार्थनिरूपणायामुपलभ्यते 'नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता' नान्यदतोऽस्ति द्रष्टृ, मन्तृ, विज्ञातृ' तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिश्रुतिशतेभ्यः । कथं पुनरव-

---

बुद्ध्याद्युपाधिमत्त्वात् । [illegible] । नैवं दर्शनं [illegible] [illegible] । [illegible] [illegible] । [illegible] यद् यतः संसारित्वमतः किं सुषुप्त्यादावपि नास्ति । [illegible] । यथा पुंस्त्वादिकं [illegible] [illegible] [illegible] । [illegible] । [illegible] [illegible] [illegible] । [illegible] [illegible]

ध्यते यावदात्मभावी बुद्धिसंयोग इति तद्दर्शनादित्याह। तथा हि शास्त्रं दर्शयति 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव' इत्यादि। तत्र विज्ञानमय इति बुद्धिमय इत्येतदुक्तं भवति। प्रदेशान्तरे 'विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः' इति विज्ञानस्य मनआदिभिः सह पाठात् बुद्धिमयत्वं तद्गुणसारत्वमेवाभिप्रेयते, यथा स्त्रीमयो जाल्मो देवदत्त इति स्त्रीरागादिप्रधानोऽभिधीयते तद्वत्। स समानः सन्नुभौ लोकावनुसञ्चरति इति च लोकान्तरगमनेऽप्यवियोगं बुद्ध्यादिभिर्दर्शयति, केन समानस्तयैव बुद्ध्या इति गम्यते सन्निधानात्। तच्च दर्शयति 'ध्यायतीव लेलायतीव' इति, एतदुक्तं भवति नायं स्वतो ध्यायति नापि चलति ध्यायन्त्यां बुद्धौ ध्यायतीव चलन्त्यां चलतीवेति। अपि च मिथ्याज्ञानपुरःसरोऽयमात्मनो बुद्ध्युपाधिसम्बन्धः, न च मिथ्याज्ञानस्य सम्यग्ज्ञानादन्यत्र निवृत्तिरस्तीत्यतो यावत् ब्रह्मात्मतानवबोधस्तावदयं बुद्ध्याद्युपाधिसम्बन्धो न शाम्यति। दर्शयति च 'वेदाहमेतं पुरुषं

---

[illegible]

महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाति-
मृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति । ननु सुषुप्तप्र-
लययोर्न शक्यते बुद्धिसम्बन्धः आत्मनोऽभ्युपगन्तुं 'सता सो-
तदा सम्पन्नो भवति स्वमपीतो भवति' इति वचना-
त्कृत्स्नविकारप्रलयाभ्युपगमाच्च तत्कथं यावदात्मभावि-
बुद्धिसम्बन्धस्त्वेत्यत्रोच्यते ॥ ३०॥

## पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

यथा लोके पुंस्त्वादीनि बीजात्मना विद्यमानान्येव बाल्यादिष्वनुपलभ्यमानानि अविद्यमानवदभिप्रेयमाणानि यौवनादिष्वाविर्भवन्ति, नाविद्यमानान्युत्पद्यन्ते षण्ढादीनामपि तदुत्पत्तिप्रसङ्गात्, एवमयमपि बुद्धिसम्बन्धः शक्त्यात्मना विद्यमान एव सुषुप्तप्रलययोः पुनः प्रबोधप्रसवयोराविर्भवति । एवं ह्येतद्युज्यते, न ह्याकस्मिकी कस्यचिदुत्पत्तिः सम्भवति अतिप्रसङ्गात् । दर्शयति च सुषुप्तादुत्थानमविद्यात्मकबीजसद्भावकारितं सति सम्पद्य न विदुः स-

---

तदर्थः । यावदात्मभावित्वसाक्षित्वं गम्यते । नन्विति । सुषुप्तौ बुद्ध्यस्त्वे ब्रह्मसम्पत्तिर्न स्यात् प्रलये तत्सत्त्वे प्रलयव्याहतिरित्यर्थः ॥३०॥

सूक्ष्मरूपेणात्मना बुद्धेर्यावदात्मभावित्वसिद्धिरित्याह । पुंस्त्वेति । पुंस्त्वं रेतः, आदिपदेन श्मश्र्वादिग्रहः, यथा बुद्धिर्व्यव्यक्तत्वेऽपि बाल्ये बीजात्मना सतो पुंस्त्वादेः प्रबोधेऽभिव्यक्तिरित्यत्र श्रुतिमा-

सम्पद्यामहे इति 'स इह व्याघ्रो वा सिंहो वा' इत्यादिना। तस्मात् सिद्धमेतद्यावदात्मभावी बुद्ध्याद्युपाधिसम्बन्ध इति॥

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा॥ ३२॥

तच्चात्मन उपाधिभूतमन्तःकरणं मनो बुद्धिर्विज्ञानं चित्तमिति चानेकधा तत्र तत्राभिलप्यते। क्वचिच्च वृत्तिविभागेन संशयादिवृत्तिकं मन इत्युच्यते, निश्चयादिवृत्तिकं बुद्धिरिति। तच्चैवम्भूतमन्तःकरणमवश्यमस्तीत्यभ्युपगन्तव्यम्। अन्यथा ह्यनभ्युपगम्यमाने तस्मिन्नित्योपलब्ध्यनुपलब्धिप्रसङ्गः स्यात् आत्मेन्द्रियविषयाणामुपलब्धिसाधनानां सन्निधाने सति नित्यमेवोपलब्धिः प्रसज्येत। अथ सत्यपि

---

दर्शयतीति। न पिबुरित्यविद्यात्मकबीजसद्भावोक्तिः। ते व्याघ्रादयः पुनराभवन्ति इत्यभिव्यक्तिनिर्देशः॥

बुद्धिसद्भावे मानमाह सूत्रकारः। नित्येति। मनसा ह्येव पश्यति, बुद्ध्या च न विचेष्टति, विज्ञानं यज्ञं तनुते, चेतसा वेदितव्यं, चित्तेन चेतयितव्यञ्चेति तत्र तत्र श्रुतिषु मनआदिपदवाच्यं तावद्बुद्धिद्रव्यं प्रसिद्धमित्यर्थः। कथमेकस्यानेकोक्तिस्तत्राह। क्वचिच्चेति। गर्ववृत्तिकोऽहङ्कारो विज्ञानं चित्प्रधानं स्मृतिप्रधानं वा चित्तमित्यपि द्रष्टव्यम्। यद्यपि साक्षिप्रत्यक्षसिद्धमन्तःकरणं श्रुत्यनूदितञ्च तथापि प्रत्यक्षश्रुत्योर्विवदमानं प्रति व्यासङ्गानुपपत्त्या तत्साधयति। तच्चेत्यादिना। सूत्रं योजयति। अन्यथेति। पञ्चेन्द्रियाणां पञ्चविषयसम्बन्धे सति नित्यं युगपत् पञ्चोपलब्धयः स्युः, मनोऽतिरिक्तसामग्र्याः सत्त्वात् यदि सत्यामपि सामग्र्यां उपलब्ध्यभावस्तर्हि सदैवानुपलब्धिप्रसङ्गादित्यर्थः। अतः कादाचित्कोपलब्धिनियामकं मन एष्टव्यमिति

हेतुसमवधाने फलाभावस्ततोऽपि नित्यमेवानुपलब्धि प्रसज्येत, न चैवं दृश्यते। अथ वान्यतरस्यात्मन इन्द्रियस्य शक्तिप्रतिबन्धोऽभ्युपगन्तव्यः। न चात्मनः शक्तिप्रतिबन्धः सम्भवति अविक्रियत्वात् नापीन्द्रियस्य, न हि तस्य पूर्वोत्तरयोः क्षणयोरप्रतिबद्धशक्तिकस्य ततोऽकस्माच्छक्तिः प्रतिबध्येत, तस्मात् यस्यावधानानवधानाभ्यामुपलब्ध्यनुपलब्धी भवतस्तन्मनः। तथा च श्रुतिः, 'अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषम्' इति 'मनसा ह्येव पश्यति मनसा शृणोति' इति च। कामादयश्चास्य वृत्तय इति दर्शय

---

भावः। ननु सत्यपि करणिसंयोगे दारुकादाचित्कत्ववदुपलब्धेः कादाचित्कत्वमस्तु किं मनसेत्याशङ्क्यान्यतरनियमो वेत्येतद्व्याचष्टे। अथेति। सत्यां सामग्र्यां नित्योपलब्धिरङ्गीकार्यायां अन्यतरस्य कारकैर्वा कैश्चिच्छक्तिप्रतिबन्धनियमो वाङ्गीकार्यः, यथा मणिनाऽग्निशक्तिप्रतिबन्ध इति वाकारार्थः। अस्तु प्रतिबन्ध इत्यत आह। न चेति। चेन्द्रियसंशस्तु शक्तिप्रतिबन्धकत्वं प्रतिबन्धकाभावात्, न च दृष्टसामग्र्यां सत्यामदृष्टं प्रतिबन्धकमिति युक्तं अतिप्रसङ्गात्। न च व्यासङ्गः प्रतिबन्धकमनोऽसत्त्वे तस्यासम्भवात्, तथा हि रसादीनां सहोपलब्धिः रसबुभुत्सारूपो व्यासङ्गो रूपाद्युपलब्धिप्रतिबन्धको वाच्यः, स च बुभुत्सारूपत्वाद्गुणस्याश्रयः, तत्रात्मनोऽसङ्गनिर्गुणकूटस्थस्य गुणित्वायोगात्पर एव गुणित्वेनैष्टव्यमिति व्यासङ्गानुपपत्त्या मनःसिद्धिः। एतदभिप्रेत्योपसंहरति। तस्मादिति। अवधानं बुभुत्सा, न चानित्यतोऽपि बुभुत्साद्युत्पन्नस्य च बुभुत्सोपलब्धिर्नियामिकेति वाच्यं, अनेकविषयबुद्धिकर्तृदेव तस्या नियामकत्वाङ्गीकारात्। येषां मते पुन रूपादीनामात्मधर्मत्वं तेषां मनो दुर्लभमिति मन्तव्यम्। इच्छादिधर्मित्वेनात्मना व्यासङ्गोपपत्तेः

'कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इति, तस्माद्युक्तमेतत् तद्गुणसारत्वात् तद्व्यपदेश इति॥

## कर्ता शास्त्रार्थवत्त्वात्॥ ३३॥

तद्गुणसारत्वाधिकारेणैवापरोऽपि जीवधर्मः प्रपञ्च्यते। कर्ता चायं जीवः स्यात्, कस्मात् शास्त्रार्थवत्त्वात्। एवञ्च यजेत जुहुयात् दद्यादित्येवंविधं विधिशास्त्रमर्थवत् भवति, अन्यथा तदनर्थकं स्यात्। तद्धि कर्तुः सतः कर्तव्यविशेषमुपदिश-

---

त्येन तदाह। तद्धि कर्तुः सत इति। मयेदं कर्तव्यमिति बोधकत्वस्य सत्त्वादिति व्यासङ्गस्य भानमत्र श्रुतिमाह। तथा चेति। न केवलं व्यासङ्गात्मनः सिद्धिः किन्तु कामाद्याश्रयत्वेनापीत्याह। कामादय इति। बुद्धेः प्रामाणिकत्वोक्तिफलमाह। तस्मादिति॥

एवमात्मन्यणुत्वाद्याभासोक्त्या स्वाभाविकं महत्त्वं स्थापितं सम्प्रति ततो वशिष्टं कर्तृत्वं साधयति। कर्ता शास्त्रार्थवत्त्वात्। स निर्विकल्पो महानात्मा कर्ता न वेत्यसङ्गत्वश्रुतीनां विध्यादिश्रुतीनाञ्च विप्रतिपत्त्या संशये बुद्धिकर्तृत्वेनैव विध्यादिशास्त्रोपपत्तेरकर्तात्मेति सांख्यपक्षप्राप्तौ सिद्धान्तयन्नेव तद्गुणसारत्वोक्त्यात्मनि कर्तृत्वाध्यासस्यापि सिद्धत्वात् पुनरुक्तिमाशङ्क्य सांख्यपक्षनिरासार्थमात्मनि कर्तृत्वाध्यासप्रपञ्चनान्न पुनरुक्तिरित्याह। तद्गुणेति। अधिकारः प्रसङ्गः, वस्तुतोऽसङ्गत्वविद्यातः, कर्तृत्वविधायककर्तृत्वश्रुतीनां अविरोधोक्तेः कर्तृत्वविचारात्मकाधिकरणत्रयस्य पादसङ्गतिः, श्रुतीनां मिथोविरोधाविरोधौ पूर्वोत्तरपक्षयोः फलं, अत्र पूर्वपक्षे सन्न्यासाभावाच्छास्त्रवैयर्थ्यं फलं सिद्धान्ते कर्तृत्वादिमत्त्वस्याध्यासत्वा-त्सङ्गतेति भेदः। ननु बुद्धिकर्तृत्वेन शास्त्रार्थवत्त्वाऽस्तु किं जीवकर्तृ-

ति, न चासति कर्तृत्वे तदुपपद्यते तथेदमपि शास्त्रमर्थवद्भवति, 'एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' इति ॥

## विहारोपदेशात् ॥ ३४ ॥

इतश्च जीवस्य कर्तृत्वं यज्जीवप्रक्रियायां सन्ध्ये स्थाने विहारमुपदिशति 'स ईयते अमृतो यत्र कामम्,' इति 'स्वे शरीरे यथाकामं परिवर्तते' इति च ॥

## उपादानात् ॥ ३५ ॥

इतश्चास्य कर्तृत्वं यज्जीवप्रक्रियायामेव करणानामुपादानं सङ्कीर्तयति 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' इति 'प्राणान् गृहीत्वा' इति च ॥

---

चेतनस्यैव कर्तृत्वं वाच्यं न त्वचेतनाया बुद्धेः। किञ्च भोक्तुरात्मनः कर्तृता वाच्या शास्त्रफलं प्रयोक्तरीति न्यायादिति भावः। सन्ध्यं स्थानं स्वप्नः अमृतः स आत्मा यथेष्टमीयते गच्छतीति ॥

विहारोपदेशात्। आत्मा कर्ता प्राणानां मध्येऽपि ज्ञानेन गु[णेन] विज्ञानसमर्थमिन्द्रियजातं आदाय शेते इति प्राणान् गृहीत्वा परिवर्तत इति ॥

उपादानकर्तृत्वमात्मनः, अकर्तृत्वे उपादानानुपपत्तेरिति भावः। विज्ञानशब्दो जीवस्य निर्देशो न चेत् तदा प्रथमानिर्देशाद्विपर्ययः [क]रणशब्दोक्तितृतीयया निर्देशः स्यात्, तस्मादिह श्रुतौ तत्तत इत्यादौ कर्तृवाचिना विज्ञानपदस्य सामानाधिकरण्यनिर्देशात् क्रियायामात्मनः कर्तृत्वं सूच्यत इति सूत्रभाष्ययोरर्थः ॥

सूत्रान्तरमवतारयति। कर्तेति। जीवः स्वतन्त्रश्चेदिष्टमेव कुर्याद्यदि स्वतन्त्रस्तेन कर्ता स्वतन्त्रः कर्तेति न्यायादित्यर्थः ॥

सत्यपि स्वातन्त्र्ये कारकवैचित्र्यादनियता प्रवृत्तिरिति सूत्रेण

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्य्ययः॥३६॥

इतश्च जीवस्य कर्तृत्वं यदस्य लौकिकीषु वैदिकीषु च क्रियासु कर्तृत्वं व्यपदिशति शास्त्रं 'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च इति' ननु विज्ञानशब्दो बुद्धौ समधिगतः कथमनेन जीवस्य कर्तृत्वं सूच्यत इति नेत्युच्यते जीवस्यैवैष निर्देशो न बुद्धेर्न चेज्जीवस्य स्यान्निर्देशविपर्य्ययः स्याद्विज्ञानेनेत्येवं निरदेक्ष्यत्। तथा ह्यन्यत्र बुद्धिविवक्षायां विज्ञानशब्दस्य करणविभक्तिनिर्देशो दृश्यते 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' इति। इह तु विज्ञानं यज्ञं तनुत इति कर्तृसामानाधिकरण्यनिर्देशाद्बुद्धिव्यतिरिक्तस्यैवात्मनः कर्तृत्वं सूचत इत्यदोषः। अत्राह यदि बुद्धिव्यतिरिक्तो जीवः कर्ता स्यात् स स्वतन्त्रः सन् प्रियं हितञ्चैवात्मनो नियमेन सम्पादयेन्न विपरीतं, विपरीतमपि तु सम्पादयन्नुपलभ्यते, न च स्वतन्त्रस्यात्मन ईदृशी प्रवृत्तिरनियमेनोपपद्यत इत्यत उत्तरं पठति॥

## उपलब्धिवदनियमः॥ ३७॥

यथायमात्मोपलब्धिं प्रति स्वतन्त्रोऽप्यनियमेनेष्टमनिष्टञ्चोपलभते एवमनियमेनैवेष्टमनिष्टञ्च सम्पादयिष्यति, उपलब्धा-

---

इर्यति। यथेति। दृष्टान्तासम्प्रतिपत्त्या शङ्कते। उपल[illegible]ब्धीति। चक्षुरादीनां चैतन्येन विषयसम्बन्धार्थत्वात् स्वसम्बन्धोपलब्धौ पारतन्त्र्येऽत-

वण्यस्वातन्त्र्यं उपलब्धिहेतूपादानोपलम्भादिति चेत्, विषयप्रकल्पनामात्रप्रयोजनत्वादुपलब्धिहेतूनां। उपल... त्वनन्यापेक्षत्वमात्मनस्तन्ययोगात्। अपि चार्थक्रिया... नात्यन्तमात्मनः स्वातन्त्र्यमस्ति देशकालनिमित्तविशे... क्षत्वात्। न च सहायापेक्षस्य कर्तुः कर्तृत्वं निवर्त्त... भवति ह्येधोदकाद्यपेक्षस्यापि पक्तुः पक्तृत्वं, सहकारि... चित्र्याच्चेष्टानिष्टार्थक्रियायामनियमेन प्रवृत्तिरात्मनो विरुध्यते ॥३७॥

शक्तिविपर्ययात् ॥ ३८ ॥

इतश्च विज्ञानव्यतिरिक्तो जीवः कर्त्ता भवितुमर्हति। ... पुनर्विज्ञानशब्दवाच्या बुद्धिरेव कर्त्री स्यात् ततः शक्ति... र्ययः स्यात् करणशक्तिर्बुद्धेर्हीयेत कर्तृशक्तिश्चापद्ये...

न्यस्वभावत्वेन स्वातन्त्र्यात् दृष्टान्तसिद्धिरित्याह। नेति। क... विषयस्वप्नाय करणान्यपेक्षते चेत् कथं स्वतन्त्र इत्याशङ्क्याह। चेति। स्वातन्त्र्यं नाम न स्वान्यानपेक्षत्वं ईश्वरस्यापि प्राणिक... त्वेनास्वातन्त्र्यप्रसङ्गात्। किन्तु स्वेतरकारकप्रयोक्तृत्वे सति कार... यत्वं स्वातन्त्र्यं इति न स्वतन्त्रोऽपि जीवः इष्टसाधनत्वज्ञाना... धनमप्युद्धितौत्यनियता प्रवृत्तिः। स्वातन्त्र्यं चेदविरुद्धमित्यं...

॥३७॥ जीवस्य कर्तृत्वे हेत्वन्तरार्थं सूत्रम्। शक्तीति। बुद्धेः श... क्तिविपरीता कर्तृशक्तिः स्यादित्यर्थः। ततः किं तत्राह। करणे...

सत्यां च बुद्धेः कर्तृशक्तौ तस्या एवाहंप्रत्ययविषयत्वमभ्युपगन्तव्यं, अहङ्कारपूर्विकाया एव प्रवृत्तेः सर्वत्र दर्शनात्, अहं गच्छाम्यहं आगच्छाम्यहं भुञ्जेऽहं पिबामीति च। तस्याश्च कर्तृशक्तियुक्तायाः सर्वार्थकारिण्याः सर्वार्थकारि करणमन्यत् कल्पयितव्यं, शक्तोऽपि हि सन् कर्ता करणमुपादाय क्रियासु प्रवर्तमानो दृश्यते। ततश्च संज्ञामात्रे विसंवादः स्यात् न वस्तुभेदः कश्चित्, करणव्यतिरिक्तस्य कर्तृत्वाभ्युपगमात्॥

समाध्यभावाच्च ॥ ३९ ॥

योऽप्ययमौपनिषदात्मप्रतिपत्तिप्रयोजनः समाधिरुपदिष्टो वेदान्तेषु 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' 'ओमित्येवं ध्यायथ आत्मानम्' इत्येवंलक्षणः सोऽप्यसत्यात्मनः कर्तृत्वे नोपपद्येत तस्मादप्यस्य कर्तृत्वसिद्धिः॥

यथा च तक्षोभयथा ॥ ४० ॥

एवं तावच्छास्त्रार्थवत्त्वादिभिर्हेतुभिः कर्तृत्वं शारीरस्य

---

रिति। योऽहंधीगम्यः स कर्ता स एव जीवो यत् तदपेक्षितं करणं तन्मन इति जीवकर्तृत्वसिद्धिरिति भावः॥

ज्ञानसाधनविध्यन्यथानुपपत्त्याप्यात्मनः कर्तृत्वं वाच्यमित्याह। समाधीति। मुक्तिफलभोक्तुरेव तदुपायसमाधिकर्तृत्वं युक्तं अन्यथात्मनोऽकर्तृत्वे बुद्धेरपि अभोक्त्र्याः कर्तृत्वायोगात् समाध्यभावप्रसङ्ग इत्यर्थः॥

यथा च तक्षोभयथा। एवमात्मनः कर्तृत्वमुपजीव्य संशयपूर्वपक्षा-

प्रदर्शितं तत्पुनः स्वाभाविकं वा स्यादुपाधिनिमित्तं वे-
ति चिन्त्यते। तत्र तैरेव शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभा-
विकं कर्तृत्वं अपवादहेत्वभावादित्येवं प्राप्ते ब्रूमः, न स्वा-
भाविकं कर्तृत्वमात्मनः सम्भवत्यनिर्मोक्षप्रसङ्गात्। कर्तृ-
स्वभावत्वे ह्यात्मनो न कर्तृत्वान्निर्मोक्षः सम्भवति अग्ने-
रौष्ण्यवत्। न च कर्तृत्वादनिर्मुक्तस्याऽस्ति पुरुषार्थसिद्धिः क-
र्तृत्वस्य दुःखरूपत्वात्। ननु स्थितायामपि कर्तृत्वशक्तौ कर्तृ-
त्वकार्यपरिहारात् पुरुषार्थः सेत्स्यति, तत्परिहारश्च निमि-
त्तपरिहाराद्यथाग्नेर्दहनशक्तियुक्तस्यापि काष्ठवियोगाद्दह-
नकार्याभावस्तद्वत्। निमित्तानामपि शक्तिलक्षणेन सम्ब-
न्धेन सम्बद्धानामत्यन्तपरिहारासम्भवात्। ननु मोक्षसाधन-
विधानान्मोक्षः सेत्स्यति न साधनायत्तस्यानित्यत्वात्। अपि च
नित्यशुद्धबुद्धमुक्तात्मप्रतिपादनान्मोक्षसिद्धिः अभिहिता। ता-
दृगात्मप्रतिपादनञ्च न स्वाभाविके कर्तृत्वेऽवकल्पते, तस्मा-

---

वाह। एवं तावदित्यादिना। शास्त्रनिरासेनात्मनः कर्तृत्वे स्थिते बाधकाभावात् तत्सत्यमिति मीमांसकादिपक्षः प्राप्तः। न चाद्वैतागमेन बाधः अहं कर्तेत्यनुभवसहितकर्तृत्वश्रुतिबलेन तस्यागमस्य बलवत्त्वादिति प्राप्ते उत्सूत्रमेव सिद्धान्तयति। न स्वाभाविकं यदुक्तं बाधकाभावादिति तदसिद्धमित्याह। अनिर्मोक्ष इति। कर्तृत्वं नाम क्रियाशक्तिस्तामाश्रित्य तत्रापि शक्तिकार्यस्य क्रियाया अकरणस्याभावान्मुक्तौ पुरुषार्थत्वसिद्धिरिति शङ्कते। ननु स्थि-तायामिति। सत्यां शक्तौ कथं कार्यपरिहारस्तत्राह। तत् परिहारश्चेति। मुक्तौ शक्तिसत्त्वे कार्यमपि स्यात् सहकारिभावे सहयोगात्। अपि

दुपाधिधर्माध्यासेनैवात्मनः कर्तृत्वं न स्वाभाविकं। तथा च श्रुतिः 'ध्यायतीव लेलायतीव' इति। "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति चोपाधिसंयुक्तस्यैवात्मनो भोक्तृत्वादिविशेषलाभं दर्शयति। न हि विवेकिनां परस्मादन्यो जीवो नाम कर्ता भोक्ता वा विद्यते, 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रवणात्, पर एव तर्हि संसारी कर्ता भोक्ता च प्रसज्येत परस्मादन्यश्चेच्चितिमान् जीवो बुद्ध्यादिसङ्घातव्यतिरिक्तो न स्यादविद्याप्रत्युपस्थापितत्वात् कर्तृभोक्तृत्वयोः। तथा च शास्त्रं 'यत्र हि द्वैतमिव भवति तदितर

---

प्रलयेऽपि कार्यं पुनरुद्भवयोग्यं सूक्ष्मं शक्तं, तथा च शक्त्या धर्मादिनिमित्तैः सञ्चितकार्याक्षेपानुपपत्तिदोष इति परिहरति। न निमित्तानामपीति। निमित्तस्य कार्यस्य शक्त्या शक्यत्वेन सम्बन्धान्निमित्तानामपि परम्परया शक्तिसम्बन्धस्तत्तुल्यं सत्त्वं सम्बन्धेनेत्यर्थः। यद्वा शक्तिसंचयनादेयस्य यस्य कार्यस्य तेन कार्येण यः सम्बन्धस्तेनेति अधिकरणे तृतीया। ननु नरस्य कर्मणा दैवतस्याश्रवणात् कर्तुरेवाकर्तृत्वं नातिदिरिति प्रसक्ते। नन्विति। ज्ञानादकर्तृत्वात्मनोऽवगते कर्तृत्वमाविद्यकं स्यादतो ज्ञानमज्ञानस्यैव निवर्तकम्। यदि कर्मणा मोक्षस्तत्राह। चेति। आत्मनः स्वाभाविकं कर्तृत्वमभ्युपगम्यानिर्मोक्ष उक्तः सम्यग्दर्शनविद्वारत्वेनैवानुतिष्ठन्नोपायः सत्त्वस्वाभाविकमित्याह। अपि चेति। तथाध्यस्तानेनानुगतीनां [illegible] युक्तं, न चाहं कर्तेत्यनुभवो विरुध्यते तस्य [illegible]दासीनकर्तृत्वावगाहिनोऽध्यासत्वेनाप्युपपत्तेरित्यर्थः। कर्तृत्वस्याध्यासत्वे श्रुतिमाह। तथा चेति। विद्वदनुभवसाक्षितमकर्तृत्वमित्याह। न हीति। बुद्ध्यादिसङ्घाताद्व्यतिरिक्तो यदि परस्मादन्यश्चेतनो न स्यात् तदा पर एव संसारी प्रसज्येत तच्चानिष्टं परस्य

इतरं पश्यति' इत्यविद्यावस्थायां कर्तृत्वभोक्तृत्वे दर्शयित्वा विद्यावस्थायां ते एव कर्तृत्वभोक्तृत्वे निवारयति। यत्र त्वस्य 'सर्वमात्मैवाभूत्तत् केन कम्पश्येत्' इति तथा स्वप्नजागरितयोरात्मन उपाधिसम्पर्ककृतं श्रमं श्येनस्येवाकाशे विपरिपततः श्रावयित्वा तदभावं सुषुप्ते प्राज्ञेनात्मना सम्परिष्वक्तस्य श्रावयति 'तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम्' इत्यारभ्य 'एषास्य परमा गतिरेषास्य परमा सम्पदेषोऽस्य परमो लोक एषोऽस्य परम आनन्दः' इत्युपसंहारात्। तदेतदाहाचार्यः 'यथा च तक्षोभयथा' इति त्वर्थे च पठितः। नैवं मन्तव्यं स्वाभाविकमेवात्मनः कर्तृत्वमग्नेरौष्ण्यमिति। यथा तु तक्षा लोके वास्यादिकरणहस्तः कर्ता दुःखी भवति, स एव स्वगृहं प्राप्तः विमुक्तवास्यादिकरणः स्वस्थो निर्वृत्तो निर्व्यापारः सुखी भवति, एवमविद्याप्रत्युपस्थापितद्वैतसंयुक्त आत्मा स्वप्नजागरितावस्थयोः कर्ता दुःखी भवति, स तच्छ्रमापनुत्तये स्वमात्मानं परं ब्रह्म प्रविश्य विमुक्तकार्यकरणसङ्घातोऽकर्ता सुखी भवति, स...

---

नित्यमुक्तत्वव्याघातादिति शङ्कते। पर एवेति। न वयं शुद्धस्य चितोः परस्य बन्धं वदामः किन्तु तस्यैवाविद्याबुद्ध्यादिप्रतिबिम्बितस्याविभिन्नस्य जीवत्वं प्राप्तस्य बन्धमोक्षाविति ब्रूमः। कल्पितभेदोऽपि बिम्बप्रतिबिम्बयोर्धर्मव्यवस्थापको दृष्ट इति परिहरति। नाविद्येति। अविद्योपहिते बन्धो न शुद्धात्मनीत्यत्र श्रुतिमाह। तथा चेति। आत्मनः बुद्ध्युपाध्यन्वयव्यतिरेकानुविधायित्वाच्छ्रुतेश्च न स्वाभाविकत्वं कर्तृत्वस्य तथा स्वप्नेति। आत्मैव काम्यते आनन्दत्वादित्याप्तकामं स्वरूपं ...

साद्यवस्थायां तथा मुक्त्यवस्थायामप्यविद्याध्वान्तं विद्याप्र-
दीपेन विधूयात्मैव केवलो निर्वृतः सुखी भवति। तक्षदृष्टा-
न्तश्चैतावतांशेन द्रष्टव्यः, तक्षा हि विशिष्टेषु तक्षणादिव्या-
पारेष्वपेक्ष्यैव प्रतिनियतानि करणानि वास्यादीनि कर्ता
भवति स्वशरीरेण त्वकर्तैव, एवमयमात्मा सर्वव्यापारेष्वपे-
क्ष्यैव मनआदीनि करणानि कर्ता भवति स्वात्मना त्वकर्तै-
वेति न त्वात्मनस्तक्ष्ण इवावयवाः सन्ति यैर्हस्तादिभिरिव
वास्यादीनि तक्षा मनआदीनि करणान्यात्मोपाददीत न्य-
स्येद्वा। यत्तूक्तं शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकमा-
त्मनः कर्तृत्वमिति तन्न विधिशास्त्रं तावद्यथा प्राप्तं कर्तृ-
त्वमुपादाय कर्तव्यविशेषमुपदिशति न कर्तृत्वमात्मनः प्रति-
पादयति। न च स्वाभाविकमस्य कर्तृत्वमस्ति ब्रह्मात्मत्वो-
पदेशादित्यवोचाम, तस्मादविद्याकृतं कर्तृत्वमुपादाय विधि-
शास्त्रं प्रवर्तिष्यते। 'कर्ता विज्ञानात्मा पुरुषः' इत्येवजा-
तीयकमपि शास्त्रमनुवादरूपत्वाद्यथा प्राप्तमेवाविद्याकृतं
कर्तृत्वमनुवदिष्यति। एतेन विहारोपादाने परिहृते,

---

रिक्षकाम्यासत्वादकामं आप्तकामत्वादकामत्वाच्चाप्तकामं चियोकत्वा-
र्थत्वाह। शोकेति। शोकान्तरं दुःखास्पृष्टमित्यर्थः। तस्यैव सुखप्रा-
प्तिरूपस्य परमपुरुषार्थमाह। एष इति। गतिः प्राप्यं सम्पदैश्वर्यं लोको
भोग्यसुखस्थानमानन्दोऽयमात्मेत्यर्थः। आत्मा स्वतोऽकर्ता बुद्ध्याद्युपाधिना
तु कर्तेत्युभयथाभाव उक्तस्तमर्थं सूत्रं योजयति। यथेत्यादिना।
मध्यपादः सुगमः। यथा स्फटिकस्य लौहित्यं कुसुमाद्युपाधिकं तथा-
त्मनः कर्तृत्वं बुद्ध्याद्युपाधिकं अन्वयव्यतिरेकाभ्यां सिद्धम्। न च तौ

तयोरप्यनुवादरूपत्वात् । ननु सन्ध्ये स्थाने प्रसुप्तेषु करणे
स्वे शरीरे यथाकामं परिवर्त्तत इति विहार उपदिश्यमानः
केवलस्यात्मनः कर्तृत्वमावहति, तथोपादानेऽपि 'तदेषां
प्राणानां विज्ञानेन विज्ञानमादाय' इति करणेषु कर्मका-
रकविभक्तौ श्रूयमाणे केवलस्यैवात्मनः कर्तृत्वङ्गमयत इति ।
अत्रोच्यते, न तावत् सन्ध्ये स्थानेऽत्यन्तमात्मनः करणवि-
रमणमस्ति 'सधीः स्वप्नो भूत्वा इमं लोकमतिक्रामति' इति
तत्रापि धीसम्बन्धश्रवणात् । तथा च स्मरन्ति,

'इन्द्रियाणामुपरमे मनोऽनुपरतं यदि ।
सेवते विषयानेव तद्विद्यात् स्वप्नदर्शनम्' ॥ इति ।

'कामादयश्च मनसो वृत्तयः' इति श्रुतिः, ताश्च स्व-

---

बुद्ध्यादेरात्मकर्तृत्वे करणत्वविषयौ नोपादानत्वविषयाविति युक्तं, करणत्व-
कार्यान्वय्युपादानत्वस्याचरङ्गतया चित्सम्वलितबुद्धे स्ताभ्यामुपादानत्व-
सिद्धेः, एवं बुद्ध्यभेदेनाध्यस्तचिदहङ्कारस्य कर्तृत्वोपादानत्वे कथाथक-
मुक्तिरेवेति भावः । ननु तथा स्वहस्तादिना यागादिप्रेरणमस्त्य-
स्ततः कर्ता आत्मा तु निरवयवत्वादशक्त इति दृष्टान्तवैषम्यमाशङ्क्यौपाधि-
ककर्तृत्वांशेन विवक्षितेन साम्यमाह । तथादृष्टान्तश्चेति । शास्त्रेणानू-
द्यमानं कर्तृत्वं स्वाभाविकमेव किं न स्यादित्यत आह । न च स्वाभावि-
कमिति । उपाध्यनाथकाले श्रुतं कर्तृत्वं स्वाभाविकमेवेति शङ्कते । न-
न्वत्र इति । किञ्च करणोर्विशिष्टस्य कर्तृत्वे तेषां कर्तृत्वभावात् कर्म-
कर्तृविभक्तिः स्यात् न चैवमस्ति, ततः केवलात्मनः कर्तृत्वमित्याश-
ङ्क्येति । स्वप्नविहारे तावदुपाध्यभावोऽसिद्ध इत्याह । न तावत् स-
न्ध्ये इति । विहारस्य मिथ्यात्वात् तत्कर्तृत्वमपि मिथ्येत्याह । विहारो-
ऽपीति । जाग्रत् बुद्धान इव करणविशिष्टस्य कर्तृत्वे करणेषु कर्तृविभ-

दृश्यन्ते, तस्मात् समना एव स्वप्ने विहरति, विहारोऽपि च तत्रत्यो वासनामय एव न तु पारमार्थिकोऽस्ति। तथा च श्रुतिरिवकारानुबन्धमेव स्वप्नव्यापारं वर्णयति 'उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवाऽपि भयानि पश्यन्' इति। लौकिका अपि तथैव स्वप्नं कथयन्ति आरुक्षमिव गिरिशृङ्गमद्राक्षमिव वनराजिमिति। तथोपादाने यद्यपि करणेषु कर्मकरणविभक्तिनिर्देशः तथापि तत्संयुक्तस्यैवात्मनः कर्तृत्वं द्रष्टव्यं, केवले कर्तृत्वासम्भवस्य दर्शितत्वात्। भवति च लोकेऽनेकप्रकारा विवक्षा योधा युध्यन्ते योधैः राजा युध्यत इति। अपिचास्मिन्नुपादाने करणव्यापारोपरममात्रं

---

स्यात् न करणविभक्तिरित्युक्तं प्रत्याह। भवति च लोक इति। कर्तृत्वपि करणविभक्तिर्न विरुध्यते दृष्टत्वात्, अस्ति च कर्तृप्रयोगः, विज्ञानं यज्ञं तनुत इत्यादाविति भावः। उपादानस्य सकर्तृकत्वमङ्गीकृत्य केवलात्मनः कर्तृत्वं निरस्तं इदानीं तस्याक्रियत्वात् तत्कर्मैवेत्याह। अपि चेति। एवं विज्ञानं जीव इत्यङ्गीकृत्य जीवस्य कर्तृत्वे तनुत इति श्रुतिरुक्ता, भवति तथा श्रुत्याऽनुपहितात्मनः कर्तृत्वमिति प्राप्तौ विज्ञानं बुद्धिरेव तस्या एवात्र कर्तृत्वमुच्यते। तदुपहितात्मनः कर्तृत्वमिश्रयः इत्यभिप्रेत्याह। यन्त्विति। योऽयं विज्ञानमय इत्यादिश्रुतिषु विज्ञानशब्दस्य बुद्धौ प्रसिद्धत्वादत्र च मनोमयकोशानन्तरं पठितत्वात् अन्नादिशिल्पाय बुद्धिरेव विज्ञानमित्यर्थः। तत्रैव लिङ्गान्तरमाह। विज्ञानं देवा इति। महद्यक्षं प्रथमजं इत्यादिश्रुतौ हिरण्यगर्भब्रह्मात्मकबुद्धेर्वर्णितत्वोक्तेः अत्र देवैरिन्द्रियैरुपास्यमानं ज्येष्ठं ब्रह्मविज्ञानं बुद्धिरेवेत्यर्थः। यज्ञं पूज्यम्। किञ्च श्रुत्यन्तरे यज्ञस्य बुद्धिकार्यत्वोक्तेः अत्रापि यज्ञकर्तृ विज्ञानं बुद्धिरित्याह। स एष इति। चित्तेन ध्यात्वा वाचा मन्त्रोच्चा

विवक्ष्यते न स्वातन्त्र्यं कस्यचिदबुद्धिपूर्वकस्याऽपि स्वापेक्ष
करणव्यापारोपरमस्य दृष्टत्वात्। यत्त्वयं व्यपदेशो दर्शितो
'विज्ञानं यज्ञं तनुते' इति स बुद्धेरेव कर्तृत्वं प्रापयति
विज्ञानशब्दस्य तत्र प्रसिद्धत्वान्मनोऽनन्तरपाठाच्च, तस्य
श्रद्धैव शिर इति च विज्ञानमयस्यात्मनः श्रद्धाद्यवयवत्व
संकीर्तनात् श्रद्धादीनाञ्च बुद्धिधर्मत्वप्रसिद्धेः 'विज्ञानं देवाः
सर्वे ब्रह्म ज्येष्ठमुपासते' इति च वाक्यशेषात् ज्येष्ठत्वस्य
प्रथमजत्वस्य बुद्धौ प्रसिद्धत्वात् 'स एष वाचश्चित्तस्योत्तरोत्तर
क्रमो यद्यज्ञः' इति च श्रुत्यन्तरे यज्ञस्य वाग्बुद्धिसाध्यत्व

---

यज्ञो जायते तत्र चित्तस्य वाचः पूर्वोत्तरभावो यज्ञ इत्यर्थः। यदोक्तं
बुद्धेः कर्तृत्वे शक्तिविपरीत्यप्रसङ्ग इति तत्र, विक्लिद्यन्ते तण्डुलाः, ज्व
लन्ति काष्ठानि, बिभर्ति स्थालीति स्वस्वव्यापारेषु सर्वकारकाणां कर्तृ
त्वीकारादित्याह। न चेति। तर्हि बुद्ध्यादीनां कर्तृत्वे करणत्वं
तेषु न स्यादित्यत आह। उपलब्धीति। यथा काष्ठानां स्वव्यापारे क
र्तृत्वेऽपि पाकापेक्षया करणत्वं तथा बुद्ध्यादीनां अध्यवसायसङ्कल्पादि
व्यापारकर्तृत्वेऽप्युपलब्ध्यपेक्षया करणत्वमित्यर्थः। ननु तर्ह्युपलब्धिः क
व्यापार इत्याह। सा चेति। तर्हि तस्यामात्मा केवलः कर्ता स्यात्
यस्य यो व्यापारः स तस्य कर्तेति स्थितिरित्यत आह। न ही
उपलब्धेः नित्यत्वे बुद्ध्यादीनां कथं करणत्वमुक्तमिति चेत्, उच्यते
स्वरूपज्ञप्तिचैतन्यं बुद्धिवृत्तिभिर्भिन्नं सद्विषयावच्छिन्नत्वेन जायते, त
च विषयावच्छिन्नचैतन्यस्योपलब्धौ बुद्ध्यादीनां करणत्वं बुद्ध्याद्युपहितस्य
कर्तृत्वं न केवलस्य, न च बुद्धेरेव तत्कर्तृत्वं चैतन्यस्य व्यापारत्वा
गादिति भावः। यदोक्तं बुद्धेः कर्तृत्वे स एवाहंधीगम्यो जीवः
तस्य करणान्तरं कल्पनीयं तथा च नाममात्रे विवाद इति तत्र
यज्ञात्मनः कर्तृत्वमुक्तमिति भ्रान्तिं निरस्यति। यत्त्वित्यादिना। श्रा

वधारणात्। न च बुद्धेः शक्तिविपर्ययः करणानां कर्तृत्वाभ्युपगमे भवति सर्वकारकाणामेव स्वव्यापारेषु कर्तृत्वस्यावश्यम्भावित्वात्। उपलब्ध्यपेक्षन्त्वेषां करणानां करणत्वं, सा चात्मनः। न च तस्यामप्यस्य कर्तृत्वमस्ति नित्योपलब्धिस्वरूपत्वात्। अहङ्कारपूर्वकमपि कर्तृत्वं नोपलब्धुर्भवितुमर्हति अहङ्कारस्याप्युपलभ्यमानत्वात्। न चैवं सति करणान्तरकल्पनाप्रसङ्गः, बुद्धेः करणत्वाभ्युपगमात्। समाध्यभावस्तु शास्त्रार्थवत्त्वेनैव परिहृतः, यथाप्राप्तमेव कर्तृत्वं उपादाय समाधिविधानात्, तस्मात् कर्तृत्वमप्यात्मन उपाधिनिमित्तमेवेति स्थितम्॥

**परात्तु तच्छ्रुतेः॥ ४१॥**

यदिदमविद्यावस्थायामुपाधिनिबन्धनं कर्तृत्वं जीवस्याभिहितं तत् किमनपेक्ष्येश्वरं भवति आहोस्वित् ईश्वरापेक्ष-

---

निरासार्थं बुद्ध्यभेदेनाध्यस्तचिदात्मताहङ्कारगतं कर्तृत्वं यदुक्तं तदहंधीगम्यस्य बुद्धिविशिष्टात्मन एव न केवलस्य साक्षिणो भवितुमर्हति, दृश्यधर्मस्य साक्षिस्वभावत्वायोगात्। एवं विशिष्टात्मनः कर्तृत्वे विशेषणीभूताया जडबुद्धेरेव कारणत्वोपपत्तेर्न करणान्तरकल्पनाप्रसङ्गः। अध्यासं विना केवलबुद्धिकर्तृत्ववादिनस्तु करणान्तरप्रसङ्गो दुर्वार इत्यर्थः। एवं शास्त्रार्थवत्त्वादिहेतुनाऽऽत्मनः कर्तृत्वमात्मसाधकत्वेऽपि स्वाभाविककर्तृत्वसाधनसामर्थ्याभावादध्यस्तमेव कर्तृत्वं विध्यादिकर्तृत्वमुक्तीनामुपपत्तिव्यम्। तथादध्यस्तविध्यादिकर्तृत्वमुक्तीनामविरोध इति सिद्धम्॥

परात्तु तच्छ्रुतेः। यथा स्फटिको लौहित्याध्यासे लोहितद्रव्यं करणं तेनायं स्फटिको लोहित इत्यनुभवात् तथा कामादिपरिणामिबु-

मिति भवति विचारणा। तत्र प्राप्तं तावन्नेश्वरमपेक्षते जी
वः कर्तृत्वे इति। कस्मादपेक्षाप्रयोजनाभावात्। अयं हि
जीवः स्वयमेव रागद्वेषादिदोषप्रयुक्तः कारकान्तरसामग्री
सम्पन्नः कर्तृत्वमनुभवितुं शक्नोति तस्य किमीश्वरः करि
ष्यति। न च लोके प्रसिद्धिरस्ति कृष्यादिकासु क्रिया
स्वनडुहादिवदीश्वरोऽपरोऽपेक्षितव्य इति। क्लेशात्मकेन
कर्तृत्वेन जन्तून् संसृजत ईश्वरस्य नैर्घृण्यं प्रसज्येत। वि
षमफलञ्चैषां कर्तृत्वं विदधतो वैषम्यम्। ननु वैषम्यनै
र्घृण्ये न सापेक्षत्वादित्युक्तम्। सत्यमुक्तं सति त्वीश्वरस्य सा
पेक्षत्वसम्भवे, सापेक्षत्वञ्च नेश्वरस्य सम्भवति सतोर्जन्तूनां
धर्माधर्मयोस्तयोश्च सद्भावः सति जीवस्य कर्तृत्वे तदेव
कर्तृत्वं ईश्वरापेक्षं स्यात् किं विषयमीश्वरस्य सापेक्षत्व

---

श्वरात्मनि कर्तृत्वाद्यध्यासे कारणमित्युक्तं तदध्यस्तं कर्तृत्वमुपजीव्य जी
वस्य कारणस्यचत्वादीश्वरस्य कारयितृत्वमुतेव संशयमाह। यदिदमि
ष्यतैव ह्येवेत्यादिश्रुतीनां कर्तृत्वस्यानन्यद्योतकविध्यादिश्रुतिभिर्विरो
धसमाधानात् पादसङ्गतिः। कर्ममीमांसकमतेन पूर्वपक्षयति। तत्रे
त्यादिना। कृष्यादिकारकसमपक्षावीश्वरव्यतिरेके कर्तृत्वव्यतिरेकानुपलम्भा
न्नेश्वरः प्रयोजकः। किञ्च प्रयोजकत्वे नैर्घृण्यादिप्रसङ्ग इत्याह
क्लेशात्मकेन चेति। दत्तोत्तरमिदं चोद्यमिति शङ्कते। नन्विति।
जीवस्य धर्माधर्मवत्त्वं सिद्धवत्कृत्य तत्सापेक्षत्वात् विषमजगत्कर्तृत्वमवि
घमित्युक्तं सम्प्रति ईश्वराधीनत्वे जीवस्य कर्तृत्वे सिद्धे धर्माधर्मसि
द्धिः तद्वत् तत्सिद्धौ तत्सापेक्षकारयितृत्वसिद्धिः ईश्वरस्य कारयितृत्व
सिद्धे जीवस्य कर्तृत्वसिद्धिरिति चक्रकापत्तेः कर्मसापेक्षत्वं न सम्भव
तीत्युच्यत इत्याह। सत्यमिति। अस्तु कर्मापेक्षस्य प्रवर्तकत्वं तथा

सुच्येत। अकृताभ्यागमश्चैवं जीवस्य प्रसज्येत। तस्मात् स्वत एव जीवस्य कर्तृत्वमिति। एतां प्राप्तिं तुशब्देन व्यावर्त्य प्रतिजानीते। परादिति। अविद्यावस्थायां कार्यकारणसङ्घाताविवेकदर्शिनो जीवस्याविद्यातिमिरान्धस्य सतः परस्मादात्मनः कर्माध्यक्षात् सर्वभूताधिवासात् साक्षिणश्चेतयितुरीश्वरात्तदनुज्ञया कर्तृत्वभोक्तृत्वलक्षणस्य संसारस्य सिद्धिस्तदनुग्रहहेतुकेनैव च विज्ञानेन मोक्षसिद्धिर्भवितुमर्हति। कुतस्तच्छ्रुतेः। यद्यपि रागादिदोषप्रयुक्तः सामग्रीसम्पन्नश्च जीवः, यद्यपि च लोके कृष्यादिषु कर्मसु नेश्वरकारणत्वं प्रसिद्धं, तथापि सर्वास्वेव प्रवृत्तिषु ईश्वरो हेतुकर्तेति श्रुतेरवसीयते। तथा हि श्रुतिर्भवति 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते' इति 'य आत्मनि तिष्ठन् आत्मानमन्तरो यमयति' इति चैवंजातीयका। नन्वेवमीश्वरस्य कारयितृत्वे सति वैषम्यनैर्घृण्ये स्यातां अकृताभ्यागमश्च जीवस्येति, नेत्युच्यते॥

---

अकर्तेति। अनपेक्षस्य प्रवर्तकत्वे धर्मवतो नरान् दुःखेनाधर्मवतः सुखेन योजयेत्, कारुणिकत्वे वा सर्वैः सुखेन एकरूपाः स्युरिति जगद्वैचित्र्यं विध्यादिशास्त्रञ्च न स्यात्। तस्माद्विध्यादिशास्त्रार्थवत्त्वाय रागद्वेषवतः स्वत एव जीवस्य कर्तृत्वं वाच्यं, तथा च कारयितृत्वश्रुतिविरोधः। ईश्वरस्तावकी वा सा श्रुतिरिति प्राप्ते सिद्धान्तयति। परात्विति। यथा चन्दनादिसामग्र्यां सत्यां धर्मव्यतिरेके सुखव्यतिरेकदर्शनेऽपि 'पुण्यो वै पुण्येन कर्मणा भवति' इत्यादिशास्त्रप्रामाण्यादेव धर्मस्य हेतुत्वसिद्धिः, एवमीश्वरस्यापि शास्त्रत्वात् कारयितृत्वसिद्धिरिति भावः॥

कृतप्रयत्नापेक्षस्तु, विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥

तुशब्दश्चोदितदोषव्यावर्तनार्थः। कृतो य प्रयत्नो जीवस्य धर्माधर्मलक्षणः तदपेक्ष एवैनमीश्वरः कारयति, तस्मान्नैते चोदिता दोषा न प्रसज्यन्ते। जीवकृतधर्माधर्मवैषम्यापेक्ष एव ततत्फलानि विषमं विभजते पर्जन्यवदीश्वरो निमित्तत्वमात्रेण। यथा लोके नानाविधानां गुच्छगुल्मादीनां व्रीहियवादीनां चाऽसाधारणेभ्यः स्वस्वबीजेभ्यो जायमानानां साधारणं निमित्तं भवति पर्जन्यः, नह्यसतिपर्जन्ये रसपुष्पफलपलाशादिवैषम्यं तेषां जायते नाप्यसत्सु स्वस्वबीजेषु, एवं जीवकृतप्रयत्नापेक्ष ईश्वरस्तेषां शुभाशुभं विदध्यादिति श्लिष्यते। ननु कृतप्रयत्नापेक्षत्वं जीवस्य परायत्ते कर्तृत्वे नोपपद्यते। नैष दोषः, परायत्तेऽपि हि कर्तृत्वे करोत्येव जीवः,कुर्वन्तं हि तमीश्वरः कारयति। अपि च पूर्वप्रयत्नमपेक्ष्येदानीं कारयति पूर्वतरं च प्रयत्न मपेक्ष्य पूर्वमकारयदित्यनादित्वात् संसारस्येत्यनवद्यम्।

धर्माधर्माभ्यामेव फलोपपत्तिरीश्वरोऽनुपयोगी बीजेभ्योऽङ्कुरोत्पत्तिवत् पर्जन्यवैयर्थ्यं स्यात्। यदि विशेषहेतूनां साधारणहेत्वपेक्षत्वात् वैयर्थ्यं तर्हि ईश्वरस्यापि साधारणहेतुत्वात् वैयर्थ्यमित्यर्थः स्यादिति। दृष्टान्तं विवृणोति। यथेति। अतिदीर्घलता गुच्छाः गुल्मलताः गुल्मास्तु स्तम्बस्थ इति भेदः। निर्दिष्टे कारयितृत्वे जीवस्य कर्तृत्वं न स्यात् कृतापायेते उत चक्रकारणाद्य इत्याह। नैष दोष इति। अध्यापकाधीनस्य वटोर्ज्ञानाय कर्तृत्वदर्शनादिति भावः। चक्रकं निरस्यति। अपि चेति। जीवस्य कर्तृत्वं ईश्वरस्य कारयितृत्वमिति भेदः। ईश्वरस्य

कथं पुनरवगम्यते कृतप्रयत्नापेक्ष ईश्वर इति। विहितप्रतिषिद्धावैयर्थ्यादित्याह। एवं हि स्वर्गकामो यजेत, ब्राह्मणो न हन्तव्य इत्येवंजातीयकस्य विहितस्य प्रतिषिद्धस्य चावैयर्थ्यं भवति, अन्यथा तदनर्थकं स्यात्, ईश्वर एव विधिप्रतिषेधयोर्नियुज्येत अत्यन्तपरतन्त्रत्वात् जीवस्य। तथा विहितकारिणमप्यनर्थेन संसृजेत् प्रतिषिद्धकारिणमप्यर्थेन; ततश्च प्रामाण्यं वेदस्यास्तमियात्। ईश्वरस्य चात्यन्तानपेक्षत्वे लौकिकस्यापि पुरुषकारस्य वैयर्थ्यं, तथा देशकालनिमित्तानां पूर्वोक्तदोषप्रसङ्गश्चेत्येवंजातीयकं दोषजातमादिग्रहणेन दर्शयति॥

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥

जीवेश्वरयोरुपकार्योपकारकभाव उक्तः, स च सम्बन्धि-

---

विध्यादिशास्त्रप्रामाण्यान्यथानुपपत्तिं प्रमाणयति। कथमित्यादिना। एवं सापेक्षत्वे सत्यवैयर्थ्यं भवति अन्यथानपेक्षत्वे वैयर्थ्यं प्रपञ्चयति। ईश्वर इति। तयोः स्थाने स एव नियुज्येत प्रतिषिध्येत तयोः कार्यं स एव कुर्यादिति यावत्। तथा च जीवस्य निरपेक्षेश्वरपरतन्त्रत्वाद्विध्यादिशास्त्रमकिञ्चित्करमनर्थकं स्यात् इति सम्बन्धः। आदिशब्दार्थमाह। ईश्वरेति। पुरुषकारः प्रयत्नः। पूर्वोक्तदोषोऽकृताभ्यागमादिः, तस्मात् कर्मसापेक्षेश्वरस्य कारयितृत्वादेष ह्येवेत्यादिश्रुतेर्विध्यादिशास्त्रस्याविरोध इति सिद्धम्॥

अंशः 'एको नित्यः स्वप्रकाशो नाणुरकर्ता जीवः' इति बोधितस्य;

योरेव लोके दृष्टः, यथा स्वामिभृत्ययोर्यथा वाऽग्निस्फुलि-
ङ्गयोः। ततश्च जीवेश्वरयोरप्युपकार्योपकारकभावाभ्युपगमे
किं स्वामिभृत्यवत् सम्बन्धः आहोस्वित् विस्फुलिङ्गवदिति
स्यां विचिकित्सायामनियमो वा प्राप्नोति, अथवा स्वामि-
भृत्यप्रकारेष्वेवेशित्रीशितव्यभावस्य प्रसिद्धत्वात् तद्विध
सम्बन्ध इति प्राप्नोति। अतो ब्रवीति अंश इति। जीव
ईश्वरस्यांशो भवितुमर्हति यथाऽग्नेर्विस्फुलिङ्गः। अंश
इवांशः, न हि निरवयवस्य मुख्योऽंशः सम्भवति। कस्मात्
पुनर्निरवयवत्वात् स एव न भवति नानाव्यपदेशात्। सो-
ऽन्वेष्टव्यः स विजिज्ञासितव्यः" एतमेव विदित्वा मुनिर्भवति
'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इति चैवंजाती-
यको भेदनिर्देशो नासति भेदे युज्यते। ननु चायं नानाव्य-
पदेशः सुतरां स्वामिभृत्यसारूप्ये युज्यत इति, अत आह
अन्यथा चापीति। न च नानाव्यपदेशादेव केवलादंशत्वप्र-
तिपत्तिः किं तर्ह्यन्यथा चापि व्यपदेशो भवत्यनानात्व-
प्रतिपादकः। तथा हि एके शाखिनो दाशकितवादि-

पदार्थस्यात्म अद्वैत्यसाधनेन भेदाभेदश्रुतीनां विरोधसमाधानात् स-
ङ्गतिः। पूर्वपक्षे प्रत्यगभिन्नब्रह्मासिद्धिः सिद्धान्ते तत्सिद्धिरिति भे-
पूर्वोक्तोपकार्योपकारकभावाचिप्तं जीवेशयोः सम्बन्धं निर्णेतुं
विधदानन्दर्शनात् संशयमाह। तत्रेति। प्रसिद्धस्वस्वामिसम्बन्ध-
स्याग्रयः कश्चित् सम्बन्ध इत्यनियमो न युक्त इत्यरुचेराह। अथवेति।
अनेन य आत्मनि तिष्ठन्नित्यादिश्रुतिप्रसिद्धभेदकोटिर्दर्शिता। एवं ब्र-
ह्मदाशादिश्रुतिसिद्धा भेदकोटिर्द्रष्टव्या, तथा च भेदाभेदश्रुतीनां स्व-
त्वादिरोधे सति सम्बन्धानिश्चयात् सम्बन्धापेक्षस्य पूर्वोक्तोपकार्यत्व-

ब्रह्मण आमनन्ति 'आथर्वणिका ब्रह्मसूक्ते ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा उत' इत्यादिना। दाशा य एते कैवर्ताः प्रसिद्धाः ये चामी दासाः स्वामिष्वात्मानमुपक्षिपन्ति ये चान्ये कितवा द्यूतकृतस्ते सर्वे ब्रह्मैवेति हीनजन्तूदाहरणेन सर्वेषामेव नामरूपकृतकार्यकरणसंघातप्रविष्टानां जीवानां ब्रह्मत्वमाह। तथा अन्यत्रापि ब्रह्मप्रक्रियायामेव अयमर्थः प्रपञ्च्यते 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः' इति, "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते" इति च। 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतिभ्यश्चास्यार्थस्य सिद्धिः। चैतन्यञ्चाविशिष्टं जीवेश्वरयोर्यथाऽग्निविस्फुलिङ्गयोरौष्ण्यम्। अतो भेदाभेदावगमाभ्यामंशत्वावगमः। कुतश्चांशत्वावगमः॥

---

भावस्याविद्धिरित्याक्षेपात् सङ्गतिः। जीवनित्यानन्दात्मकभेदाद्युपादित्वेन भेदश्रुतीनां दुर्बलत्वादघातकत्वादभेदश्रुत्यनुसारेण प्रकल्पितभेदनिबन्धनोऽंशांशिभावः सम्बन्ध इति सिद्धान्तयति। नाना व्यपदेशादिना। अग्नेः सांशत्वेऽपि निष्कलेश्वरस्य कथं सांशत्वमत आह। अंश इवेति। जीव इत्यनुषङ्गः। भेद एव चेत् स्वस्वामिभावो युक्तो नांशांशिभाव इति शङ्कते। ननु चेति। अभेदस्यापि सत्त्वादंशांशिभाव इत्याह। अत इति। धर्मस्य गच्छति, यदात्मा यो नामरूपे निर्माय प्रविश्य व्यवहरन् वर्तते तं विद्वानस्तौ भवतीति श्रुत्यर्थः। श्रुतिसिद्धाभेदे युक्तिमाह। चैतन्येनेति। जीवो ब्रह्मैव चेतनत्वाद्ब्रह्मवदित्यर्थः॥

## मन्त्रवर्णाच्च ॥ ४४ ॥

मन्त्रवर्णश्चैतमर्थमवगमयति 'तावानस्य महिमा ततो ज्यायांश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इति । अत्र भूतशब्देन जीवप्रधानानि स्थावरजङ्गमानि निर्दिशति 'अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः' इति प्रयोगात् । अंशः पादो भाग इत्यनर्थान्तरम् । तस्मादप्यंशत्वावगमः । कुतश्चांशत्वावगमः ॥

## अपि च स्मर्यते ॥ ४५ ॥

ईश्वरगीतास्वपि चेश्वरांशत्वं जीवस्य स्मर्यते 'ममैवांशो जीवलोके जीवभूतः सनातनः' इति । तस्मादप्यंशत्वावगमः । यत्तूक्तं स्वामिभृत्यादिष्वेवेशित्रीशितव्यभावो लोके प्रसिद्ध इति । यद्यप्येषा लोके प्रसिद्धिस्तथापि शास्त्रात्

---

यस्य सहस्रशीर्षपुरुषस्य तावान् प्रपञ्चो महिमा विभूतिः अस्मात् प्रपञ्चो ज्यायानतिवृद्धतरः । भूतानि देहिनो जीवा इत्यत्र लिङ्गमाह । अहिंसन्निति । तीर्थानि शास्त्रोक्तकर्माणि, तेभ्योऽन्यत्र प्राणिहिंसामकुर्वन् ब्रह्मलोकमाप्नोतीत्यर्थः । अत्र भूतशब्दस्य प्रयोगात् स्वलोकमन्त्रेऽपि तथेति भावः । भूतानां पादत्वेऽपि कुतस्तत्राह । अंशः पाद इति ॥

जीवस्य पुरुषसूक्तमन्त्रोक्तभगवदंशत्वे भगवद्गीतामुदाहरति सूत्रकारः । अपि चेति । स्वस्वामिभावे ईशित्रीशितव्यभावप्रसिद्धेः ईशजीवस्य कथमीश्वरांशत्वमित्याशङ्क्य कल्पितभेदेनापीशितव्यत्वोपपत्तेः न्यायसिद्धाभेदशास्त्रबलादंशत्वमित्याह । यत्त्वित्यादिना । जीवेश्वरस्य नियन्तृत्वे जीव एव तन्नियन्ता किं न स्यादित्यत आह

शांशित्वमीशित्रीशितव्यभावश्च निश्चीयते। निरतिशयोपाधिसम्पन्नश्चेश्वरो निहीनोपाधिसम्पन्नान् जीवान् प्रशास्तीति न किञ्चिद्विप्रतिषिध्यते। अत्राह ननु जीवेश्वरांशत्वाभ्युपगमे तदीयेन संसारदुःखोपभोगेनांशिन ईश्वरस्याऽपि दुःखित्वं स्यात्, यथा लोके हस्तपाद्यन्यतमाङ्गगतेन दुःखेनाङ्गिनो देवदत्तस्य दुःखित्वं तद्वत्। ततश्च तत्प्राप्तानां महत्तरं दुःखं प्राप्नुयात्, अतोऽवरं पूर्वावस्थः संसार एवास्त्विति सम्यग्दर्शनानर्थक्यप्रसङ्गः स्यादिति। अत्रोच्यते॥

## प्रकाशादिवन्नैवं परः॥ ४६॥

यथा जीवः संसारदुःखमनुभवति नैवं पर ईश्वरोऽनुभवति इति प्रतिजानीमहे। जीवो ह्यविद्यावेशवशाद्देहाद्यात्मभावमिव गत्वा तत्कृतेन दुःखेन दुःख्यहमिति अविद्याकृतं दुःखोपभोगमभिमन्यते नैवं परमेश्वरस्य देहाद्यात्मभावो

---

निहीनेति। नितरां हीनः शरीराद्युपाधिः, अज्ञानिकोपाधितारतम्यादीशेशितव्यव्यवस्था, न वस्तुतः। तदुक्तं सुरेश्वराचार्यैः "ईशेशितव्यसम्बन्धः प्रत्यगज्ञानहेतुजः। सम्यग्ज्ञाने तमोध्वस्तावीश्वराणामपीश्वरः" इति। उत्तरसूत्रमवतारयति। अत्राहेति। ईश्वरः स्वांशदुःखैर्दुःखी स्यात् देवदत्तवदित्यर्थः। ततः किं तत्राह। ततश्चेति। ज्ञानात् सर्वांशदुःखवर्गप्राप्त्यपेक्षया संसारोऽवरं तत्र स्वदुःखमात्रानुभवादित्यर्थः॥

नैवं पर इति प्रतिज्ञां विभजते। यथा जीव इति। देवदत्तदृष्टान्ते भ्रान्तिजामकर्मरूपदुःखहेतुर्यावानस्त्युपाधिः तदभावादीश्वरस्य दुःखित्वाप्राप्तिः। उक्तश्चैतदभेदेऽपि बिम्बप्रतिबिम्बयोर्धर्मव्यवस्थेति भावः। दुःखस्य

दुःखाभिमानो वा स्यात्। जीवस्याऽपि अविद्याकृतनामरूपनि
र्वृत्तदेहेन्द्रियाद्युपाध्यविवेकभ्रमनिमित्त एव दुःखाभिमानो
न तु पारमार्थिकोऽस्ति। यथा च स्वदेहगतं दाहच्छेदादि
निमित्तं दुःखं तदभिमानभ्रान्त्याऽनुभवति तथा पुत्रमित्रा
दिगोचरमपि दुःखं तदभिमानभ्रान्त्यैवानुभवत्यहमेव
पुत्रोऽहमेव मित्रमित्येवं स्नेहवशेन पुत्रमित्रादिष्वभिनि
विशमानः। ततश्च निश्चितमेतदवगम्यते मिथ्याभिमानभ्र
मनिमित्त एव दुःखानुभव इति। व्यतिरेकदर्शनाच्चैवमव
गम्यते। तथा हि पुत्रमित्रादिमत्सु बहुषूपविष्टेषु तत्स
म्बन्धाभिमानिष्वितरेषु च पुत्रो मृतो मित्रं मृतमित्येवमा
द्युद्घोषिते येषामेव पुत्रमित्रादिमत्त्वाभिमानस्तेषामे
व तन्निमित्तं दुःखमुत्पद्यते नाभिमानहीनानां परिव्राजकादी
नां। अतश्च लौकिकस्याऽपि पुंसः सम्यग्दर्शनार्थवत्त्वं दृ
ष्टं किमुत विषयशून्यादात्मनोऽन्यद्वस्त्वन्तरमपश्यतो नित्यचै
तन्यमात्रस्वरूपस्येति। तस्मान्नास्ति सम्यग्दर्शनानर्थक्यप्रस
ङ्गः। प्रकाशादिवदिति निदर्शनोपन्यासः। यथा प्रकाशः सौर
श्चान्द्रमसो वा वियद्व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसम्ब
न्धात् तेषु ऋजुवक्रादिभावं प्रतिपद्यमानेषु तत्तद्भावमि

---

भ्रान्तिकृतत्वं प्रपञ्चयति। जीवस्यापीत्यादिना। भ्रान्तौ सत्यां दुःखमि
त्यन्वयमुक्त्वा भ्रान्त्यभावे दुःखाभावः। दर्शनाच्च भ्रान्तिकृतं दुःखमि
ति निश्चीयत इत्याह। व्यतिरेकेति। इतरेष्वभिमानशून्येष्वित्यर्थः। लौ
किकस्यापि सम्यग्ज्ञाने दुःखाभावो दृष्टः किमु वाच्यं नित्यमुक्तस्वरू
पस्येत्याह। अतश्चेति। एवमंशित्वे हेतोः सोपाधित्वमुक्त्वा दोषं

प्रतिपद्यमानोऽपि न परमार्थतस्तद्भावं प्रतिपद्यते, यथा चाकाशो घटादिषु गच्छत्सु गच्छन्निव विभाव्यमानोऽपि न परमार्थतो गच्छति, यथाचोदशरावादिकम्पनात् तद्गते सूर्यप्रतिबिम्बे कम्पमानेऽपि न तद्वान् सूर्यः कम्पते, एवमविद्याप्रत्युपस्थापिते बुद्ध्याद्युपाध्युपहिते जीवाख्येंऽशे दुःखायमानेऽपि न तद्वानीश्वरो दुःखायते। जीवस्याऽपि दुःखप्राप्तिरविद्यानिमित्तैवेत्युक्तं। तथाचाविद्यानिमित्त-जीवभावव्युदासेन ब्रह्मभावमेव जीवस्य प्रतिपादयन्ति वेदान्ताः 'तत्त्वमसि' इत्येवमादयः,तस्मान्नास्ति जैवेन दुःखेन परमात्मनो दुःखित्वप्रसङ्गः॥

स्मरन्ति च॥ ४७॥

स्मरन्ति च व्यासादयः यथा जैवेन दुःखेन न परमात्मा दुःखायते इति।

"तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः।
न लिप्यते फलैश्चाऽपि पद्मपत्रमिवाम्भसा॥
कर्मात्मात्वपरो योऽसौ मोक्षबन्धैः स युज्यते।
स सप्तदशकेनापि राशिना युज्यते पुनः"॥ इति।

---

वस्तुतः स्वांशधर्मवानिति व्याप्तिस्वलक्षये व्यभिचारयति। प्रकाशादिवदिति। वस्तुतः स्वांशदुःखित्वसाध्यस्य देवदत्तदृष्टान्ते वैकल्यमप्याह। जीवस्येति। कल्पितदुःखित्वसाध्यन्तु भ्रान्त्याद्यभावादीश्वरे नास्तीत्यर्थः, किञ्च जीवस्येश्वरस्य वा वस्तुतो दुःखित्वानुमानं न युक्तं आगमबाधादित्याह। तथा चेति। दुःखित्वे तन्नाशोपदेशो न स्यादित्यर्थः॥

स्मृत्याप्यनुमानं बाध्यमित्याह। स्मरन्ति चेति। सूत्रं व्याचष्टे। स्मरन्तीति। तत्र जीवपरयोर्मध्ये कर्मात्मा कर्माश्रयो जीवः। दशेन्द्रियाणि

च मन्त्रात् समामनन्ति चेति वाक्यशेषः । 'तयोरन्यः पिप्प
स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' इति 'एकस्तथा सर्वभूतान्
रात्मा न लिप्यते लोकदुःखेन बाह्यः' इति च । अत्राह
तर्हि एक एव सर्वेषां भूतानामन्तरात्मा स्यात् कथमनुज्ञा
परिहारौ स्यातां लौकिकौ वैदिकौ चेति । ननु चांशो जी
ईश्वरस्येत्युक्तं तद्भेदाच्चानुज्ञापरिहारौ तदाश्रयावव्यति
र्णावुपपद्येते किमत्र चोद्यत इति । उच्यते नैतदेवं, अनंशत्व
मपि हि जीवस्याभेदवादिन्यः श्रुतयः प्रतिपादयन्ति 'तत्सृ
ष्ट्वा तदेवानुप्राविशत्' 'नान्योऽतोऽस्ति द्रष्टा' 'मृत्योः स मृत्यु
माप्नोति य इह नानेव पश्यति' 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्ये
जातीयकाः । ननु भेदाभेदावगमाभ्यामंशत्वं सिध्यतीत्यु
स्यादेतदेवं यद्युभावपि भेदाभेदौ प्रतिपिपादयिषितौ स्या
ताम्, अभेद एव त्वत्र प्रतिपिपादयिषितः, ब्रह्मात्मत्वप्रतिप
पुरुषार्थसिद्धेः । स्वभावप्राप्तस्तु भेदोऽनूद्यते । न च निर

---

पञ्च प्राणाः मनो बुद्धिश्चेति सप्तदशकं राशिलिङ्गम् । इत्य
स्मृतिमनुपयार्थं इत्याह । प्रकाशादिवदिति । यथाऽऽदित्यः प्रकाशक
लिप्यते तथेत्यर्थः । यतो बाह्योऽसङ्गः तस्मात् न लिप्यते, एवमंशित्व
मीश्वरे दोषं निरस्यांश इत्युक्तं जीवस्यांशत्वं देहाद्युपाधिकमिति
टयितुमखण्डस्वरूपैक्यमादायाक्षिपति । अत्राहेत्यादिना । कथं
इत्यन्वयः । तद्भेदादंशभेदात् । निरवयवब्रह्मणो मुख्यांशेन
मीति वदता सिद्धान्तिना भेदो नास्तीत्युक्तं भवति, भेदाभावे
यित्वाभावादनुज्ञादिभेदाव्यवहारानुपपत्तिरित्याक्षेपाभिप्रायः । न
भेदस्यासत्यं नरशृङ्गवत् ब्रूमः, किन्तु मिथ्यात्वं वदामः । तथा

यवस्य ब्रह्मणो मुख्योऽंशो जीवः सम्भवतीत्युक्तं, तस्मात् पर एव एकः सर्वेषां भूतानामन्तरात्मा जीवभावेनावस्थित इत्यतो वक्तव्यानुज्ञापरिहारोपपत्तिः, तां ब्रूमः ॥

**अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ४८ ॥**

ऋतौ भार्यामुपेयादित्यनुज्ञा, गुर्वङ्गनां नोपगच्छेदिति परिहारः, तथाऽग्नीषोमीयं पशुं संज्ञपयेदित्यनुज्ञा मा हिंस्यात् सर्वा भूतानीति परिहारः। एवं लोकेऽपि मित्रमुपसेवितव्यमित्यनुज्ञा, शत्रुः परिहर्तव्य इति परिहारः, एवम्प्रकारावनुज्ञापरिहारावेकत्वेऽप्यात्मनो देहसम्बन्धात् स्याताम्। देहैः सम्बन्धो देहसम्बन्धः। कः पुनर्देहसम्बन्धः। देहादिरयं सङ्घातोऽहमेवेत्यात्मनि विपरीतप्रत्ययोत्पत्तिः। दृष्टा च सा सर्वप्राणिनां अहं गच्छाम्यहमागच्छामि अहमन्धोऽहमनन्धोऽहं मूढोऽहममूढ इत्येवमात्मिका। न ह्यस्याः सम्यग्दर्शनादन्यन्निवारकमस्ति। प्राक् तु सम्यग्दर्शनात् प्रततैषा भ्रान्तिः सर्वजन्तूनां। तदेवमविद्यानिमित्तदेहाद्युपाधिसम्बन्धकृताद्विशेषादैकात्म्याभ्युपगमेऽपि अनुज्ञापरिहाराववकल्पेते, सम्यग्दर्शिनस्तर्ह्यनुज्ञापरिहारानर्थक्यं प्राप्तं न तस्य कृतार्थत्वान्नियोज्यत्वानुपपत्तेः। हेयोपादेय-

---

देहाद्युपाधिभेदेनांशजीवानामात्मनोऽनुबोधात् कल्पितभेदाद्भेदव्यवहारोपपत्तिरिति सूत्रेण समाधत्ते । तामित्यादिना ॥

ननु भ्रान्तेः क्वचित्सम्भवतो व्यवहारविभेदः स्वादिवत् आह । न ह्यस्या इत्यादिना । प्रतता सन्तता, विशेषो भेदः, अभियोक्तृत्वा-

योर्हि नियोज्यो नियोक्तव्यः स्यात्, आत्मनस्तु व्यतिरि
हेयमुपादेयं वा वस्त्वपश्यत् कथं नियुञ्जीत, न चात्माऽऽत्म
न्येव नियोज्यः स्यात्। शरीरव्यतिरेकदर्शिन एव नियो
ज्यत्वमिति चेन्न तत्संहतत्वाभिमानात्। सत्यं व्यतिरेक
दर्शिनो नियोज्यत्वं तथापि व्योमादिवद्देहाद्यसंहतत्वम
पश्यत एवात्मनो नियोज्यत्वाभिमानः। न हि देहाद्यसं
हतत्वदर्शिनः कस्यचिदपि नियोगो दृष्टः किमुतैकात्म्यदर्शि
नः। न च नियोगाभावात् सम्यग्दर्शिनो यथेष्टचेष्टाप्रस
सर्वत्राभिमानस्यैव प्रवर्तकत्वात्, अभिमानाभावाच्च सम्य
ग्दर्शिनः, तस्माद्देहसम्बन्धादेवानुज्ञापरिहारौ ज्योतिरादि
वत्। यथा ज्योतिष एकत्वेऽपि अग्निः क्रव्यात् परिह्रियते
नेतरः, यथा च प्रकाश एकस्यापि सवितुरमेध्यप्रदेशसम्बद्धः

---

द्दुमब्रह्मविदः। शास्त्रानर्थक्यमिष्टमित्याह। न तदिति। नियोगवि
द्वैताभावादात्मन्यसाध्ये नियोगानुपपत्तेर्न ब्रह्मविन्नियोज्य इत्यर्थः।
त्यामुष्मिकफलहेतुके कर्मणि देहभिन्नात्मविवेकिन एवाधिकारो या
तथा च ब्रह्मविन्नियोज्यः विवेकित्वात् कर्माधिकारिवदिति शङ्क
शरीरव्यतिरेकेति। परोक्षविवेकस्यापरोक्षभ्रमाविरोधित्वात् कर्मि
देहाभेदभ्रमोऽस्ति, तथा च भ्रम उपाधिरिति परिहरति। नेत्यादि
यथा व्योम देहाद्भिन्नं तद्वदसंहतमित्यपश्यतः भ्रान्तस्येत्यर्थः। ब्रह्मवि
योज्यः अभ्रान्तत्वात् सुषुप्तवदित्याह। न हीति। देहाद्यसंहत
दर्शिनः संहतत्वदर्शनशून्यस्य भेदभ्रान्तिरहितस्य सुषुप्तस्येति याव
यस्यास्याऽपि आत्मभावनाके नियोज्यत्वं न दृष्टं किमु वाच्यमात्म
इत्यर्थः। अनियोज्यत्वे बाधकमाशङ्क्य परिहरति। न चेति। नि
वैराग्यस्य ज्ञानार्थमभ्यस्तस्य ज्ञानानन्तरमनुवृत्त्या विषयेषु प्रवृत्ति
रनिवृत्तेर्नातिप्रसङ्ग इत्यर्थः। यदुक्तं भगवता 'रसोऽप्यस्य परं
निवर्तते' इति। एवमग्न्यादिप्रसङ्गेनानियोज्यं विदुष उक्त्वा प्र

परिह्रियते नेतरः शुचिभूमिष्ठः तथा भौमाः प्रदेशा वज्र-वैदूर्यादयः उपादीयन्ते, भौमा अपि सन्तो नरकलेवरादयः परिह्रियन्ते, तथा मूत्रपुरीषं गवां पवित्रतया परिगृह्य-ते, तदेव जात्यन्तरे परिवर्ज्यते तद्वत्॥

## असन्ततेश्चाव्यतिकरः॥ ४९॥

स्यातां नामानुज्ञापरिहारावेकस्याप्यात्मनो देहविशेष-योगात्। यस्त्वयं कर्मफलसम्बन्धः स चैकात्म्याभ्युपगमे व्यतिकीर्येत स्वाम्येकत्वादिति चेत्, नैतदेवं, असन्ततेः। न हि कर्तुर्भोक्तुश्चात्मनः सन्ततिः सर्वैः शरीरैः सम्बन्धोऽस्ति। उपाधितन्त्रो हि जीवः इत्युक्तं; उपाध्यसन्तानाच्च नास्ति जीवसन्तानः, ततश्च कर्मव्यतिकरः फलव्यतिकरो वा न भविष्यति॥

## आभास एव च॥ ५०॥

आभास एव चैष जीवः परस्यात्मनो जलसूर्यकादिवत् प्रतिपत्तव्यः' न स एव साक्षान्नापि वस्त्वन्तरम्। अतश्च यथा

---

मुपसंहरति। तस्मादिति। एकस्याप्युपाधिभेदात् अनुज्ञापरिहारयो दृष्टान्तमाह। ज्योतिरिति। क्रव्यं मांसमत्तीति क्रव्यादशुचिः श्मशा-नाग्निरित्यर्थः॥

सिद्धान्तरत्वेन सूत्रं व्याचष्टे। स्यातामित्यादिना। यद्यपि स्थूल-देहसम्बन्धादुपादानपरित्यागौ स्यातां तथाप्यन्यकृतकर्मफलमितरेणापि भुज्येतेति कर्मफलव्यतिकरः साङ्कर्यं स्यादिति विशिष्टस्य स्वर्गादिभोगा-योगेऽपि विशिष्टात्मन एकस्यैव भोक्तृत्वात्। तस्मात् स्वर्गी नरकी चेति व्यवस्थासिद्ध्यै आत्मस्वरूपभेदो वाच्य इति शङ्कार्थः। भवेत्तदा साङ्कर्यं यद्यनुपहितात्मन एव भोक्तृत्वं स्यात् त्वेतदस्ति। तद्गुणसारत्वादि-ष्वत्र भोक्तुरपि, बुद्ध्युपहितस्यैव कर्तृत्वादिस्थापनात्, तथा च बुद्धेः परदेहासम्बन्धात् तदुपहितजीवस्य नास्ति परदेहसम्बन्ध इति बुद्धिभेदेन भोक्तृभेदाच्च कर्मादिसाङ्कर्यमिति समाधानार्थः॥

नैकस्मिन् जलसूर्यके कम्पमाने जलसूर्यकान्तरं कम्पते, एवं नैकस्मिन् जीवे कर्मफलसम्बन्धिनि जीवान्तरस्य तत्सम्बन्धः एवमव्यतिकर एव कर्मफलयोः आभासस्य चाविद्याकृतत्वात् तदाश्रयस्य संसारस्याविद्याकृतत्वोपपत्तिरिति तद्व्युदासेन च पारमार्थिकस्य ब्रह्मात्मभावस्योपदेशोपपत्तिः । येषान्तु बहव आत्मानस्ते च सर्वे सर्वगतास्तेषामेवैष व्यतिकरः प्राप्नोति । कथं बहवो विभवश्चात्मानश्चैतन्यमात्रस्वरूपा निर्गुणा निरतिशयाश्च तदर्थं साधारणं प्रधानं तन्निमित्तैषां भोगापवर्गसिद्धिरिति साङ्ख्याः । सति बहुत्वे विभुत्वे च घटकुड्यादिसमानाः द्रव्यमात्रस्वरूपाः स्वतो

---

अंशत्वाद्युक्तं जीवस्यांशत्वं घटाकाशस्येवोपाध्यवच्छेदमुक्त्वा अति एवकारेणावच्छेदपक्षारुचिं सूचयन् रूपं रूपं प्रतिरूपो बभूवेत्यादिश्रुतिसिद्धं प्रतिबिम्बपक्षमुपन्यस्यति भगवान् सूत्रकारः । आभास एव चेति । स परमात्मनः सानुपहितो जीवो न भवति उपाधिस्थश्च नापि ततो भिन्नः, स एष इह प्रविष्ट इत्याद्यभेदश्रुतिस्मृतिविरोधात्, तस्मादविद्यातत्कार्यबुद्ध्यादिप्रतिबिम्ब एव जीव इत्यर्थः । कल्पितबुद्धिप्रतिबिम्बभेदात् स्वर्गी नारकीत्यादिव्यवस्था जीवस्याविद्यकत्वादिमोक्षश्चेत्युपपद्यत इत्याह । अत एवेत्यादिना । यत्त्वयं भास्करप्रलापः प्रतिबिम्बस्य नोपाधिसंसृष्टतया कल्पितत्वं किन्तु स्वरूपेणैव, कल्पितप्रतिबिम्बस्य शुक्तौ रजतयोगात् न जीवत्वं इति स विद्वान् स्यादज्ञानकृत इत्युपेक्षणीयः । यदि दर्पणे मुखं शुक्तौ रजतवत् स्यात् तदा नेदं रजतमिति स्वरूपबाधवन्नेदं मुखमिति बाध्यं स्यात्, यतो नास्ति दर्पणे मुखमिति संसर्गमात्रबाधात् इदमीयं मुखमेवेदमिति बिम्बमुखाभेदानुभवात् संसृष्टत्वेनैव कल्पितत्वं प्रत्येतव्यम् । अर्थवादिकल्पप्रदर्शितस्वभावात् स्वपरप्रयोगात्वेन स्वरूपकल्पना, चात्र दर्पणटीकायाम्

तत्र आत्मानस्तदुपकरणानि चाणूनि मनांसि अचेतनानि तत्रात्मद्रव्याणां मनोद्रव्याणां च संयोगान्नवेच्छादयो वैशेषिका आत्मगुणा उत्पद्यन्ते, ते चाव्यतिकरेण प्रत्येकमात्मसु समवयन्ति, स संसारस्तेषां नवानामात्मगुणानामत्यन्तानुत्पादो मोक्ष इति काणादाः। तत्र साङ्ख्यानां तावच्चैतन्यस्वरूपत्वात् सर्वात्मनां सन्निधानाद्यविशेषाच्च एकस्य सुखदुःखसम्बन्धे सर्वेषां सुखदुःखसम्बन्धः प्राप्नोति। स्यादेतत् प्रधानप्रवृत्तेः पुरुषकैवल्यार्थत्वात् व्यवस्था भविष्यति। अन्यथा हि स्वविभूतिख्यापनार्था प्रधानप्रवृत्तिः स्यात्, तथा चानिर्मोक्षः प्रसज्येतेति। नैतत्सारम्। न ह्यभिलषितसिद्धिनिबन्धना व्यवस्था शक्या विज्ञातुं, उपपत्त्या तु कयाचित् व्यवस्थोच्यते। असत्यां पुनरुपपत्तौ कामं माभूदभिलषितं पुरुषकैवल्यं, प्राप्नोति तु व्यवस्थाहेत्वभावाद्व्यतिकरः

---

यैरित्युपरम्यते। एवं स्वमते स्वरूपैक्येऽप्युपहितजीवभेदादसाङ्कर्यमुक्तं, सम्प्रति सूत्रे चकारसूचितं परेषां साङ्कर्यं वक्तुमुपक्रमते। येषामित्यादिना। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावना नवात्मविशेषगुणाः, सन्निधानादित्यादिपदादौदासीन्यमुक्तम्। साङ्ख्यः स्वाभिप्रायं शङ्कते। स्यादेतदिति। सर्वेषां पुंसां प्रकृतिसान्निध्याद्यविशेषेऽपि प्रकृतिरेव प्रतिपुरुषं नियमेन भोगापवर्गार्थं प्रवर्तते, तथा चोद्देश्यपुरुषार्थनियता प्रधानप्रवृत्तिरिति भोगादिव्यवस्था, अन्यथा नियमप्रवृत्त्यनङ्गीकारे स्वमाहात्म्यख्यापनार्था प्रधानस्य प्रवृत्तिरित्युद्देश्यविघातः स्यादित्यर्थः। जडप्रधानस्योद्देश्यविवेकाभावात् पुरुषार्थस्याप्यनागतस्याचेतनस्यानियामकत्वाच्च व्यवस्था नानुमित्युक्त्यादित्याह। नैतदिति। यो हि नियामकाभावेनोद्देश्यविघातमापादयति तं प्रति तदैवापादनमिष्टमिति भावः। सार्वज्ञ-

काणादानामपि यदैकेनात्मना मनः संयुज्यते तदात्म
रैरपि नान्तरीयकः संयोगः स्यात् सन्निधानाद्यविशेषा
ततश्च हेत्वविशेषात् फलाविशेष इत्येकस्यात्मनः सुखदु
संयोगे सर्वात्मनामेव समानसुखदुःखत्वं प्रसज्येत।
देतत् अदृष्टनिमित्तो नियमो भविष्यतीति, नेत्याह ।

अदृष्टानियमात् ॥ ५१॥

बहुष्वात्मसु आकाशवत् सर्वगतेषु प्रतिशरीरं बा
भ्यान्तराविशेषेण सन्निहितेषु मनोवाक्कायैर्धर्माधर्मल
अदृष्टमुपार्ज्यते। साङ्ख्यानां तावत्तदनात्मसमवायिप्रधा
र्तिप्रधानसाधारण्यान्न प्रत्यात्मं सुखदुःखोपभोगस्य नि
कमुपपद्यते। काणादानामपि पूर्ववत् साधरणेन आत्म
नःसंयोगेन निर्वर्त्तितस्याहृष्टस्यापि, अस्यैवात्मनः इदम
मिति नियमे हेत्वभावादेष एव दोषः। स्यादेतत् अह
फलं प्राप्नवानीदं परिहराणि इत्थं प्रयते इत्थं करवा
वंविधा अभिसन्ध्यादयः प्रत्यात्मं प्रवर्तमाना अदृष्टस्या
च स्वस्वामिभावं नियंस्यन्तीति, नेत्याह

मतेऽपि भोगादिसाङ्कर्यमित्याह । काणादानामिति । हेतुसंयोग
फलं सुखादि, यदात्माहृष्टकृतो यो मनःसंयोगः स तदात्मन एव फ
हेतुरिति व्यवस्थां शङ्कते । स्यादेतदिति सूत्रेण परिहरति । नेत्या
पूर्ववत् मनःसंयोगवत्, अदृष्टस्यापि सर्वात्मसाधारणत्वात् न
स्येत्यर्थः । रागादिनियमात् तज्जादृष्टनियम इत्याशङ्कोत्तरसूत्र
त्पठति । स्यादेतदित्यादिना ॥

## अभिसन्ध्यादिष्वपि चैवम् ॥ ५२ ॥

अभिसन्ध्यादीनामपि साधारणेनैवात्ममनःसंयोगेन सर्वात्मसन्निधौ क्रियमाणानां नियमहेतुत्वानुपपत्तेरुक्तदोषानुषङ्ग एव ॥

## प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥

अथोच्येत विभुत्वेऽप्यात्मनः शरीरप्रतिष्ठेन मनसा संयोगः शरीरावच्छिन्न एवात्मप्रदेशे भविष्यति, अतः प्रदेशकृता व्यवस्थाऽभिसन्ध्यादीनामदृष्टस्य सुखदुःखयोश्च भविष्यतीति। तदपि नोपपद्यते, कस्मात् अन्तर्भावात्। विभुत्वाविशेषाद्धि सर्व एवात्मानः सर्वशरीरेष्वन्तर्भवन्ति। तत्र न वैशेषिकैः शरीरावच्छिन्नोऽप्यात्मनः प्रदेशः कल्पयितुं शक्यः। कल्प्यमानोऽप्ययं निष्प्रदेशस्यात्मनः प्रदेशः काल्पनिकत्वादेव न पारमार्थिकं कार्यं नियन्तुं शक्नोति। शरीरमपि सर्वात्मसन्निधावुत्पद्यमानमस्यैवात्मनो नेतरेषामिति न नियन्तुं शक्यम्। प्रदेशविशेषाभ्युपगमेऽपि च द्वयोरात्मनोः

---

अनियमः उक्तदोषः, आत्मान्तरप्रदेशस्य परदेहे अन्तर्भावात् अव्यवस्थेति सूत्रार्थः ॥

किं मनसा संयुक्त आत्मनः प्रदेशः उत कल्पितः। आद्ये सर्वात्मनां सर्वदेहेषु अन्तर्भाव इति अव्यवस्था। द्वितीयं दूषयति। तत्र न वैशेषिकैरिति। सर्वात्मसान्निध्ये सति कस्यचिदेव प्रदेशः कल्पयितुमशक्यः नियामकाभावादित्यर्थः। प्रदेशकल्पनामङ्गीकृत्याह। कल्पितेति। अदृष्टमभिसन्ध्यादिकं यस्यात्मनो यच्छरीरं तत्र तस्यैव भोग इति व्यवस्थाभावमाह। शरीरमपीति। प्रदेशपक्षे दोषान्तरमाह। प्रदेशेति। यस्मिन्नात्मप्रदेशेऽदृष्टोत्पत्तिः स किं चलः स्थिरो वा, नाद्यः अचलस्य निरंशस्य चलनविभागयोरसम्भवादनात्मत्वापाताच्च। द्वितीये तस्मिन्नेव प्रदेशे परस्यापि भोगदर्शनाददृष्टसाम्ये चैकेनापि शरीरेण द्वयोरात्मनोर्भोगप्रसङ्गः। यद्यात्मभेदात् प्रदेशयोर्भेदः तदापि तयोरेकदेशान्तर्भावा-

समानसुखदुःखभाजोः कदाचिदेकेनैव तावच्छरीरेणोपभो-
गसिद्धिः स्यात्, समानप्रदेशस्यापि द्वयोरात्मनोरदृष्ट-
सम्भवात्। तथा हि देवदत्तो यस्मिन् प्रदेशे सुखदुःखमन्व-
भूत् तस्मात् प्रदेशादपक्रान्ते तच्छरीरे यज्ञदत्तशरीरे त-
देशमनुप्राप्ते तस्यापीतरेण समानः सुखदुःखानुभवो दृष्टः
स न स्यात् यदि देवदत्तयज्ञदत्तयोः समानप्रदेशमदृष्टं
स्यात्, स्वर्गाद्यनुपभोगप्रसङ्गश्च प्रदेशवादिनः स्यात्, ब्राह्म-
णादिशरीरप्रदेशेष्वदृष्टनिष्पत्तेः प्रदेशान्तरवर्तित्वाच्च। स्व-
र्गाद्युपभोगस्य सर्वगतत्वानुपपत्तिश्च बहूनामात्मनां दृष्टा-
न्ताभावात्। वद तावत् त्वं के बहवः समानप्रदेशाश्च

---

भोगधाट्यं तदस्य सावयवात्मत्वादप्रसङ्गश्च। किञ्च यत्र यत्रात्मनः प्र-
देशे शरीरादिसंयोगाददृष्टमुत्पन्नं तत्तदात्मप्रदेशे स्थितमिति स्वर्गे
शरीरावच्छिन्नात्मन्यदृष्टाभावात् भोगो न स्यात्, अतः प्रदेशभेदो न
स्यापन्नः। यत्तु, अनुत्पन्नमदृष्टं स्वाश्रये यत्र क्वचित् भोगहेतु-
स्वर्गादिभोगनिर्वृत्तिरिति, तन्न भोगशरीरात् दूरस्थादृष्टे मानाभा-
वात्। यदपि केचिदाहुः मनस एकत्वेऽप्यात्मनां भेदेन संयोगव्यक्ति-
भेदात् कयाचित् संयोगव्यक्त्या कांश्चिदेशात्मन्यदृष्टादिकमित्यवाडुर्य-
तत्र संयोगव्यक्तीनां वैजात्याभावेन सर्वासामैकदेशात्तः सर्वात्मसाक्ष-
त्यापत्तेः, तथाच सर्वात्मनां एकस्मिन् देहे भोक्तृत्वं दुर्वारम्।
बहूनां विभुत्वमङ्गीकृत्य भाष्यंसूक्तं सम्प्रति कर्तृणां विभुत्वमपि असम्भ-
वात् दृष्टत्वात्तदभावात् मानाभावाच्चेत्याह। सर्वगतत्वानुपपत्ति-
किञ्च बहूनां विभुत्वे समानदेशत्वं वाच्यं तच्चायुक्तं अदृष्टत्वादि-
त्यर्थः इति। ननु रूपरसादीनामेकघटस्थत्वं दृष्टमिति चेत् नायमदृष्ट-
दृष्टान्तः। रूपस्य तेजोमात्रत्वाद्रसस्य जलमात्रत्वात् गन्धस्य पृथि-

रूपादय इति चेत् न, तेषामपि धर्म्मांशेनाभेदाल्लक्षणभेदाच्च न तु बहूनामात्मनां लक्षणभेदोऽस्ति अन्त्यविशेषवशाद्भेदोपपत्तिरिति चेत् न भेदकल्पनाया अन्त्यविशेषकल्पनायाश्चेतरेतराश्रयत्वात्, आकाशादीनामपि विभुत्वं ब्रह्मवादिनोऽसिद्धं कार्यत्वाभ्युपगमात्, तस्मादात्मैकत्वपक्ष एव सर्वदोषाभाव इति सिद्धम् ॥

इति श्रीमच्छारीरकमीमांसाभाष्ये शङ्करभगवत्पादकृतौ द्वितीयस्याध्यायस्य तृतीयः पादः ॥ * ॥

---

मात्मत्वात् द्रव्येषु तत्तद्गुणस्य स्वस्वधर्म्यंशेनाभेदात् तेजआदिधर्म्यतिरिक्तरूपाद्यभावात् । किञ्चात्मनां बहुत्वमप्यसिद्धं, आत्मत्वरूपलक्षणस्याभेदात्, तथा च देवदत्तात्मा यज्ञदत्तात्मनो न भिन्नः आत्मत्वाद्यज्ञदत्तात्मवत् । अत्र वैशेषिकः शङ्कते । अन्त्यविशेषेति । नित्यद्रव्यमात्रवृत्तयो विशेषास्ते च स्वयं स्वाश्रयव्यावर्तका एव न त्वेषां व्यावर्तकमपेक्षन्ते इत्यन्त्या उच्यन्ते । तथा च विशेषरूपलक्षणभेदात् भवत्यात्मभेद इत्यर्थः । न तावदात्मान्तरात्मनः सकाशाद्भेदज्ञानार्थं विशेषकल्पना आत्मत्वादेवानात्मभेदसिद्धेः । नाप्यात्मनां मिथो भेदज्ञानार्थं तत्कल्पना, आत्मभेदस्याद्याप्यसिद्धेः । न च विशेषभेदकल्पनादेवात्मभेदकल्पना युक्ता आत्मभेदसिद्धावात्मसु विशेषभेदसिद्धिस्तत्सिद्धौ तत्सिद्धिरित्यन्योन्याश्रयादिति परिहारार्थः । यत्तु बहूनां विभुत्वे आकाशादिकमुदाहरणम् इति सोऽप्यसम्मत इत्याह । आकाशादीनामिति । विभुत्वस्यैकवृत्तित्वे बाधकाच्च विभुभेदः । यथैकस्मिन्नाकाशे भेरीवीणादिभेदेन तारमन्द्रादिशब्दव्यवस्था एवमेकस्मिन्नप्यात्मनि बुद्ध्युपाधिभेदेन सुखादिव्यवस्थोपपत्तेरात्मभेदेऽपि व्यवस्थानुपपत्तेश्चात्मान्यथा भेदकल्पनेत्युपसंहरति । तस्मादिति । एवमुक्तभोक्तृश्रुतीनां विरोधाभावात् ब्रह्मण्यद्वये समन्वय इति सिद्धम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभायां द्वितीयाध्यायस्य तृतीयः पादः ॥ * ॥

## ओं परमात्मने नमः।

### तथा प्राणाः ॥ १ ॥

वियदादिविषयः श्रुतिविप्रतिषेधः तृतीयेन पादेन परि-
हृतः, चतुर्थेनेदानीं प्राणविषयः परिह्रियते। तत्र ताव
'तत्तेजो ऽसृजत' इति 'तस्माद्वा एतस्मादात्मन आका
सम्भूतः' इति चैवमादिषूत्पत्तिप्रकरणेषु प्राणानामुत्प
र्नाम्नायते। क्वचिच्चानुत्पत्तिरेवैषामाम्नायते 'असद्वा इद
आसीत् तदाहुः किं तदसदासीदित्यृषयो वाव तेऽग्रे स
सीत् तदाहुः के ते ऋषय इति प्राणा वा ऋषयः' इत्य
प्रागुत्पत्तेः प्राणानां सद्भावश्रवणात्। अन्यत्र तु प्राणाना
प्युत्पत्तिः पठ्यते 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्च
एवमेवैतस्मादात्मनः सर्वे प्राणाः' इति 'एतस्माज्जायते प्रा

---

ओं ब्रह्मणे नमः।

पूर्वाधिकरणे वक्तुः स्वरूपं विचार्य तदुपकरणानामिन्द्रियाणामुत्प
साधयति। तथा प्राणाः। भूतभोक्तृविचारानन्तरं भौतिकप्राणवि
इति हेतुहेतुमद्भावं पादयोः सङ्गतिमाह। वियदादीति। तत्र वि
तिषेधमाह। तत्र त्वादिना। यद्यपि प्राणानामनुत्पत्तौ एकवि
प्रतिज्ञानुपपत्तेर्वियदधिकरणन्यायादेवोत्पत्तिः सिध्यति तथापि प्र
प्राक्सद्भावश्रुतेः गतिकथनार्थमेतदधिकरणमित्यपौनरुक्त्यम्। अत्र प्र
विषयाः। ते किमुत्पद्यन्ते न वेति श्रुतीनां विप्रतिपत्त्या संशये
असमञ्जसत्वादनिर्णय इत्यप्रामाण्यमिति पूर्वपक्षफलं, तत्र गौणत्वाभि
धानमाह। अत्र चेति। प्राणानां प्रलये सद्भावश्रुतेर्निरवकाशत्वेन
अल्पाद्युत्पत्तिश्रुतिर्गौणी... इत्यविरोध इत्यर्थः। अप्रमाण
गौणपक्षोऽपि सुस्थसिद्धान्तिनः पूर्वपक्ष एवेति ज्ञापनार्थमय...
सुखनिर्वाहानाह। तत्र इति। तदाशङ्कामाचष्टे। उ...

मनः सर्वेन्द्रियाणि च' इति 'सप्त प्राणाः प्रभवन्ति तस्मात्' इति 'स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नं' इति चैवमादिप्रदेशेषु। तत्र तत्र श्रुतिविप्रतिषेधादन्यतरनिर्धारणकारणानिरूपणाद्वाप्रतिपत्तिः प्राप्नोति, अथवा प्रागुत्पत्तेः सद्भावश्रवणाद् गौणी प्राणानामुत्पत्तिश्रुतिरिति प्राप्नोति, अत इदं पठति। तथा प्राणा इति। कथं पुनरत्र तथेत्यक्षरानुलोम्यं, प्रकृतोपमानाभावात्। सर्वगतात्मबहुत्ववादिदूषणमतीतानन्तरपादान्ते प्रकृतं तत्तावन्नोपमानं सम्भवति, सादृश्याभावात्। सादृश्ये हि सत्युपमानं स्यात्, यथा सिंहस्तथा बलवर्मेति। अदृष्टसाम्यप्रतिपादनार्थमिति यद्युच्येत, यथा अदृष्टस्य सर्वा-

---

क्षरानुलोम्यं सामञ्जस्यमित्यर्थः। साम्यं स्फुटयति, यथा दूषणेति। दूषणवत् प्राणा इत्यनुचितम्। यद्यदृष्टवत् प्राणा अप्यनियता इति सूत्रमन्येति तथापि पुनरुक्तं जीववत् प्राणा नोत्पद्यन्त इति सूत्रार्थं के-दपविद्वान्त इत्याक्षेपार्थः। समाधत्ते। न उदाहरणेति। दृष्टान्तदार्ष्टान्तिकयोर्व्यवहितो साम्य इत्यङ्गीकृत्यैकवाक्यत्वेन सान्निध्यमात्रं, सङ्गति नायं नियमः। जैमिनिना भगवता व्यवहिताव्यवहितदृष्टान्ताश्रितत्वादित्याह। यथ नेति। अस्ति तृतीयाध्यायेऽश्वप्रतिग्रहेष्ट्यधिकरणं, तस्येदं विषयवाक्यं, "यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान्निर्वपेत्" इत्येतदुत्तराधिकरणं किमियं वारुणीष्टिर्दातुरुत प्रतिग्रहीतुरिति विषये प्रतिगृह्णीयादिति श्रुतेः प्रतिग्रहीतुरित्याशङ्क्य प्रजापतिर्वरुणायाश्वमनयदित्युपक्रमे दातृकीर्तनात् लिङ्गाद्दातुरेवेति स्यात्, अतः प्रतिगृह्णीयादित्यत्र पदस्याश्वान् यः प्रतिपादयेदित्यर्थः। दद्यादिति यावत्। योऽश्वदाता स वारुणीमिष्टिं कुर्यादिति वाक्यार्थे स्थिते

त्मनश्चिन्तावुत्पद्यमानस्यानियतत्वं, एवं प्राणानामपि सर्व
त्मनः प्रत्यनियतत्वमिति, तदपि देहानियमेनैवोक्तत्वात्
नरुक्तं भवेत् । न च जीवेन प्राणा उपमीयेरन्, सिद्धान्त
रोधात् । जीवस्य ह्यनुत्पत्तिराख्याता प्राणानां तूत्पत्तिं
चिख्यासिता । तस्मात् तथेत्यसम्बन्धमेतत् प्रतिभाति ।
उदाहरणोपात्तेनाप्युपमानेन सम्बन्धोपपत्तेः । अत्र प्राणो
त्पत्तिवादिवाक्यजातमुदाहरणं 'एतस्मादात्मनः सर्वे प्राणाः
सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि च व्युच्चरन्ति'
तीयकं । तत्र यथा लोकादयः परस्माद्ब्रह्मण उत्पद्यन्ते
तथा प्राणा अपीत्यर्थः । 'तथा एतस्माज्जायते प्राणो म

चिन्ता, अश्वदाननिमित्तेयमिष्टिः किं लौकिकेऽश्वदाने वैदिके वा ।
तत्र 'न केसरिणो ददाति' इति निषिद्धलौकिकाश्वदाने दोषस्य
तन्निरासार्थेयमिष्टिरिति दोषाभावाद्वैदिके न स्यादिति प्राप्ते
सिद्धान्तः । 'अग्नि हि वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति'
इति दातुर्दोषं सङ्कीर्त्येष्टिर्विहिता । वरुणशब्दो जलोदराख्ये
रूढः । न च लौकिकेऽश्वदानेऽयं रोगो भवति इति प्रसिद्धम् । अ
नेनैव वाक्येन प्रसिद्धः । दाने दोषस्य निरासार्था वैदिकत्वमेव
कयभेदात् । न च वृणोति इति व्युत्पत्त्या वरुणशब्दो निषेधातिक्रम
दोषानुवादक इति युक्तं, रूढित्यागापातात् । तत्त्यागे च वैदिके
दानेऽप्यवागजन्यदुःखं प्रागुक्तव्युत्पत्त्या शक्योऽनुवदितुं, तस्मात्
भ्रातृव्याद्यभावाद्दोषोऽयमिति यत्नसम्बन्धिन्यश्वदाने इष्टिरित्येव सि
द्धम् । पानव्यापच्च तद्वदिति । सोमपाने क्रियमाणे व्यापद्वमनं
स्यात् तदा एतं सौमेन्द्रं श्यामाकचरुं निर्वपेदिति श्रूयते । तत्र
प्रतिपक्षे अधिकरणापिन्यायो बहुस्वमसुरहितस्तद्वदिति परा

सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इत्येवमादिष्वपि खादिवत् प्राणानामुत्पत्तिरिति द्रष्टव्यम् । अथवा पानव्यापच्च तद्वदित्येवमादिषु व्यवहितोपमानसम्बन्धस्याप्यायितत्वात् यथातीतानन्तरपादाद्युक्ता वियदादयः परस्य ब्रह्मणो विकाराः समधिगतास्तथा प्राणा अपि परस्य ब्रह्मणो विकारा इति योजयितव्यं । कः पुनः प्राणानां विकारत्वे हेतुः, श्रुतत्वमेव । ननु केषुचित् प्रदेशेषु न प्राणानामुत्पत्तिः श्रूयत इत्युक्तं, तदयुक्तं, प्रदेशान्तरेषु श्रवणात् । न हि क्वचिदश्रवणमन्यत्र श्रुतं निवारयितुमुत्सहते, तस्माच्छ्रुतत्वाविशेषादाकाशादिवत् प्राणा अपि उत्पद्यन्त इति सूक्तम् ॥

---

तद्वल्लौकिके धातुसाम्यार्थं पीतसोमस्य वमनेऽयं चरुः स्यात्तन्मननिमित्तेन्द्रियशोषाख्यदोषस्य दृष्टेन्द्रियेण वीर्येण बाध्यते, यः सोमं वमतीत्यनुवादादिति पूर्वपक्षसूत्रार्थः । वैदिके तु सोमपाने शेषप्रतिपत्तेर्जातत्वाद्वमनेऽपि न दोष इति प्राप्ते सिद्धान्तः । लोके वमनकृतेन्द्रियशोषस्य धातुसाम्यकरत्वेन गुणत्वाच्च दोषता, वेदे तु मा मे वाङ्नाभिमतिगा इति सम्यग्जरणार्थमन्त्रलिङ्गाद्वमने कर्मवैगुण्यात् तत्र दोषता । तस्माद्वैदिकसोमवमने सौमेन्द्रश्चरुरिति सिद्धमित्येवमादिषु सूत्रेष्वर्थः ॥

## गौण्यसम्भवात् ॥ २ ॥

यत्पुनरुक्तं प्रागुत्पत्तेः सद्भावश्रवणात् गौणी प्राणानामु-
त्पत्तिरिति तत्प्रत्याह ॥ गौण्यसम्भवादिति । गौण्या असम्भवः
गौण्यसम्भवः । नहि प्राणानामुत्पत्तिश्रुतिर्गौणी सम्भवति
प्रतिज्ञाहानिप्रसङ्गात् । 'कस्मिन्नु भगवो विज्ञाते सर्वमि-
विज्ञातं भवति' इति ह्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञा-
तत्साधनायेदमाम्नायते 'एतस्माज्जायते प्राणः' इत्यादि । इ-
च प्रतिज्ञा प्राणादेः समस्तस्य जगतः ब्रह्मविकारत्वे स-
प्रकृतिव्यतिरेकेण विकाराभावात् सिध्यति, गौणत्वे तु प्रा-
णानामुत्पत्तिश्रुतौ प्रतिज्ञेयं हीयेत । तथा च प्रतिज्ञातार्थमु-
संहरति 'पुरुष एवेदं विश्वं तपो ब्रह्म परामृतम्' इति, 'ब्र-
वेदं विश्वमिदं वरिष्ठम्' इति च । तथा 'आत्मनो वा अ-

---

नन्वु प्रतिज्ञाऽपि गौणी किं न स्यात् इत्यत आह । तथा च प्र-
तिज्ञातार्थमिति । उपक्रमोपसंहाराभ्यां प्रतिपिपादयिषिता हितीयत्वा-
मनुरोधेन प्राणोत्पत्तिर्मुख्यैवेति भावः । मुण्डकवत् श्रुत्यन्तरेऽपि प्र-
त्यादर्शनात् सा मुख्येत्याह । तत्रेति । एषा प्रतिज्ञा प्राणोत्पत्तिमुख्यत्वे
हेतुत्वेन द्रष्टव्येत्यर्थः । इदानीं प्रलये प्राणसत्त्वश्रुतेर्गतिं प्रदर्शयति
कथमित्यादिना । नेदं वाक्यं महाप्रलये परमकारणस्य ब्रह्मणः स-
त्त्वपरं किन्त्ववान्तरप्रलये हिरण्यगर्भाख्यावान्तरप्रकृतिरूपप्राणसद्भावपर-
मित्यर्थः । ननु हिरण्यगर्भरूपविकारस्य सत्त्वे कथं तदा विकाराभाव-
वचनं तत्राह । स्वविकारेति । स्वस्य कार्यं महाप्राणो यत् कार्यं स्थूलं
संघातैर्भिरित्यर्थः । ननु यथाश्रुति महाप्रलये प्राणसद्भावरूपं कि-
प्राणानुत्पत्तिसाधकं किमित्यवान्तरप्रलयपरतया नीयत इति चेत् स-

दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितं, इत्येवंजातीयकासु श्रुतिषु एषैव प्रतिज्ञा योजयितव्या। कथं पुनः प्रागुत्पत्तेः प्राणानां सद्भावश्रवणं नैतन्मूलप्रकृतिविषयं, 'अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः' इति मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वावधारणात्। अवान्तरप्रकृतिविषयन्त्वेतत् स्वविकारापेक्षं प्रागुत्पत्तेः प्राणानां सद्भावावधारणमिति द्रष्टव्यं, व्याकृतविषयाणामपि भूयसीनामवस्थानां श्रुतिस्मृत्योः प्रकृतिविकारभावप्रसिद्धेः। वियदधिकरणे हि गौण्यसम्भवादिति पूर्वपक्षसूत्रत्वात् गौणी जन्मश्रुतिरसम्भवादिति व्याख्यातं। प्रतिज्ञाहान्या च तत्र सिद्धान्तोऽभिहितः। इह तु सिद्धान्तसूत्रत्वात् गौण्या जन्मश्रुतेरसम्भवादिति व्याख्यातं। तदनुरोधेन लिङ्गेऽपि गौणी जन्मश्रुतिरसम्भवादिति व्याचक्षाणैः प्रतिज्ञाहानिरुपेक्षिता स्यात्॥

---

ज्जायते प्राण इत्यादि प्रपञ्चजन्मश्रुतिसद्भावादिति वदामः। ननु विकारस्य सतः कथं प्रकृतित्वमित्यत आह। व्याकृतेति। 'हिरण्यगर्भः समवर्तताग्रे' इत्यादिश्रुतौ 'आदिकर्ता स भूतानां' इत्यादि स्मृतौ च विकारात्मनामपि मूलकारणावस्थारूपाणां ब्रह्मविराडादीनां प्रकृतिविकारभावेन प्रसिद्धिरस्ति। पूर्वापेक्षया विकारस्याप्युत्तरत्वादप्रकृतित्वमित्यर्थः। केचिद्वियदधिकरणानुरोधेनेदं सूत्रं व्याचक्षते तान् दूषयति। वियदिति।

तस्य जायत इति पदस्याकाशादिषु मुख्यस्य पाठापेक्षया प्राचीनेषु प्राणेषु गतेर्मुख्यं जन्मेति सूत्रयोजना। तत्पूर्वकत्वादिति। तेनाकाशादिजन्मना सामान्यमेकवाक्योक्तत्वं तस्मादित्यर्थः। एकस्मिन् वाक्ये

## तत् प्राक् श्रुतेः ॥ ३ ॥

इतश्चाकाशादीनामिव प्राणानामपि मुख्यैव जन्मश्रुतिः यज्जायत इत्येकं जन्मवाचि पदं प्राणेषु प्राक् श्रुतं सदुत्तरेष्वाकाशादिष्वनुवर्तते, 'एतस्माज्जायते प्राणः' इत्यत्राकाशादिषु मुख्यं जन्मेति प्रतिष्ठापितं; तत् सामान्यात् प्राणेष्वपि मुख्यमेव जन्म भवितुमर्हति । न ह्येकस्मिन् प्रकरणे एकस्मिन् वाक्ये एकः शब्दः सकृदुच्चरितो बहुभिः सम्बध्यमानः क्वचिन्मुख्यः क्वचिद्गौण इत्यध्यवसातुं शक्यः वैरूप्यप्रसङ्गात् । तथा 'स प्राणमसृजत प्राणाच्छ्रद्धां' इत्यत्रापि प्राणेषु श्रुतः सृजतिः परेष्वपि उत्पत्तिमत्सु श्रद्धादिष्वनुषज्यते । यत्रापि पश्चाच्छ्रुत उत्पत्तिवचनः शब्दः पूर्वैः सम्बध्यते तत्राप्येष एव न्यायः, यथा सर्वाणि भूतानि व्युच्चरन्तीत्यन्ते पठितो व्युच्चरन्तिशब्दः पूर्वैरपि प्राणादिभिः सम्बध्यते ॥ ३ ॥

## तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

यद्यपि 'तत्तेजोऽसृजत' इत्येतस्मिन् प्रकरणे प्राणानामुत्पत्तिर्न पठ्यते तेजोऽबन्नानामेव त्रयाणां भूतानामुत्पत्तिश्रवणात्, तथापि ब्रह्मप्रकृतिकतेजोऽबन्नपूर्वकत्वा...

एकस्य शब्दस्य क्वचिन्मुख्यत्वं क्वचित् गौणत्वमिति वैरूप्यं न युक्तं न्यायमन्यत्राप्यतिदिशति । यत्रापि पश्चाच्छ्रुत इति ॥ ३ ॥

अश्रोक्तं छान्दोग्येऽपि प्राणानामुत्पत्तिर्भूयत इति । तत्र तत्पूर्वकत्वाद्वाच इति । अत्र सूत्रे वाक्पदं प्राणमनसोरप्युपलक्षणम् वाक्प्राणमनसां तेजोऽबन्नपूर्वकत्वोक्तेरन्नमयमित्युक्तमिति योजना ।

संनाधावत्प्राणमनसां तत्सामान्याच्च सर्वेषामेव प्राणानां ब्रह्मप्रभवत्वं सिद्धं भवति। तथा अस्मिन्नेव प्रकरणे तेजोऽबन्नपूर्वकत्वं वाक्प्राणमनसामाम्नायते 'अन्नमयं हि सोम्य मनः आपोमयः प्राणः तेजोमयी वाक्' इति। तत्र यदि तावन्मुख्यमेवैषामन्नादिमयत्वं ततो वर्तत एव ब्रह्मप्रभवत्वं अथ भाक्तं तथापि ब्रह्मकर्तृकायां नामरूपव्याक्रियायां श्रवणात् 'येनाश्रुतं श्रुतं भवति' इति चोपक्रमात् 'ऐतदात्म्यमिदं सर्वं' इति चोपसंहारात् श्रुत्यन्तरप्रसिद्धेश्च ब्रह्मकार्यत्वप्रपञ्चनार्थमेव मनआदीनामन्नादिमयत्ववचनमिति गम्यते। तस्मादपि प्राणानां ब्रह्मविकारत्वसिद्धिः॥

## सप्तगतेर्विशेषितत्वाच्च॥ ५॥

उत्पत्तिविषयः श्रुतिविप्रतिषेधः प्राणानां परिहृतः, सङ्ख्याविषय इदानीं परिह्रियते। तत्र मुख्यं प्राणमुपरिष्टा-

---

गादिभिश्चक्षुरादीनां सामान्यं करणत्वं तत्सामान्यादित्यर्थः। अत्र मयड्विकारे मुख्य इति पक्षे वर्तत एव प्राणानां ब्रह्मकार्यत्वं तेजोऽबन्नानां ब्रह्मविकारत्वात्। यदि प्राणस्य वायोरब्विकारत्वायोगात् तदधीनस्थितिकत्वमात्रेण भाक्तस्तथापि प्राणानां विकारत्वे भूताधीनस्थितिकत्वं लिङ्गं मयटोक्तमिति सिद्धं ब्रह्मकार्यत्वं 'स प्राणमसृजत' इत्यादिश्रुत्यन्तरे स्पष्टं ब्रह्मकार्यत्वोक्तेः। तस्मात् प्राणानामुत्पत्तिश्रुतीनां सद्भावश्रुत्यविरोधात् कारणे ब्रह्मणि समन्वय इति सिद्धम्। लिङ्गशरीरविचारात्मकाधिकरणानां लिङ्गात् त्वंपदार्थभेदधीः फलमिति द्रष्टव्यम्॥

एवं जन्मलब्धसत्ताकानां प्राणानामुपजीव्योपजीवकत्वसङ्गत्या सङ्ख्यां निर्णेतुं श्रुतीनां विरोधात् संशये पूर्वपक्षयति। सप्तगतेर्विशेषितत्वाच्च। विशयः संशयः। इन्द्रियाण्यत्र विषयः। पञ्च धीन्द्रियाणि वाङ्मनश्चेति

इत्यति। सम्प्रति तु क्लीतरे प्राणा इति सम्प्रधार्य श्रुतिविप्रतिपत्तेश्चात्र विषयः। क्वचित् सप्त प्राणाः सङ्की "सप्त प्राणाः प्रभवन्ति तस्मात्" इति। क्वचिदष्टौ प्राण त्वेन गुणेन सङ्कीर्त्यन्ते, "अष्टौ ग्रहा अष्टावतिग्रहाः" इ क्वचिन्नव "सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ" इति। क्व चिद्दश "नव वै पुरुषे प्राणा नाभिर्दशमी" इति। क्वचि कादश "दशमे पुरुषे प्राणा आत्मैकादश" इति। क्वचि दश "सर्वेषां स्पर्शानां त्वगेकायतनम् इत्यत्र। क्वचित् दश "चक्षुश्च द्रष्टव्यञ्च" इत्यत्र। एवं हि विप्रतिप प्राणेयत्तां प्रति श्रुतयः, किं तावत् प्राप्तं सप्तैव प्रा इति। कुतः गतेः, यतस्तावन्तोऽवगम्यन्ते "सप्त प्रा प्रभवन्ति तस्मात्" इत्येवंविधासु श्रुतिषु। विशेषिता "सप्त वै शीर्षण्याः प्राणाः" इत्यत्र। ननु "गुहाशया हिताः सप्त सप्त" इति वीप्सा श्रूयते, सा सप्तभ्योऽति

सप्त प्राणास्त एव वृत्तेन सहाष्टौ। ग्रहत्वं बन्धकत्वं ग्रहाणि न्तीति ग्रहा इन्द्रियाणि तेषां बन्धकत्वं विषयाधीनमित्यतिग्रहाः द तिक्रान्ता विषया इत्यर्थः। द्वे श्रोत्रे द्वे चक्षुषी द्वे घ्राणे वाक् सप्त शीर्षणि भवाः प्राणा द्वाववाञ्चौ पायूपस्थौ चेति नव, ज्ञानकर्मे दशेमे पुरुषे देहे प्राणाः आत्मा मन एकादशप्राण इति विज्ञान का एत एव हृदयाख्यया बुद्धा सह द्वादश। अच्छद्वारेण सप्त ह्वनितः सप्तत्वाश्रयतेयैं शीर्षण्याः सप्त ते प्राणा इति शीर्षण्यं प्राणत्वविशेषणाच्च शीर्षण्यानां प्राणत्वशङ्का, इन्द्रियत्वमविशे सप्तैव प्राणा इति सम्बन्धयोजना। सप्तत्वं वीप्साविरुद्धमिति शङ्कते ति। गुहायां हृदये शेरत इति गुहाशयाः। स्वस्थानेषु

कान् प्राणान् गमयतीति । नैष दोषः, पुरुषभेदाभिप्रायेयं वीप्सा प्रतिपुरुषं सप्त सप्त प्राणा इति, न तत्त्वभेदाभिप्राया सप्त सप्तान्येऽन्ये प्राणा इति । नन्वष्टत्वादिकापि सङ्ख्या प्राणेषूदाहृता कथं सप्तैव स्युः । सत्यमुदाहृता विरोधात्त्वन्यतमा सङ्ख्याध्यवसातव्या, तत्र स्तोककल्पनानुरोधात् सप्तसङ्ख्याध्यवसानं वृत्तिभेदापेक्षञ्च सङ्ख्यान्तरश्रवणमिति मन्यते । अत्रोच्यते ॥

## हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥

हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः श्रूयन्ते, "हस्तो वै ग्रहः स कर्मणातिग्रहेण गृहीतः, हस्ताभ्यां हि कर्म करोति" इत्येवमाद्यासु श्रुतिषु । स्थिते च सप्तत्वमन्तर्भावाच्छक्यते सम्भावयितुम् । हीनाधिकसङ्ख्याविप्रतिपत्तौ ह्यधिका सङ्ख्या संग्राह्या भवति, तस्यां हीनान्तर्भवति, न तु हीनायामधिका. अतश्च नैवं मन्तव्यं स्तोक-

---

निक्षिप्ता इत्यर्थः । चित्तेन चतुर्दशत्वं मन्तव्यम् । पूर्वपक्षं परिहरति । नैष दोष इति । सिद्धान्तिनामैक्यादन्तःकरणस्य मनोबुद्ध्यभेदान्निश्चयात्मिका बुद्धिः गर्वात्मकोऽहङ्कारः, स्मरणात्मकं चित्तं इति द्वादशादिसङ्ख्यान्तर्भावनीया । ततो वरं प्राणाधिक्यकल्पनेऽन्तर्भावः लाघवादिति प्राप्ते सिद्धान्तयति । हस्तादय इति ॥

आदानेन कर्मणा गृहीतः बद्धः । ग्रहश्चेत्यर्थः । हस्ताभ्यामिति । यतोऽधिकसङ्ख्यायाः न्यूनायामन्तर्भावायोगात् सप्तैव प्राणाः स्युः आगमानुरोधादित्येवं न मन्तव्यमित्यन्वयः । सर्वेषां कर्मेन्द्रियाणामिहाग्रहणा-दाधाराः । हस्तादिति । श्रुतीनां मिथो विरोधे सति आगमान्तरानुसारेण निर्णेतव्यमिति न्यायेन कार्यलिङ्गानुमानानुसारेणैकादशत्वमुक्तम्-

कल्पनानुरोधात् सप्तैव प्राणाः स्युरिति। उत्तरसङ्ख्या
रोधात्त्वेकादशैव ते प्राणाः स्युः। तथा चोदाहृता श्रुतिः
"दशेमे पुरुषे प्राणा आत्मैकादश" इति। आत्मशब्देन चान्तः
करणं परिगृह्यते करणाधिकारात्। ननु एकादशत्वादन्ये
द्वादशत्रयोदशत्वे उदाहृते। सत्यमुदाहृते न त्वेका
दशभ्यः कार्य्यजातेभ्योऽधिकं कार्य्यजातमस्ति यदर्थं
करणं कल्प्येत। शब्दस्पर्शरूपरसगन्धविषयाः पञ्च बुद्धिभे
दास्तदर्थानि पञ्च बुद्धीन्द्रियाणि वचनादानविहरणोत्सर्गा
नन्दाः पञ्च कर्मभेदास्तदर्थानि च पञ्च कर्मेन्द्रियाणि
सर्व्वार्थविषयं त्रैकाल्यवृत्ति मन एकमनेकवृत्तिकं तदेव
वृत्तिभेदात् क्वचिद्भिन्नवद्व्यपदिश्यते "मनो बुद्धिरहङ्कार
श्चित्तञ्च" इति। तथाच श्रुतिः कामाद्या नानाविधा
वृत्तीरनुक्रम्याह "एतत् सर्वं मन एव" इति। अपि च
सप्तैव शीर्षण्यान् प्राणानभिमन्यमानस्य चत्वार एव प्राणा
अभिमताः स्युः स्थानभेदाद्ध्येते चत्वारः सन्तः सप्त गण्यन्ते
"द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके एका वाक्" इति।
तावतामेव वृत्तिभेदा इतरे प्राणा इति शक्यते वक्तुं
हस्तादिवृत्तीनामत्यन्तविजातीयत्वात्। तथा "नव वै

रेतोन्याः श्रुतयो नेया इत्यभिसन्धायाह। सत्यमिति। एकादशकार्य
त्वात्त्व। सर्वेति। त्रयः कालास्त्रैकाल्यं, तद्विषया वृत्तिर्यस्य
त्रैकाल्यवृत्ति। इन्द्रियान्तराणां वर्त्तमानमात्रग्राहित्वादतीतादि
मनोऽर्थकार्य्य मित्यर्थः। विशेषितत्वादित्युक्तं निरस्यति। अपि च
... तावतामिति। आदानादीनां श्रोत्रादिभ्योऽत्यन्तवैजात्यादित्य

न्ये प्राणा नाभिर्दशमी" इत्यत्रापि देहच्छिद्रभेदाभिप्रायेणैव दश प्राणा उच्यन्ते, न प्राणतत्त्वभेदाभिप्रायेण 'नाभिर्दशमी' इति वचनात्। न हि नाभिर्नाम कश्चित् प्राणः प्रसिद्धोऽस्ति, मुख्यस्य तु प्राणस्य भवति नाभिरपि एकं विशेषायतनमित्यतो नाभिर्दशमीत्युच्यते। क्वचिदुपासनार्थं कतिचित् प्राणा गण्यन्ते, क्वचित् प्रदर्शनार्थम्। तदेवं विचित्रे प्राणेयत्ताम्नाने सति क्व किं परमाम्नानमिति विवेक्तव्यम्। कार्य्यजातवशात्त्वेकादशत्वाम्नानं प्राणविषयं प्रमाणमिति स्थितम्। इयमपरा सूत्रद्वययोजना। सप्तैव प्राणाः स्युः यतः सप्तानामेव गतिः श्रूयते "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इत्यत्र। ननु सर्वशब्दोऽप्यत्र पठ्यते कथं सप्तानामेव गतिः प्रतिज्ञायत इति, विशेषितत्वादित्याह। सप्तैव हि प्राणाश्चक्षुरादयः त्वक्पर्य्यन्ता विशेषिताः इह प्रकृताः, स यत्रैष चाक्षुषः पुरुषः पराङ् पर्य्यावर्त्तते अथारूपज्ञो भवति एकीभवति न पश्यतीत्याहुरि-

---

पं तद्धृतित्वे बधिरादीनामादानादि न स्यादिति भावः। कथं तर्हि छिद्रे प्राणशब्दः इत्याशङ्क्य लक्षणयेत्याह। [illegible] इति। सप्त प्राणाः प्रभवन्तीत्युपासनार्थम्। अष्टौ ग्रहा इति [illegible] प्रदर्शनार्थम्। पायूपस्थपादानामपि [illegible] विशेषादिति विवेक्तव्यम्। ननु [illegible] [illegible] [illegible] [illegible] विशे- [illegible] [illegible] ॥ [illegible] इन्द्रियाणि सन्तीति सन्देहे [illegible] योजयति। [illegible]

त्वं सप्तमादिनानुक्रमणेन। प्रकृतगामी च सर्वशब्दो भवति।
यथा सर्वे ब्राह्मणा भोजिताः इति ये निमन्त्रिताः प्रकृ-
ब्राह्मणास्त एव सर्वशब्देनोच्यन्ते नान्ये, एवमिहापि ये
प्रकृताः सप्त प्राणास्त एव सर्वशब्देनोच्यन्ते नान्य इति।
नन्वत्र विज्ञानमष्टममनुक्रान्तं कथं सप्तानामेवानुक्रम-
णेप दोषः। मनोविज्ञानयोस्तत्त्वाभेदाद्वृत्तिभेदेऽपि स-
त्त्वोपपत्तेः। तस्मात् सप्तैव प्राणा इत्येवं प्राप्ते ब्रू-
हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः प्रतीयन्ते "हस्तो
वै ग्रहः" इत्यादिश्रुतिषु। ग्रहत्वञ्च बन्धनभावो ग्रहाः
बध्यते क्षेत्रज्ञोऽनेन ग्रहसंज्ञकेन बन्धनेनेति। स च बन्धो
नैकस्मिन्नेव शरीरे बध्यते शरीरान्तरेष्वपि तुल्यत्वाद्ब-
न्धस्य। तस्माच्छरीरान्तरसञ्चारीदं ग्रहसंज्ञकं बन्धनमि-
त्यर्थादुक्तं भवति। तथा च स्मृतिः "पुर्यष्टकेन लिङ्गेन
प्राणाद्येन स युज्यते। तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य
तेन च" इति। प्राङ्मोक्षाद्ग्रहसंज्ञकेनानेन बन्धनेनावि-
योगं दर्शयति। आथर्वणे च विषयेन्द्रियानुक्रमणे "चक्षुश्च

---

तं जीवात्मानं ये प्राणाः सह गच्छन्ति तेषामेव भोगहेतुत्वादिन्द्रियत्व-
मित्यर्थः। विपन्नावस्थायां एव चाक्षुषः पुरुषोऽपि स्थितोऽनुभावकश्चक्षुषो-
ऽनुग्रहकः पराङ् पर्य्यावर्त्तते बहिर्देशात् स्वांशिनं सूर्यं प्रतिगच्छति। ए-
तदानीमयं मुमूर्षुररूपज्ञो भवति देहाद्देहं प्रविष्टे लिङ्गात्मन्यनु-
मनसंज्ञो भवति तदायं न पश्यतीति पार्श्वस्था आहुरित्यर्थः। आदि-
जिघ्रति न वदति न रसयते न शृणोति न मनुते न स्पृशति न विजा-
नातीति उच्यते। सप्तानामेव जीवेन सह गतिरित्यविदन् परस्य
हस्तादीनामपि गतिप्रतीतेरिति विभावयति। तद्विभजादिना। ए-

द्रष्टव्यञ्च" इत्यत्र तुल्यवद्धस्तादीनीन्द्रियाणि सविषयाण्यनुक्रामति "हस्तौ चादातव्यञ्च उपस्थश्चानन्दयितव्यञ्च पायुश्च विसर्जयितव्यञ्च पादौ च गन्तव्यञ्च" इति । तथा "दशेमे पुरुषे प्राणा आत्मैकादशः ते यदास्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति" इत्येकादशानां प्राणानामुत्क्रान्तिं दर्शयति । सर्वशब्दोऽपि च प्राणशब्देन सम्बध्यमानोऽशेषान् प्राणानभिदधानो न प्रकरणवशेन सप्तस्वेव व्यवस्थापयितुं शक्यते, प्रकरणाच्छब्दस्य च बलीयस्त्वात् । सर्वे ब्राह्मणा भोजिता इत्यत्रापि सर्वेषामेव अवनिवर्त्तिनां ब्राह्मणानां ग्रहणं न्याय्यं सर्वशब्दसामर्थ्यात् । सर्वभोजनासम्भवात्तु तत्र निमन्त्रितमात्रविषया सर्वशब्दस्य वृत्तिराश्रिता, इह तु न किञ्चित् सर्वशब्दार्थसङ्कोचकारणमस्ति, तस्मात् सर्वशब्देनात्राशेषाणां प्राणानां परिग्रहप्रदर्शनार्थं सप्तानामनुक्रमणमित्यनवद्यम् तस्मादेकादशैव प्राणाः शब्दतः कार्य्यतश्चेति सिद्धम् ॥

अणवश्च ॥ ७ ॥

अधुना प्राणानामेव स्वभावान्तरमभ्युच्चिनोति । अणव-

---

दित्वस्याभावात् सङ्गतौ स्मृतिसाम्याच्च । पुर्य्यष्टकेनेति । प्राणादिपञ्चकं भूतसूक्ष्मपञ्चकं ज्ञानेन्द्रियपञ्चकं कर्म्मेन्द्रियपञ्चकं अन्तःकरणचतुष्टयमविद्या कामकर्म्म चेति पुर्य्यष्टकमात्मनो ज्ञापकत्वाल्लिङ्गं भवति सप्तत्वे सर्वश्रुतिसङ्कोचो न युक्त इत्याह । सर्वशब्दोऽपीति । तस्मात् सकलश्रुतीनामविरोधादेकादशेन्द्रियकार्य्ये ब्रह्मणि समन्वय इति सिद्धम् ॥

अणवश्च । 'प्राणाः सर्वे तुल्या इति श्रुतेः' इन्द्रियाणां विभुत्वम्

श्चैते प्रकृताः प्राणाः प्रतिपत्तव्याः । अणुत्वञ्चैषां सौक्ष्म्यपरिच्छेदौ न परमाणुतुल्यत्वं, कृत्स्नदेहव्यापिकार्योत्पत्तिप्रसङ्गात् । सूक्ष्मा एते प्राणाः स्थूलाश्चेत् स्युः मरणकाले शरीरान्निर्गच्छन्तो बिलादहिरिवोपलभ्येरन् म्रियमाणस्य पार्श्वस्थैः । परिच्छिन्नाश्चैते प्राणाः सर्वगताश्चेत् स्युः उत्क्रान्तिगत्यागतिश्रुतिव्याकोपः स्यात्, तद्गुणसारत्वञ्च जीवस्य न सिध्येत् । सर्वगतानामपि वृत्तिलाभः शरीरदेशे स्यादिति चेत्, न, वृत्तिमात्रस्य करणत्वोपपत्तेः । यदेव तूपलब्धिसाधनं वृत्तिः अन्यद्वा तस्यैव नः करणत्वं, तेन संज्ञामात्रे विवाद इति करणानां व्यापित्वकल्पना निरर्थिका, तस्मात् सूक्ष्माः परिच्छिन्नाश्चैते प्राणा इत्यध्यवस्यामः ॥

## श्रेष्ठश्च ॥ ८ ॥

मुख्यश्च प्राणः इतरप्राणवद्ब्रह्मविकार इत्यतिदि-

तेषामुत्क्रान्तिरस्थिरा किन्तु तत्तद्देहे तेषामभिव्यक्तिरूपाः प्रादुर्भूतवृत्तयः सन्ति न तासामुत्क्रान्त्यादिरिति साङ्ख्यानामाक्षेपस्तत्सङ्ख्या … किं परिमाणा इति सन्देहे सिद्धान्तयति । अणुवश्चेत्यादिना । उत्पत्तिसङ्ख्यानिर्णयानन्तरं परिमाणं निरूप्यत इत्यर्थः । अणुत्वं तत्सूक्ष्मत्वं, परिच्छेदोऽल्पत्वं, चक्षुरादीनां विभुत्वे तद्गुणाभिव्यक्तिस्थानादिकं न विद्येदित्युत्क्रान्त्यादिविरोधमाह । तद्गुणसारत्वमिति । … पमकृत्य निरस्यति । सर्वगतानामिति । प्राणनत्यश्रुतेरुपपादनार्थमानन्त्यादिश्रुतीनां तथा विरोध इति सिद्धम् ॥

श्रेष्ठश्च । अतिदेशत्वाच्च सङ्गत्याद्यपेक्षा तथा प्राणा इत्युक्ता…

नन्वविशेषेणैव सर्वप्राणानां ब्रह्मविकारत्वमाख्यातं, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति, सेन्द्रियमनोव्यतिरेकेणापि प्राणस्योत्पत्तिश्रवणात्, 'स प्राणमसृजत' इत्यादिश्रवणेभ्यश्च । किमर्थः पुनरतिदेशः, अधिकाशङ्कावारणार्थः । नासदासीये हि ब्रह्मप्रधाने सूक्ते मन्त्रवर्णो भवति, 'न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परं किञ्च नास' इति । आनीदिति प्राणकर्मोपादानात् प्रागुत्पत्तेः सन्तमिव प्राणं सूचयति । तस्मात् अजः प्राण इति जायते कस्यचिन्मतिः, तामतिदेशेनापनुदति । आनीच्छब्दोऽपि न प्रागुत्पत्तेः प्राणसद्भावं सूचयति । अवातमिति विशेषणात्, "अप्राणो ह्यमनाः शुभ्रः" इति च मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वस्य दर्शितत्वात् । तस्मात् कारणसद्भावप्रदर्शनार्थ एवायमानीच्छब्द इति । श्रेष्ठ इति च मुख्यं प्राणमभिदधाति, "प्राणो वाव ज्येष्ठः श्रेष्ठश्च"

त्यादिश्रुतेः । ननु प्राणो जायते न वेति संशयाभावादतिदेशो न युक्त इत्याशङ्कते । किमर्थ इति । निश्चितमप्राक्प्रलये प्राणसद्भावश्रुत्याऽधिकाशङ्कामाह । नासदासीये चेति । नासदासीदित्यारभ्याधीत इत्यर्थः । तर्हि तदा प्रलयकाले मृत्युर्मारको मृत्युमत्कार्यं वा नासीदमृतञ्च देवभोग्यं नासीत् रात्र्याः प्रकेतश्चिह्नं चन्द्रः अह्नः प्रकेतः सूर्यश्च नासीत्, स्वधया सहेत्यन्वयः, पितृभ्यो देयमन्नं स्वधा । यद्वा स्वेन धृता माया स्वधा तया सह ब्रह्मानीदासीदिति परमार्थः । अवातानीदिति तच्चेष्टां सत्त्ववदिति पूर्वपक्षार्थः । तस्माद् ब्रह्मणः परः परस्तात् अन्यच्च किमपि न बभूवेत्यर्थः । परिहारः सुबोधः । ननु श्रेष्ठशब्दस्य प्राणे प्रसिद्धत्वात्

इति श्रुतिनिर्देशात्। श्रेष्ठश्च प्राणः, शुक्रनिषेककालात् प्रभृति तस्य वृत्तिलाभात्, न चेत् तस्य तदानीं वृत्तिलाभः स्यात् योनौ निषिक्तं शुक्रं पूयेत न सम्भवेद्वा, श्रोत्रादीनां तु कर्णशष्कुल्यादिस्थानविभागनिष्पत्तौ वृत्तिलाभात् श्रेष्ठत्वम्। श्रेष्ठश्च प्राणः गुणाधिक्यात्, "न वै शक्ष्यामस्त्वदृते जीवितुम्" इति श्रुतेश्च ॥

## न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

स पुनर्मुख्यः प्राणः किंस्वरूप इतीदानीं जिज्ञास्यते। तत्र प्राप्तं तावत् श्रुतेर्वायुः प्राण इति, एवं हि श्रूयते 'यः प्राणः स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानः' इति। अथवा तन्त्रान्तरीयाभिप्रायात् समस्तकरणवृत्तिः प्राण इति प्राप्तं, एवं हि तन्त्रान्तरीया आचक्षते। 'सामान्या करणवृत्तिः प्राणाद्या वायवः पञ्च' इति

---

कथं श्रेष्ठत्वमिति तत्राह। श्रेष्ठ इति चेति। श्रुतिं व्याचष्टे। प्राण इत्यादिना। पूयेत पूयं भवेत्। न सम्भवेद्गर्भो न भवेदित्यर्थः। वागादिजीवनहेतुत्वं प्राणस्य गुणः। एवमानीषु तद्विरोधात् प्राणे श्रुतीनां ब्रह्मणि समन्वय इति सिद्धम् ॥

इन्द्रियाणि विचार्य तद्व्यापारात् प्राणं पृथक् कर्तुं तत्स्वरूपं प्रत्यक्षप्राणस्वरूपं पृथक् करोति। न वायुक्रिये पृथगुपदेशात्। मुख्यः प्राणः किं वायुमात्रं उत करणानां साधारणव्यापारः किं वा तत्त्वान्तरमिति वायुप्राणयोर्भेदाभेदश्रुतीनां मिथो विरोधात् संशये पूर्वपक्षमाह। तत्रेति। द्वितीयं सांख्यपूर्वपक्षमाह। अथवेति। तन्त्रान्तरीयमतेन सूत्रमादत्ते। यथोक्तम् इति। मनोवृत्तिपञ्चकरूपो वायुप्र

उच्यते। न वायुः प्राणः नापि करणव्यापारः। कुतः पृथगुपदेशात्। वायोस्तावत् प्राणस्य पृथगुपदेशो भवति, 'प्राण एव ब्रह्मणश्चतुर्थः पादः, स वायुना ज्योतिषा भाति च तपति च' इति। न हि वायुरेव सन् वायोः पृथगुपदिश्यते तथा करणवृत्तेरपि पृथगुपदेशो भवति, वागादीनि करणान्यनुक्रम्य तत्र तत्र पृथक् प्राणस्यानुक्रमणात् वृत्तिवृत्तिमतोश्चाभेदात्। नहि करणव्यापार एव सन् करणेभ्यः पृथगुपदिश्येत। तथा 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुः' इत्येवमादयोऽपि वायोः करणेभ्यश्च प्राणस्य पृथगुपदेशा अनुसर्त्तव्याः। न च समस्तानां करणानामेका वृत्तिः सम्भवति' प्रत्येकमेकैकवृत्तित्वात्, समुदायस्य चाकारकत्वात्। ननु पञ्जरचालनन्यायेन एतद्भविष्यति यथैकपञ्जरवर्त्तिनः एकादश पक्षिणः प्रत्येकं प्रतिनियतव्यापाराः सन्तः सम्भूयैकं पञ्जरं चालयन्ति एवमेकशरीरवर्त्तिनः एकादश प्राणाः प्रत्येकं नियतवृत्तयः सन्तः सम्भूयैकां प्राणाख्यां वृत्तिं प्रतिलप्स्यन्त इति। नेत्युच्यते युक्तम् तत्र प्रत्येकवर्त्तिभिरवान्तरव्यापारैः पञ्जरचालना-

श्रोत्रे चतुष्पात्त्वं श्रुतायुक्तं, तत्र प्राणो वायुनाधिदैविकेन भात्यभिव्यज्यते अभिव्यक्तः संतपति कार्यक्षमो भवतीत्यर्थः। श्रुतिषु तत्र तत्र प्राणस्य वागादीनाञ्च मिथः संवादलिङ्गेन पृथगुत्पत्तिलिङ्गेन चेन्द्रियतदभिन्नव्यापारेभ्योऽपि भिन्नत्वमित्याह। नहीति। प्राणस्येन्द्रियवृत्तित्वं श्रुत्या निरस्य युक्त्यापि निरस्यति। न च समस्तानामिति। या चक्षुःसाध्या वृत्तिः सैव न श्रोत्रादिसाध्या करणानां प्रत्येकमेकैकरूपादिविषयत्वेन नियतत्वात्।

नुरूपैरेवोपेताः पक्षिणः सम्भूयैकं पञ्जरं चालयेयुः तथा दृष्टत्वात् । इह तु श्रवणाद्यवान्तरव्यापारोपेताः न सम्भूय प्राणयुरिति युक्तं, प्रमाणाभावात् अत्यन्तविजातीयत्वाच्च श्रवणादिभ्यः प्राणनस्य । तथा प्राणस्य श्रेष्ठत्वोद्घोषणं गुणभावोपगमश्च तं प्रति वागादीनां न करणवृत्तित्वे प्राणेऽवकल्पते, तस्मादन्यो वायुक्रियाभ्यां प्राणः ॥ कथं तर्हीयं श्रुतिः, 'यः प्राणः स वायुः' इति, उच्यते । वायुरेवायमध्यात्ममापन्नः पञ्चव्यूहो विशेषात्मनावतिष्ठमानः प्राणो नाम भण्यते न तत्त्वान्तरं नापि वायुमात्रं, अतश्च उभे अपि भेदाभेदश्रुती नविरुध्येते । स्यादेतत्, प्राणोऽपि जीववदस्मिन् शरीरे स्वातन्त्र्यं प्राप्नोति, श्रेष्ठत्वात् गुणभावोपगमाच्च तं प्रति वागादीनामिन्द्रियाणाम् । तथा अनेकविधा विभूतिः प्राणस्य श्राव्यते । 'सुप्तेषु वागादिषु प्राण एवैको जागर्त्ति प्राण एवैको मृत्युनाऽनाप्तः प्राणः संवर्गो वागादीन् संवृङ्क्ते प्राण इतरान् प्राणान् रक्षति मातेव पुत्रान्' इति । तस्मात् प्राणस्यापि जीववत् स्वातन्त्र्यप्रसङ्गः, तं परिहरति ॥

---

न च समुदायस्य वृत्तिः सम्भवति तस्यासत्त्वादित्यर्थः । प्रमाणाभावं श्रोत्रादीनामेकप्राणनाख्यवृत्त्यनुकूलपरिस्पन्देषु मानाभावात् ... नामपरिस्पन्दत्वेन विजातीयत्वात् परिस्पन्दरूपप्राणनानुकूलत्वं ... व्यापाराभावाच्च समस्तकरणवृत्तिः प्राण इत्यर्थः । किञ्च प्राणस्य ... वागादीनामेव प्राधान्यं वाच्यं नेतदस्तीत्याह । तथा प्राणस्येति ... इदो वटो न तत्त्वान्तरं नापि रूपमात्रं तद्विकारत्वात् तथा वायोः ...

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥

तुशब्दः प्राणस्य स्वातन्त्र्यं व्यावर्त्तयति। यथा चक्षुरादीनि राजप्रकृतिवत् जीवस्य कर्तृत्वं भोक्तृत्वं च प्रत्युपकरणानि न स्वतन्त्राणि तथा मुख्योऽपि प्राणो राजमन्त्रिवत् जीवस्य सर्वार्थत्वेन उपकरणभूतो न स्वतन्त्रः। कुतः तत्सहशिष्ट्यादिभ्यः तैश्चक्षुरादिभिः सहैव प्राणः शिष्यते, प्राणसंवादादिषु समानधर्माणाञ्च सहशासनं युक्तं बृहद्रथन्तरादिवत्। आदिशब्देन संहतत्वाचेतनत्वादीन् प्राणस्य स्वातन्त्र्यनिराकरणहेतून् दर्शयति। स्यादेतत् यदि चक्षुरादिवत् प्राणस्य जीवं प्रति करणभावोऽभ्युपगम्येत विषयान्तरं रूपादिवत् प्रसज्येत रूपालोचनाद्याभिर्वृत्तिभिर्यथा चक्षुरादीनां स्वं जीवं प्रति करणभावो भवति। अपि चैकादशैव कार्यजातानि रूपालोचनादीनि परिगणितानि

---

प्राण इत्यभेदश्रुतेर्गतिमाह। उच्यत इति। देहे प्राणः पञ्चावस्थो विकारात्मना स्थितो वायुरेव प्राण इत्यर्थः। प्राणस्य करणशक्तित्वाभावे जीववत् भोक्तृत्वं स्यादिति शङ्कते। स्यादेतदिति॥

प्राणो न भोक्ता भोगोपकरणत्वात् चक्षुरादिवदिति सूत्रार्थमाह। तुशब्द इत्यादिना। यथा बृहद्रथन्तरयोः सर्वत्र सहप्रयुज्यमानत्वेन सामत्वेन वा साम्यात् सहपाठस्तथा करणैः सहोपकरणत्वेन साम्यात् प्राणस्य पाठ इति न हेत्वसिद्धिरित्यर्थः। किञ्च प्राणो न भोक्ता सावयवत्वाज्जडत्वाद्भौतिकत्वाच्च देहवत्। ननु यद्भोगोपकरणं तत् सविषयं दृष्टं यथा चक्षुरादिकं, प्राणस्य तु निर्विषयत्वादसाधारणकार्याभावाच्च नोपकरणत्वमिति शङ्कते। स्यादेतदिति॥

यदर्थमेकादश प्राणाः संगृहीताः न तु द्वादशमपरं ... ज्ञातमवगम्यते यदर्थमयं द्वादशः प्राणः प्रतिज्ञायते ... अत उत्तरं पठति॥

अकरणत्वाच्च न दोषस्तथा हि दर्शयति॥ ...

न तावद्विषयान्तरप्रसङ्गो दोषः अकरणत्वात् प्राण... नहि चक्षुरादिवत् प्राणस्य विषयपरिच्छेदेन करणत्व... मगम्यते। न चास्यैतावता कार्याभाव एव। कस्मात्... हि श्रुतिः प्राणान्तरेष्वसम्भाव्यमानं मुख्यप्राणस्य वैशे... कार्यं दर्शयति। प्राणसंवादादिषु "अथ ह प्राणा अहं... से व्यूदिरे" इत्युपक्रम्य 'यस्मिन् व उत्क्रान्त इदं श... पापिष्ठतरमिव दृश्यते स वः श्रेष्ठः' इति चोपन्यस्य प्र... वागाद्युत्क्रमणेन तद्वृत्तिमात्रहीनं यथापूर्वं जीवनं... प्राणस्य वैशेषिकं कार्यं दर्शयित्वा प्राणोच्चिक्रमिषायां... दिशैथिल्यापत्तिं शरीरपातप्रसङ्गञ्च दर्शयन्ती श्रुतिः... निमित्तां शरीरेन्द्रियस्थितिं दर्शयति 'तान् वरिष्ठः प्रा... उवाच मा मोहमापद्यथाहमेवैतत् पञ्चधात्मानं प्रविभ... हाणमवष्टभ्य विधारयामि' इति च। एतमेवार्थं श्रुति...

उक्ताव्याप्तेः शरीरे व्यभिचाराद्देहेन्द्रियधारणोत्क्रान्त्याद्य... कार्यसत्त्वाच्च निर्विषयस्यापि प्राणस्य शरीरवञ्चोगोपकरणत्व... चक्षुरादिवत् ज्ञानकर्मकरणत्वमस्ति येन सविषयत्वं स्यादिति परिह... न तावदित्यादिना। अहंश्रेयसे स्वस्य श्रेष्ठतानिमित्तं, व्यूदिरे ... चक्रिरे। तद्वृत्तिमात्रहीनमिति मूकादिभावेन स्थितमित्यर्थः।... शीघ्रं, कुवाय देशास्वं अश्वं, प्राणेन रक्षन्नवरं कुलायं ...

"प्राणेन रक्षन्नवरं कुलायम्" इति च सुप्तेषु चक्षुरादिषु प्राणनिमित्तां शरीररक्षां दर्शयति । 'यस्मात् कस्माच्चाङ्गात् प्राण उत्क्रामति तदेव तच्छुष्यति तेन यदश्नाति यत् पिबति तेनेतरान् प्राणानवति' इति च प्राणनिमित्तां शरीरेन्द्रियपुष्टिं दर्शयति । 'कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठितेऽहं प्रतिष्ठास्यामीति स प्राणमसृजत' इति प्राणनिमित्ते एव जीवस्योत्क्रान्तिप्रतिष्ठे दर्शयति ॥

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥

इतश्चास्ति मुख्यप्राणस्य वैशेषिकं कार्यं यत्कारणं पञ्चवृत्तिरयं व्यपदिश्यते श्रुतिषु 'प्राणोऽपानो व्यान उदानः समानः' इति । वृत्तिभेदश्चायं कार्यभेदापेक्षः । 'प्राणः प्राग्वृत्तिरुच्छ्वासादिकर्मा, अपानोऽवाग्वृत्तिर्निश्वासादिकर्मा, व्यानः तयोः सन्धौ वर्तमानो वीर्यवत् कर्महेतुः, उदानः ऊर्ध्ववृत्तिरुत्क्रान्त्यादिहेतुः, समानः समं सर्वेष्वङ्गेषु योऽन्नर-

---

तदेव तदाप्नोत्येव, तेन प्राणेन यदश्नाति जीवः तेन प्राणकृताप्यायनेनेति यावत् । एवंश्रुतेः प्राणस्यासाधारणं कार्यमस्तीत्यर्थः ॥

तत्रैव चेत्युत्तरार्धं सूत्रं व्याचष्टे । इतश्चेत्यादिना । वृत्तिरवस्था । अग्निमन्थनादिकं वीर्यवत् कर्म । कामादिवृत्तिभेदज्ञानेऽपि पञ्चत्वनियमो नास्तीत्यरुचिं स्वयमेवोद्भाव्य पक्षान्तरं वदति । नन्वित्यादिना । प्रमाणं प्रमितिः । विपर्ययो भ्रमः । शशविषाणादिज्ञानं विकल्पः । तामसी वृत्तिर्निद्रा । स्मृतिः प्रसिद्धा । अप्रसिद्धयोरपि वृत्तित्वात् मनोवृत्तिभिन्नवृत्त्या शून्यतमाह । यद्यपीति । सत्यमाप-

सारयति' इति । एवं पञ्चवृत्तिः प्राणः मनोवत् यथा म-
नसः पञ्चवृत्तयः एवं प्राणस्यापीत्यर्थः । श्रोत्रादिनिमित्त-
शब्दादिविषयाः मनसः पञ्च वृत्तयः प्रसिद्धाः । न तु काम
सङ्कल्प इत्याद्याः परिपठिताः परिगृह्येरन्, पञ्चसङ्ख्यातिरे-
कात् । नन्वत्रापि श्रोत्रादिनिरपेक्षा भूतभविष्यदादिवि-
षयाऽपरा मनसो वृत्तिरस्तीति समानः पञ्चसङ्ख्यातिरेकः ।
एवं तर्हि परमतमप्रतिषिद्धमनुमतं भवतीति न्यायादिहा-
पि योगशास्त्रप्रसिद्धा मनसः पञ्च वृत्तयः परिगृह्यन्ते
प्रमाणविपर्ययविकल्पनिद्रास्मृतयो नाम । बहुवृत्तिकत्वसामान्य-
ेन वा मनः प्राणस्य निदर्शनमिति द्रष्टव्यम् । जीवोपक-
रणत्वमपि प्राणस्य पञ्चवृत्तित्वान्मनोवदिति योजयितव्यम्

## अणुश्च ॥ १३ ॥

अणुश्चायं मुख्यः प्राणः प्रत्येतव्यः इतरः प्राणवत् । अणु-
त्वेहापि सौक्ष्म्यपरिच्छेदौ न परमाणुतुल्यत्वं, पञ्चभिर्वृ-
त्तिभिः कृत्स्नशरीरव्यापित्वात् । सूक्ष्मः प्राण उत्क्रान्तौ

---

नरमाह । जीवेति । तदेवं प्राणवायोर्भेदाभेदश्रुत्योरविरोध-
षितम् ॥

एवं मुख्यप्राणस्योत्पत्तिं स्वरूपञ्चोक्त्वा परिमाणवन्देहेऽणुत्वं
यति । अणुरिति । अधिकरणशङ्कामाह । ननु विभुत्वमपीति । पु-
र्मशकादपि सूक्ष्मो जन्तुः पुत्तिकेत्युच्यते । नागो हस्ती । प्राण-
माप्नोति इत्यात्मत्वं प्राणस्य भाति, समोऽनेन सर्वेणेति श्रुत्या वि-
भुत्वमिति विरोधे आध्यात्मिकप्राणस्याल्पत्वमाधिदैविकस्य विभुत्वमिति भे-
भेदाच्छ्रुत्योरविरोधः इति समाधत्ते । तदुच्यत इति । किं-

र्वस्थे नानुपलभ्यमानत्वात्, परिच्छिन्नत्वोत्क्रान्तिगत्यागतिश्रुतिभ्यः। ननु विभुत्वमपि प्राणस्य समाम्नायते, "समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण" इत्येवमादिषु प्रदेशेषु। तदुच्यते, आधिदैविकेन समष्टिव्यष्टिरूपेण हैरण्यगर्भेण प्राणात्मना एतद्विभुत्वमाम्नायते नाध्यात्मिकेन। अपि च समः प्लुषिणेत्यादिना साम्यवचनेन प्रतिप्राणिवर्त्तिनः प्राणस्य परिच्छेद एव प्रदर्श्यते तस्माददोषः॥

## ज्योतिराद्यधिष्ठानन्तु तदामननात् ॥ १४ ॥

ते पुनः प्रकृताः प्राणाः किं स्वमहिम्नैव स्वस्मै स्वस्मै कार्याय प्रभवन्ति आहोस्विद्देवताधिष्ठिताः प्रभवन्तीति विचार्यते। तत्र प्राप्तं तावद्यथा स्वकार्यशक्तियोगात् स्वमहिम्नैव प्राणाः प्रवर्तेरन्निति। अपि च देवताधिष्ठितानां प्रा-

---

प्राणस्य प्लुष्यादिसमत्वेनाल्पत्वोक्तेः सम एभिस्त्रिभिर्लोकैरिति विराड्देहवाक्यम्। समोऽनेनेति सूत्रात्मत्वमिति विषयव्यवस्था ज्ञेयेत्याह। अपि चेति। यथावयवेष्वत्र सर्वेऽनन्ता इति इन्द्रियानन्त्यमुपासनार्थमिति समाहितं, अत्र तु प्राणविभुत्वमाधिदैविकमिति समाधानान्तरोक्तेरपौनरुक्त्यम्। अन्ये तु प्रसङ्गात्तत्र सांख्याक्षेपो निरस्तः अत्र तु श्रुतिविरोधो निरस्त इत्यपौनरुक्त्यमाहुः। पूर्वं प्राणस्याध्यात्मिकाधिदैविकविभागेनाणुपरिच्छिन्नत्वव्यवस्थोक्ता॥

प्रसङ्गेनाध्यात्मिकानां प्राणानामाधिदैविकाधीनत्वमाह। ज्योतिराद्यधिष्ठानन्तु तदामननात्। 'वाचा हि नामान्यभिवदति चक्षुषा रूपाणि पश्यति' इति स्वकीयाच्छ्रुत्याऽन्वयव्यतिरेकवत्त्या वागादीनां निरपेक्षप्रवर्तनोक्तिविरोधादग्न्यादीनां भूत्वेत्यादिश्रुतिरचेतनाग्न्याद्युपादान-

ख्यानां प्रवृत्तावनुपपद्यमानायां तासामेवाधिष्ठातृदे-
वतानां भोक्तृत्वप्रसङ्गात् शारीरस्य भोक्तृत्वं प्रलीयेत।
स्वमहिम्नैवैषां प्रवृत्तिरिति, एवं प्राप्त इदमुच्यते। ज्यो-
तिराद्यधिष्ठानन्त्विति। तुशब्देन पूर्वपक्षो व्यावर्त्यते। ज्यो-
तिरादिभिरग्न्याद्यभिमानिनीभिर्देवताभिरधिष्ठितं वागादिक-
रणजातं स्वकार्य्येषु प्रवर्तत इति प्रतिजानीते। हेतुं
व्याचष्टे। तदामननादिति। तथा ह्यामनन्ति 'अग्निर्वाग्भूत्वा
मुखं प्राविशत्' इत्यादि। अग्नेश्चायं वाग्भावो मुखप्रवेशश्च दे-
वतात्मनाऽधिष्ठातृत्वमङ्गीकृत्योच्यते। नहि देवतासम्बन्धं प्र-
त्याख्यायाग्नेर्वाचि मुखे वा कश्चिद्विशेषः सम्बन्धो दृश्यते।
तथा 'वायुः प्राणो भूत्वा नासिके प्राविशत्' इत्येवमादि
योजयितव्यम्। तथान्यत्रापि 'वागेव ब्रह्मणश्चतुर्थः पादः
सोऽग्निना ज्योतिषा भाति च तपति च' इत्येवमादि
वागादीनामग्न्यादिज्योतिष्ट्ववचनेनैतमेवार्थं द्रढयति।

---

त्मपरा न तु तेषामधिष्ठातृदेवतापरा। न च स्वकार्ये प्रवृत्ता-
वागादीनामचेतनत्वादधिष्ठात्रपेक्षा न विरुध्यत इति वाच्यं, ...
शास्त्रत्वात्। किन्तु देवतानामधिष्ठातृत्वे जीववद्भोक्तृत्वमपि स्यात् देहे ...
तथा चैकस्मिन्ननेकभोक्तॄणां विरोधात् दुर्बलस्य जीवस्य भोक्तृत्वं न ...
पूर्वपक्षार्थः। सिद्धान्तयति। एवं प्राप्त इत्यादिना। अग्निर्वा-
ग्भूत्वेत्यादिवाक्ये भूत्वेति च तद्भावोऽग्न्यादिदेवताधिष्ठितत्वरूप एव ...
तदुपादानत्वरूपो दूरस्यादित्यस्य ... मुखस्य चक्षुरादि ...
प्रवेशादिश्च ह। अग्नेश्चायमिति। वायुः प्राणाधिष्ठाता भूत्वा ...
इत्यादि व्याख्येयमित्याह। तथेति। भाति दीप्यते,

वै वागेव प्रथमात्यवहत् सा यदा मृत्यु,मत्यमुच्यत सोऽग्निरभवदिति च' एवमादिना वागादीनामग्न्यादिभावापत्तिवचनेनैतमेवार्थं द्योतयति। सर्वत्र चाध्यात्माधिदैवतविभागेन वागाद्यग्न्याद्यनुक्रमणमनयैव प्रत्यासत्त्या भवति। स्मृतावपि॥

वागध्यात्ममिति प्राहुः ब्राह्मणास्तत्त्वदर्शिनः।
वक्तव्यमधिभूतन्तु वह्निस्तत्राधिदैवतम्॥

इत्यादिना वागादीनामग्न्यादिदेवताधिष्ठितत्वं सप्रपञ्चं प्रदर्शितम्। यदुक्तं स्वकार्यशक्तियोगात् स्वमहिम्नैव प्राणाः प्रवर्त्तेरन्निति,तदयुक्तम्। शक्तानामपि शकटादीनामनडुहाद्यधिष्ठितानां प्रवृत्तिदर्शनात्। उभयथोपपत्तौ चागमाद्देवताधिष्ठितत्वमेव निश्चीयते। यदप्युक्तं देवतानामेवाधिष्ठात्रीणां भोक्तृत्वप्रसङ्गो न शारीरस्य जीवस्येति तत् परिह्रियते॥

## प्राणवता शब्दात्॥ १५॥

---

स्वकार्यं करोतीत्यर्थः। एतस्मिन्नधिकरणेऽधिष्ठातृत्वरूपार्थे लिङ्गान्तरमाह। स वै वाचमिति। स प्राणो वाचं प्रथमामुद्गीथकर्मणि प्रधानामन्तरादिपाप्मरूपं मृत्युमतीत्यावहन्मृत्युना मुक्तां कृत्वा अग्निदेवतात्मत्वं प्रापितवानित्यर्थः। किञ्चाग्निस्तस्माग्निं वागप्येति वातं प्राणः चक्षुरादित्यमित्यादिश्रुतिरप्यधिष्ठातृत्वे सम्बन्धं द्योतयतीत्याह। सर्वत्रेति। ननु शकटादीनां बलीवर्दादिप्रेरितानां प्रवृत्तिर्दृष्टा, क्षीरादीनान्त्वनधिष्ठितानामपि दध्यादिप्रवृत्तिर्दृश्यते, तथा चोभयथासम्भवे कथं निश्चय इत्यत आह। उभयथोपपत्तौ चेति। उक्तदोषान्तरनिरासाय सूत्रमवतारयति। यदपीति॥

सतीष्वपि प्राणानामधिष्ठात्रीषु देवतासु प्राणवता कार्यकरणसङ्घातस्वामिना शारीरेणैवैषां प्राणानां सम्बन्धः श्रुतेरवगम्यते । तथा हि श्रुतिः 'अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम्' इत्येवंजातीयका शारीरेणैव प्राणानां सम्बन्धं श्रावयति । अपि चानेकत्वात् प्रतिकरणमधिष्ठात्रीणां देवतानां न भोक्तृत्वमस्मिन् शरीरेऽवकल्पते । एको ह्ययमस्मिन् शरीरे शारीरो भोक्ता प्रतिसन्धानादिसम्भवादवगम्यते ॥

## तस्य च नित्यत्वात् ॥ १६ ॥

तस्य च शारीरस्यास्मिन् शरीरे भोक्तृत्वेन नित्यत्वं पुण्यपापोपलेपसम्भवात् सुखदुःखोपभोगसम्भवाच्च न देवताना

शारीरेणैवेति । भोक्त्रेति शेषः । सम्बन्धो भोक्तृभोग्यभावः । प्राणप्रवेशानन्तरं यत्र गोलके एतच्छिद्रमनुप्रविष्टं चक्षुरिन्द्रियं चक्षुष्यभिमानी स आत्मा चाक्षुषः तस्य रूपदर्शनाय चक्षुः । यद्यपि करणान्यपेक्षते तथापि श्रोयज्ञानतदाश्रयाहङ्कारं यो वेद स चिद्रूप एव, करणानि तु गन्धादिप्रवृत्तयेऽपेक्ष्यन्ते न चैतन्यायेत्यर्थः । किञ्च योऽहं रूपमद्राक्षं स एवाहं शृणोमीति प्रतिसन्धानादेकः शारीर एव भोक्ता न बहवो देवा इत्याह । अपि चेति ।

कदाचिद्देवानामभोक्तृत्वं कदाचिज्जीवस्येत्यनियमोऽस्त्विति स्वकर्मार्जिते देहे जीवस्य भोक्तृत्वनियमान्नैवमित्याह तस्येति । उत्क्रमणादिषु जीवस्य प्राणाव्यभिचारात्तस्यैव प्राणस्वामित्वं देवतानान्तु परमात्मकरणवारधिवदधिष्ठातृत्वमात्रमिति व्याख्यानान्तरं शारीरेणैव च नित्य इति । यथा प्रदीपादिः करणोपकारकत्वा

म्। ता हि परस्मिन्नैश्वर्ये पदेऽवतिष्ठमाना न हीनेऽस्मिञ्छरीरे भोक्तृत्वं प्रतिलब्धुमर्हन्ति। श्रुतिश्च भवति 'पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति' इति शारीरेणैव नित्यः प्राणानां सम्बन्धः। उत्क्रान्त्यादिषु तदनुवृत्तिदर्शनात्। 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्यादिश्रुतिभ्यः। तस्मात् सतीष्वपि करणानां नियन्त्रीषु देवतासु न शारीरस्य भोक्तृत्वमपगच्छति, करणपक्षस्यैव हि देवता न भोक्तृपक्षस्येति॥

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्॥१७॥

मुख्यश्चैक इतरे चैकादश प्राणा अनुक्रान्ताः, तत्रेदमपरं सन्दिह्यते किं मुख्यस्यैव प्राणस्य वृत्तिभेदा इतरे प्राणा आहोस्वित् तत्त्वान्तराणीति। किं तावत् प्राप्तं मुख्य-

पक्षान्तर्गतत्वात्तथा देवाः करणोपकारकत्वेन न भोक्तारः [illegible]। जीवस्यादृष्टद्वारा करणाधिष्ठातृत्वात् [illegible] भोक्तृत्वं, देवानां तु कर-णोपकारमात्रतया [illegible] [illegible]। देवानामधिष्ठातृत्वेनाधिष्ठितदेहे भोक्तृत्वानुपपत्तेः न ह वै देवान् पापं गच्छतीत्युक्तश्रुत्यभिप्रायितं, तथाभूतस्य हि कदाचित् [illegible] [illegible]। साधनत्वमात्रमेवाधिष्ठातृत्वं [illegible] विरोध इति [illegible]॥

* मतिरिन्द्रियेषु तदभिमानिदेवताधिष्ठानं [illegible] [illegible] न मन्तव्यमेवं प्रमाणं। [illegible] प्राणादिन्द्रियाणां भेदाभेदविचारार्थं [illegible] [illegible]। [illegible] [illegible]

स्यैवेतरे वृत्तिभेदा इति। कुतः श्रुतेः। तथा हि श्रुतिर्मु
मितरांश्च प्राणान् सन्निधाप्य मुख्यात्मतामितरेषां ख्याप
ति 'हन्तास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपम
वन्' इति। प्राणैकशब्दत्वाच्चैकत्वाध्यवसायः, इतर
ह्यन्याय्यमनेकार्थत्वं प्राणशब्दस्य प्रसज्येत एकत्र वा मु
त्वमितरत्र वा लाक्षणिकत्वमापद्येत। तस्माद् यथैक
प्राणस्य प्राणाद्याः पञ्च वृत्तयः एवं वागाद्या अप्येका
त्येवं प्राप्ते ब्रूमः। तत्त्वान्तराण्येव प्राणाद्वागादीनीति कु
व्यपदेशभेदात्। कोऽयंव्यपदेशभेदः, ते प्रकृताः, प्रा
श्रेष्ठं वर्जयित्वाऽवशिष्टा एकादशेन्द्रियाणीत्यु,च्यन्ते
श्रुतावेवं व्यपदेशभेददर्शनात्। 'एतस्माज्जायते प्राणो म
सर्वेन्द्रियाणि च' इत्येवंजातीयकेषु श्रुतिप्रदेशेषु पृथक्
णो व्यपदिश्यते पृथक् चेन्द्रियाणि। ननु मनसोऽप्येवं

केति सङ्कल्पते वागादयस्तथाऽभयन्त्यभेदस्तुत्यर्थः। ते प्राणाः
प्राणपदवाच्यत्वात् प्राणवदित्याह। प्राणेति। ते प्राणाः श्रेष्ठाद
इति प्रतिज्ञार्थत्वेन पदत्रयं व्याचष्टे। तत्त्वान्तराण्येवेति। श
दित्यत्र तच्छब्दः प्रतिज्ञातान्यत्वं परामृशति। प्राणा इन्द्रिया
अपर्यायशब्दाभ्यामन्यत्वोक्तेरिति हेतुपपादनार्थत्वेन प्रकृता
पदानि योजयति। क इत्यादिना। छलस्य विवक्षितोत्तरत्वाऽभ
मवष्टार एव न दूषणं, एतेन प्रतिज्ञाध्याहारः तच्छब्दस्याप्रकृतमेद
र्थित्वङ्केति दोषद्वयमपास्तम्। शब्दभेदाद्वस्तुभेदसाधनेऽतिप्रस
ते। मनसीति। प्राणवन्मनसोऽपि इन्द्रियेभ्यो भेदः स्यादित्यर्थः।
र्यायसंज्ञाभेदात् स्वतन्त्रसंज्ञिवस्तुभेद इत्युत्सर्गः। स च मनःप्रश्नौ
श्रोत्रादिषु श्रुतिबाधान्मनस्यपोद्यते, प्राणे तु बाधकाभावादुत्सर्गस्थि

वर्जनम् इन्द्रियत्वेन प्राणवत् स्यात् 'मनः सर्वेन्द्रियाणि च' इति पृथक् व्यपदेशभेददर्शनात् । सत्यमेतत्. स्मृतौ तु एकादशेन्द्रियाणीति मनोऽपीन्द्रियत्वेन श्रोत्रादिवत् संगृह्यते, प्राणस्य त्विन्द्रियत्वं न श्रुतौ स्मृतौ वा प्रसिद्धमस्ति । व्यपदेशभेदश्चायं तत्त्वभेदपक्षे उपपद्यते । तत्त्वैकत्वे तु 'स एवैकः सन् प्राण इन्द्रियव्यपदेशं लभते न लभते च' इति विप्रतिषिद्धं, तस्मात्तत्त्वान्तरभूता मुख्यादितरे । कुतश्च तत्त्वान्तरभूता मुख्यादितरे ॥

## भेदश्रुतेः ॥१८॥

भेदेन च वागादिभ्यः प्राणः सर्वत्र श्रूयते । 'ते ह वाचमूचुः' इत्युपक्रम्य वागादीनसुरपाप्मविध्वस्तानुपन्यस्योपसंहृत्य वागादिप्रकरणं, 'अथ हेममासन्यं प्राणमूचुः' इत्यसुरविध्वंसिनो मुख्यस्य प्राणस्य पृथगुपक्रमात्, तथा

समाधत्ते । सत्यमित्यादिना । मन इन्द्रियाणि चेति भेदोक्तिर्गोबलीवर्दन्यायेन नेया । सिद्धान्ते मनसः प्रश्नोपाद्यागमादावनिन्द्रियत्वमिष्टं ततो गोबलीवर्दन्याय इति केचित् । किञ्चैतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेति पृथक्जन्मव्यपदेशात् मतान्तरवस्तुभेद इत्याह । व्यपदेशभेदार्थमिति । एतस्मिन् वाक्ये प्राण इन्द्रियशब्दमेकदा लभते पुनरन्यदा न लभते चेति व्याख्यात इत्यर्थः ॥

एवं भेदेनाम्नायसाम्ये युक्तिः पृथग्जन्मोक्तिश्चेति तद्व्यपदेशादिति सेतव्याख्यातः । भेदश्रुतेरिति सूत्रेण प्रकरणभेदो हेतुरुक्त इति न पौनरुक्त्यं । ते देवाः वागादीन्द्रियवर्गाधिष्ठातारः असुराणां पाप्मविद्धत्वात् जयार्थमुद्गीथकर्मणि प्रथमं व्याप्तृत्वं वाचमूचुस्त उद्गायाद्युद्गानार्थमिति तथास्त्वित्यङ्गीकृत्योद्गायन्तीं वाचमसुराः पाप्मना विद्धा विद्धवन्तोऽसुराः

'मनो वाचं प्राणं' तान्यात्मनेऽकुरुत' इत्येवमाद्याः भेदश्रुतय उदाहर्त्तव्याः ॥ तस्मादपि तत्त्वान्तरभूता दितरे । कुतश्च तत्त्वान्तरभूता मुख्यादितरे ॥

वैलक्षण्याच्च ॥ १९ ॥

वैलक्षण्यं च भवति मुख्यप्राणस्येतरेषां च सुप्ते दिषु मुख्य एको जागर्त्ति स एव चैको मृत्युनाऽना आप्तास्त्वितरे तस्यैव प्राणस्यावस्थित्युत्क्रान्तिभ्यां देह णपातनहेतुत्वं नेन्द्रियाणां विषयालोचनहेतुत्वं चेन्द्रि न प्राणस्येत्येवंजातीयको भूयान् लक्षणभेदः प्राणेन्द्रि तस्मादप्येषां तत्त्वान्तरभावसिद्धिः । यदुक्तं 'त एत सर्वे रूपमभवन्' इति श्रुतेः प्राण एवेन्द्रियाणीति, क्तम् तत्रापि पौर्वापर्यालोचनाद्भेदप्रतीतेः । तथा 'वदिष्याम्येवाहमिति वाग्दध्रे' इति वागादीनीन्द्रिया क्रम्य 'तानि मृत्युः श्रमो भूत्वोपयेमे तस्माच्छ्राम्यत्येव इति च श्रमरूपेण मृत्युना ग्रस्तत्वं वागादीनामभि 'अथेममेव नाप्नोत् योऽयं मध्यमः प्राणः' इति पृथक्

इतश्च क्रमेण सर्वेष्विन्द्रियेषु पाप्मस्पृष्टेषु पश्चादयेति प्रकरणं प्रतिज्ञमासौ असमासन्यं मुख्यं प्राणमृत्युस्तत्र उद्गायेति तेन प्रा निर्विषयतया सङ्कोचेऽप्युदन्वेनासुरा नष्टा इतरेषुरायां विषयं प्राणस्योक्तेर्भेदसिद्धिरित्याह । ते इति । तानि स्त्रोऽयन्त्यात्मने प्रजापतिः कृतवानित्यर्थः ॥

विरुद्धधर्मवत्त्वाच्च । भेद इत्याह । वैलक्षण्येति । प्रदोषः । वाग्दध्रे धृतवतीत्यर्थः । वक्ष्यामि॰ इदं॰ श्रैर्विरोधादागमे रूपमभवन् प्राणाधीनस्थितिकत्वरूपं व्याख्येयं । एतदेव प्राणस्य

भृत्यानामभिभूतमनुक्रामति। 'अयं वै नः श्रेष्ठः' इति च श्रेष्ठतामस्यावधारयति। तस्मात्तदविरोधेन वागादिषु परिस्पन्दलाभस्य प्राणायत्तत्वं तद्रूपभवनं वागादीनामिति मन्तव्यं न तु तादात्म्यम्। अतएव प्राणशब्दस्येन्द्रियेषु लाक्षणिकत्वसिद्धिः। तथा च श्रुतिः 'त एतस्यैव सर्वे रूपमभवन् तस्मादेत एतेनाख्यायन्ते प्राणाः' इति मुख्यप्राणविषयस्यैव प्राणशब्दस्य इन्द्रियेषु लाक्षणिकीं वृत्तिं दर्शयति। तस्मात्तत्त्वान्तराणि प्राणाद्वागादीन्द्रियाणीति ॥

**संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥२०॥**

सत्प्रक्रियायां तेजोऽबन्नानां सृष्टिमभिधायोपदिश्यते। 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति।' तत्र संशयः किं जीवकर्तृकमिदं नामरूपव्याकरणमाहोस्वित् परमेश्वरकर्तृकमिति। तत्र प्राप्तं तावत् जीवकर्तृकमेवेदं नामरूपव्याकरणमिति। कुतः,

---

येषु लक्षणाबीजं श्रुतौ तस्मादेत एतेनाख्यायन्त इति परास्तमिति न भेदाभेदश्रुत्योर्विरोध इति सिद्धम् ॥

उत्पत्त्युत्पादनेति च कार्यकर्त्रोर्व्यापारौ प्रसिद्धौ, तत्र जगदुत्पत्तिश्रुतिविरोधः अतीतेन पादद्वयेन निरस्तः, सम्प्रत्युपादानश्रुतिविरोधो निरस्यते। तत्रापि सूक्ष्मभूतोत्पादनं पारमेश्वरमेवेति श्रुतिष्वविप्रतिपन्नं, स्थूलभूतोत्पादने त्वस्ति श्रुतिविप्रतिपत्तिरिति तन्निरासार्थमाह। संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्। नामरूप भेदाद्व्याकरणभिन्नः प्राप्त इत्युक्तं, तत्रवदन स्थूलनामरूपक्लृप्तिः किं-

अनेन जीवेनात्मनेति विशेषणात्। यथा लोके चारं
परसैन्यमनुप्रविश्य सङ्कलयानीत्येवं जातीयके प्रयो
कर्तृकमेव सत्सैन्यसङ्कलनं हेतुकर्तृत्वाद्राजात्मन्यध्यारो
सङ्कलयानीत्युत्तमपुरुषप्रयोगेण, एवं जीवकर्तृकमेव
मरूपव्याकरणं हेतुकर्तृकत्वाद्देवतात्मन्यध्यारोपयति व
रवाणीत्युत्तमपुरुषप्रयोगेण। अपि च डित्थडवित्थादि
मसु घट शरावादिषु च रूपेषु जीवस्यैव व्याकर्तृ
तस्माज्जीवकर्तृकमेवेदं नामरूपव्याकरणमित्येवं प्रा
धत्ते। संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत इति। तुशब्दः
व्यावर्तयति। संज्ञामूर्तिक्लृप्तिरिति नामरूपव्याक्रियेत्
त्रिवृत्कुर्वत इति परमेश्वरं लक्षयति, त्रिवृत्करणे त
रपवादकर्तृत्वनिर्देशात्। येयं संज्ञाक्लृप्तिर्मूर्तिक्लृप्ति
रादित्यश्चन्द्रमा विद्युदिति तथा कुशकाशपलाशादि
मृगमनुष्यादिषु च प्रत्याकृति प्रतिव्यक्ति चानेकप्रका
खलु परमेश्वरस्यैव तेजोऽबन्नानां निर्मातुः कृतिर्भ
हेति। कुतः उपदेशात्। तथाहि सेयं देवतेत्युपक्र
करवाणीत्युत्तमपुरुषप्रयोगेण परस्यैव ब्रह्मणो व्याक

र्त्रं केति चिन्तत इत्यवान्तरसङ्गतिः। प्रक्रिया प्रकरणं। ईक्षणं
पूर्वोक्तादिना। हन्त इदानीं देवताः सृष्ट्वा अनुप्रविश्येति
तासां तिसृणां देवतानामेकैकां देवतां तेजोऽबन्नात्मना त्रिवृतं
ष्यामीति श्रुतिः पञ्चीकरणोपलक्षणार्था। छान्दोग्येऽप्याकाशादी
संहारश्रोक्तत्वात्। एवं स्थूलीकृतेषु भूतेषु प्राणिनां व्यवहारः
परदेवतायास्तात्पर्यम्। जीवेनेतिपदस्य व्याकरवाणीत्यनेन
भ्यां संशयमाह। तत्रेति। पूर्वपक्षे जीवस्यैव भौतिकसृष्ट्या

मित्युपदिश्यते। ननु जीवेनेति विशेषणाज्जीवकर्तृकत्वं व्याकरणस्याध्यवसितं नैतदेवं जीवेनेत्येतदनुप्रविश्येत्यनेन सम्बध्यते आनन्तर्यान्न व्याकरवाणीत्यनेन। तेन हि सम्बन्धे व्याकरवाणीत्ययं देवताविषय उत्तमपुरुष औपचारिकः कल्प्येत। न च गिरिनदीसमुद्रादिषु नानाविधेषु नामरूपेषु अनीश्वरस्य जीवस्य व्याकरणसामर्थ्यमस्ति, येष्वपि चास्ति सामर्थ्यं तेष्वपि परमेश्वरायत्तमेव तत्। न च जीवो नाम परमेश्वरादत्यन्तभिन्नश्चार इव राज्ञः, आत्मेति विशेषणात्, उपाधिमात्रनिबन्धनत्वाच्च जीवभावस्य। तेन तत्कृतमपि नामरूपव्याकरणं परमेश्वरकृतमेव भवति। परमेश्वर एव च नामरूपयोर्व्याकर्तेति सर्वोपनिषत्सिद्धान्तः। 'आकाशो ह वै नाम नामरूपयोर्निर्वहिता' इत्यादिश्रुतिभ्यः। तस्मात् परमेश्वरस्यैव त्रिवृत्कुर्वतः कर्म नामरूपव्याकरणं, त्रिवृत्करणपूर्वकमेवेदमिह नामरूपव्याकरणं विवक्ष्यते। प्रत्येकं नामरूपव्याकरणस्य तेजोऽबन्नोत्पत्तिवचनेनैवोक्तत्वात्, तच्च त्रिवृत्करणमग्न्यादित्यचन्द्रविद्युत्सु श्रुतिर्दर्शयति 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्य' इत्यादिना। तत्राग्निरितीदं रूपं व्याक्रियते। सति च रूपव्याकरणे विषयप्रतिलम्भा-

---

सर्वकर्तृत्वासिद्धेः निश्चायकं तल्लिङ्गमिति फलं। जीवेनेत्यस्य व्याकरवाणीतिप्रधानक्रियापदेन सम्बन्ध इति पूर्वपक्षमाह। [illegible]। परदेवताया आत्मत्वे कथमुत्तमपुरुषप्रयोग इत्याशङ्क्य प्रयोजकत्वात् कर्तृत्वोपचार इत्याह। चार इवेति। विशेषयति। [illegible]-

दग्निरितीदं नाम व्याक्रियते । एवमेवादित्यचन्द्रविद्युतां द्रष्टव्यम् । अनेन चाग्न्याद्युदाहरणेन भौमाम्भसतैजसेष्वपि द्रव्येष्वविशेषेण त्रिवृत्करणमुक्तं भवति, उपक्रमोपसंहारयोः साधारणत्वात् । तथा हि अविशेषेणैवोपक्रमः 'इमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति' इति । अविशेषेणैव चोपसंहारः 'यदु रोहितमिवाभूत्' इति तेजसरूपमित्येवमादिः 'यदविज्ञातमिवाभूत्' इत्येतासामेव देवतानां समास इत्येवमन्तः । तासां तिसृणां देवतानां बहिस्त्रिवृत्कृतानां सतीनामध्यात्ममपरं त्रिवृत्करणमुक्तम् 'इमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भव

---

दिना । प्रत्याहृतेति प्रतिजातीत्यर्थः । अनेन स्थूलसर्गे जीवस्यान द्योतितं । तथा च पदान्वयस्य पदार्थयोग्यताधीनत्वाज्जीवरूपेण प्र व्याहमेव व्याकरवाणीत्यन्वयः न तु जीवेन व्याकरवाणीति । ननु प्रवेशक्रिया जीवकर्तृका व्याकरणमीश्वरकर्तृकमिति कर्तृभेदात् क्त्वा न स्यादित्यत आह । न च जीवो नामेति । वस्तुतस्तु जले प्रविष्ट इति प्रतिबिम्बभावाख्यप्रवेशे सूर्यस्यैव कर्तृत्वप्रयोगाज्जीव प्रवेशेऽपीश्वर एव कर्तेति क्त्वाश्रुतिर्युक्तेति बोध्यं । नन्वभेदश्चेज्जीव व्याकर्ता किं न स्यादित्याशङ्क्य कल्पनया भिन्नस्य तस्याशक्यत्वाद् पाश्च भेदमित्याह । परमेश्वर इति । एतेनोक्तं महाभूतसर्गस्य प्राकृ दिह व्याकरणवाक्ये यत्नपूर्वकस्य स्थूलभौतिकसर्गं उच्यते इति पाठक सूचितं सूत्रार्थमाह । त्रिवृत्करणपूर्वकमिति । ईश्वरकृतं त्रय च दृष्टमित्यत आह । तत्रेति । इदानीं नामरूपव्याकरणे माह । तस्याग्निरिति । यद्यप्यतः प्रभृतीत्यत्र वेदशब्द पं सृष्टिकर्ता तथाप्यव्यक्तात् स्थूलाच्चक्षुराद्यर्थसृष्टौ सत्यां स्फुटनामरू

इति। तदिदानीमाचार्यो यथाश्रुत्यैवोपदर्शयत्याशङ्कितं कञ्चित् दोषं परिहरिष्यन्॥

## मांसादि भौमं यथाशब्दमितरयोश्च॥ २१॥

भूमेस्त्रिवृत्कृतायाः पुरुषेणोपयुज्यमानाया मांसादि कार्यं यथाशब्दं निष्पद्यते। तथा हि श्रुतिः 'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः' इति। त्रिवृत्कृता भूमिरेवैषा व्रीहियवाद्यन्नरूपेणाद्यत इत्यभिप्रायः। स्थविष्ठं रूपं पुरीषभावेन वहिर्निर्गच्छति, मध्यममध्यात्मं मांसं वर्धयति, अणिष्ठन्तु मनः। एवमितरयोरप्तेजसोर्यथाशब्दं कार्यमवगन्तव्यं 'मूत्रं लोहितं प्राणश्चापां कार्यं अस्थि मज्जा वाक् तेजसः' इति। अत्राह यदि सर्वमेव त्रिवृत्कृतं भूतभौतिकं अविशेषश्रुतेः 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति, किं कृतस्तर्ह्ययं विशेषव्यपदेशः 'इदं तेज इमा आप इदमन्नं' इति। तथा 'अध्यात्ममिद-

---

भिव्यक्तिरत्रोक्तेत्यविरोधः। नन्वग्न्यादीनां तैजसानामेव श्रुतावुदाहरणात् भूजलयोस्त्रयात्मकत्वं न विवक्षितमित्यत आह। अनेन चेति। उपक्रमे तासां मध्य इति शेषः। यत्कपालरूपादिकं कृष्णत्वादिविशेषाकारेणाविज्ञातमिव भवति तद्देवतानां समुदायरूपमित्यर्थः। बाह्यं त्रिवृत्करणमाध्यात्मिकमपरं पूर्वोक्तनयं वदन् उत्तरसूत्रमवतारयति। तासामित्यादिना। पुरुषशरीरं प्राप्यैकैका त्रिवृद्भवति कर्मवयात्मना भवतीत्यर्थः। उत्तरसूत्रेण शङ्कितं दोषं निरसितुमादौ शब्दाविषयमाध्यात्मिकत्रिवृत्करणं दर्शयतीति भाष्यार्थः॥

नन्वन्नमयं मांसादि कथं भौममित्यत आह। त्रिवृत्कृता भूमिरेवेति।

मन्नन्तस्याश्रितस्य कार्यं मांसादि इदमपां पीतानां लोहितादि इदं तेजसोऽश्रितस्य कार्यमस्थ्यादि' इति अत्रोच्यते ॥

वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥

तुशब्देन चोदितं दोषमपनुदति। विशेषस्य भावो वैशेष्यं, भूयस्त्वमिति यावत्। सत्यपि त्रिवृत्करणे क्वचित् कस्यचित् भूतधातोर्भूयस्त्वमुपलभ्यते 'अग्नेस्तेजोभूयस्त्वमुदकस्याब्भूयस्त्वं पृथिव्या अन्नभूयस्त्वं' इति। व्यवहारप्रसिद्ध्यर्थं चेदं त्रिवृत्करणम्। व्यवहारश्च त्रिवृत्कृतरज्जुवदेकत्वापत्तौ सत्यां न भेदेन भूतत्रयगोचरो लोकस्य प्रसिध्येत्। तस्मात् सत्यपि त्रिवृत्करणे वैशेष्यादेव तेजोबन्नविशेषवादो भूतभौतिकविषय उपपद्यते। तद्वादस्तद्वाद इति पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयति॥

इति श्रीमच्छारीरकमीमांसाभाष्ये शङ्करभगवत्पादकृतौ द्वितीयस्याध्यायस्य चतुर्थः पादः ॥ ० ॥

अध्यायश्च समाप्तः ॥

प्राणस्य वायोरपकार्यत्वं औपचारिकं द्रष्टव्यम् ॥

एवं विप्रयुक्ता दोषं शङ्कते। अत्राहेति। तदुत्तरत्वेन व्याचष्टे। तुशब्देनेति। स्वभागाधिक्यं वैशेष्यं किमर्थं त्रिवृत्करणमित्यत आह। व्यवहारप्रसिद्ध्यर्थमिति। एवं स्मृतिन्यायमतान्तरश्रुतिविरोधो ब्रह्मणि वेदान्ततात्पर्यस्येति सिद्धम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमद्गोविन्दानन्दभगवत्कृतौ शारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभायां द्वितीयाध्यायस्य चतुर्थः पादः ॥ अध्यायश्च समाप्तः ॥

## ओं परमात्मने नमः ।

-----०-----

## तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

द्वितीयेऽध्याये स्मृतिन्यायविरोधो वेदान्तविहिते ब्रह्मदर्शने परिहृतः, परपक्षाणाञ्चानपेक्षत्वं प्रपञ्चितं, श्रुतिविप्रतिषेधश्च परिहृतः, तत्र च जीवव्यतिरिक्तानि तत्त्वानि जीवोपकरणानि ब्रह्मणो जायन्त इत्युक्तम् । अथेदानीमुपकरणोपहितस्य जीवस्य संसारगतिप्रकारस्तदवस्थान्तराणि ब्रह्मसतत्त्वं विद्याभेदाभेदौ गुणोपसंहारानुपसंहारौ सम्यग्दर्शनात् पुरुषार्थसिद्धिः सम्यग्दर्शनोपायविधिप्रभेदो मुक्तिफलानियमश्चेत्येतदर्थजातं तृतीयेऽध्याये निरूपयिष्यते प्रसङ्गागतञ्च किमप्यन्यत् । तत्र प्रथमे तावत् पादे पञ्चाग्निविद्यामाश्रित्य संसारगतिप्रभेदः प्रदर्श्यते, वैराग्यहेतोस्तस्माज्जुगुप्सेतेति चान्ते श्रवणात् । जीवो मुख्यप्राणसचिवः

---

ओं ब्रह्मणे नमः ।

यं हि वैराग्यसम्पन्नास्त्वमर्थं विवेकिनः ॥
लभन्ते साधनैर्दान्तास्तं सीतानायकं भजे ॥ १ ॥

तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् । वृत्तमनूद्य तृतीयाध्यायार्थमाह । द्वितीय इत्यादिना । अविरुद्धे वेदान्तार्थे तज्ज्ञानसाधनविचार इत्यनयोर्हेतुहेतुमद्भावः । लिङ्गोपाधिविशिष्टौ तदुपहितजीवसंसारचिन्तेति पादयोरपि तद्भावसङ्गतिः । तत्र प्रथमपादे वैराग्यम् । द्वितीये स्वप्नाद्यवस्थोक्त्या त्वंपदार्थो ब्रह्मतत्त्वञ्चोच्यते । तृतीये वाक्यार्थ-

सेन्द्रियः समनस्को विद्याकर्मपूर्वप्रज्ञापरिग्रहः पूर्वदेहं विहाय देहान्तरं प्रतिपद्यत इत्येतदवगतम्। 'अथैनमेते प्राणा अभिसमायन्ति' इत्येवमादेः 'अन्यन्नवतरं कल्याणतरं रूपं कुरुते' इत्येवमन्तात् संसारप्रकरणस्थाच्छब्दात् धर्माधर्मफलोपभोगसम्भवाच्च। स किं देहबीजैर्भूतसूक्ष्मैरसम्परिष्वक्तो गच्छति आहोस्वित् सम्परिष्वक्त इति चिन्त्यते। किन्तावत् प्राप्तं असम्परिष्वक्त इति। कुतः, करणोपादानवद्भूतोपादानस्याश्रुतत्वात्। 'स एतास्तेजोमात्राः समभ्याददानः' इत्यत्र तेजोमात्राशब्देन करणानामुपादानं सङ्कीर्तयति, वाक्यशेषे चक्षुरादिसङ्कीर्तनात्। नैवं भूतमात्रोपादानसङ्कीर्तनमस्ति सुलभाश्च सर्वत्र भूतमात्राः, यत्रैव देह आरब्धव्यस्तत्रैव सन्ति, ततश्च तासां नयनं निष्प्रयोजनं, तस्मादसंपरिष्वक्तो यातीत्येवं प्राप्ते पठत्याचार्यः। तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्त इति। तदन्तरप्रतिपत्तौ देहात् देहान्तरप्रतिपत्तौ देहबीजैर्भूतसूक्ष्मैः सम्परिष्वक्तो रंहति गच्छतीत्यवगन्तव्यम्। कुतः प्रश्ननिरूपणाभ्याम्। तथाहि प्रश्नः 'वेत्थ यथा

---

तदर्थमुपासनाय विचार्यन्ते। चतुर्थपादार्थमाह। सम्यग्दर्शनार्थं दर्शनोपायाः श्रवणादयः। मुक्तिरूपफलस्य सर्गवत्ताररतम्यनियमः एकरूपमित यावत्। प्रथमाङ्गतं देहात्मदूषणम्। पञ्चसु द्युपर्जन्यपृथिवीपुरुषयोषित्स्वग्निध्यानं पञ्चाग्निविद्या। यस्मात् कर्मणा गतागतरूपोऽनर्थस्तस्मात् कर्मफले जुगुप्सां वैराग्यमिच्छन्ति पुनरिति पञ्चाग्निविद्योपसंहारे अध्यायार्थं राज्यार्थं प्रदर्श्यते इत्यन्वयः। श्रवणादेः

पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति, इति । निरूपणञ्च प्रतिवचनं द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतीर्दर्शयित्वा 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति । तस्मादद्भिः परिवेष्टितो जीवो रंहति व्रजतीति गम्यते । नन्वन्या श्रुतिः 'जलौकावत् पूर्वदेहं न मुञ्चति यावन्न देहान्तरमाक्रमतीति दर्शयति, इति । तद्यथा तृणजलायुकेति, तत्राप्यप्परिवेष्टितस्यैव जीवस्य कर्मोपस्थापितप्रतिपत्तव्यदेहविषयभावनादीर्घीभावमात्रं जलूकयोपमीयत इत्यविरोधः । एवं श्रुत्युक्ते देहान्तरप्रतिपत्तिप्रकारे सति याः पुरुषमतिप्रभवाः

---

नित्यानित्यविवेकजं वैराग्यं मुक्तं इदानीं तदुपायं गत्यागति-क्लेशभावनात्मकं तदुच्यत इत्यपौनरुक्त्यम् । अधिकरणविषयमाह । जीव इति । अविद्या प्रसिद्धा । विद्येति पाठे उपासना ग्राह्या । कर्म धर्माधर्माख्यं, पूर्वप्रज्ञा जन्मान्तरसंस्कारः । अथ मरणकाले प्राणा हृदये जीवेनैकीभवन्तीत्यर्थः । रूपं शरीरं, पञ्चीकृतभूतभागाः उत्तरदेहपरिणामिनो भूतसूक्ष्माः । वेदान्तार्थज्ञानसाधनविचारत्वात् सर्वाधिकरणानां, श्रुतिशास्त्राध्यायसङ्गतयः वैराग्यफलकत्वादेतत्पादसङ्गतिः । सर्वाधिकरणे व्यवहारार्थं पञ्चीकरणमुक्तं स व्यवहारोऽत्र निरूप्यत इति फलफलि-भावोऽवान्तरसङ्गतिः । अत्र पूर्वपक्षे निराश्रयप्राणगतिभावात् न वैराग्यं सिध्यति, साश्रयप्राणगतौ वैराग्यमिति फलभेदः । तेजोमात्राश्चक्षुरादयः, पश्यति जिघ्रतीति वाक्यशेषात् । आपः पञ्चस्वग्निषु हुताः पञ्चम्यामा-हुतौ हुतायां यथा पुरुषशब्दवाच्याः पुरुषात्मना परिणमन्ते तथा किं त्वं वेत्थेति श्वेतकेतुं प्रति राज्ञः प्रश्नपञ्चकस्य मध्ये, तस्य चोत्तरदाने तमितरं प्रति राज्ञो 'असौ वाव लोको गौतमाग्निः' इत्यत्रोत्तरम् । आपः आहुतिः प्रथमाग्नौ सोमरूपा इह द्युलोकाग्नौ श्रद्धा हु-ता, दध्याद्या हि रूपा आपो यजमानसंयुक्ताः स्वर्गं लोकं प्राप्य सो-

प्रकल्पनाः व्यापिनां करणानामात्मनश्च देहान्तरप्रतिपत्तौ कर्मवशात् वृत्तिलाभस्तत्र भवति केवलस्यैव वात्मनो वृत्तिलाभस्तत्र भवति इन्द्रियाणि तु देहवदभिनवान्येव तत्र तत्र भोगस्थाने उत्पद्यन्ते मन एव वा केवलं भोगस्थानमभिप्रतिष्ठते जीव एव वोत्प्लुत्य देहाद्देहान्तरं प्रतिपद्यते शुक इव वृक्षाद् वृक्षान्तरमित्येवमाद्याः ताः सर्वा एवानादर्तव्याः, श्रुतिविरोधात्। ननूदाहृताभ्यां प्रश्नप्रतिवचनाभ्यां केवलाभिरद्भिः सम्परिष्वक्तो रंहतीति प्राप्नोति अप्शब्दश्रवणसामर्थ्यात्, तत्र कथं सामान्येन प्रतिज्ञायते सर्वैरेव भूतसूक्ष्मैः सम्परिष्वक्तो रंहतीत्यत उत्तरं पठति

---

मारभ्य दिव्यदेहात्मना स्थिताः कर्मान्ते [illegible] पर्जन्ये भूयन्ते वृष्टिरूपाः पृथिव्यां अन्नरूपाः पुरुषे रेतोरूपाः योषिति हुताः पुरुषशब्दवाच्या भवन्ति इति निरूपणं कृतम्। तन्वेतद्देहं [illegible] सङ्गतस्य यथा देहान्तरप्राप्तिरित्ययुक्तम्। यथा तृणजलायुका तृणान्तरं गृहीत्वा पूर्वतृणं त्यजति तथा जीवो देहान्तरं गृहीत्वा दे[illegible] त्यजतीति श्रुतिविरोधादिति शङ्कते। नन्वन्येति। इहैव कर्मायत्त[illegible] देवोऽहमित्यादिभावनया गृहीत्वा पूर्वदेहं त्यजतीति श्रुत्यर्थः, [illegible] विरोधः, इति समाधत्ते। तत्रापीति। भावनाया दीर्घ[illegible] भाविदेहविषयत्वम्। घटाकाशवदुपहितो जीवः स्वर्गोपा[illegible] लोकान्तरं गच्छतीति पञ्चाग्निश्रुत्युक्तः प्रकारस्तद्विरोधादन्याः क[illegible] अनादर्तव्या इत्यन्वयः। सांख्यकल्पनामाह व्यापिनामिति। सुगतकल्पनामाह। केवलस्येति। निर्विकल्पकज्ञान[illegible] रूपस्यात्मनो देहान्तरे गवादिसविकल्पज्ञानाख्यवृत्तिलाभो भवतीति [illegible] कारणादकल्पनामाह। मन इति। देहान्तरं प्रति मनोमात्रं [illegible] इन्द्रियाणि तु भूतान्येवारभन्ते। दिगम्बरकल्पनामाह। जीव इ[illegible]

## त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

तुशब्देन चोदितामाशङ्कामुच्छिनत्ति । त्र्यात्मिका ह्यापः त्रिवृत्करणश्रुतेः । तास्वारम्भिकास्वभ्युपगतास्वितरदपि भूतद्वयमवश्यमभ्युपगन्तव्यं भवति । त्र्यात्मकश्च देहस्त्रयाणामपि तेजोऽबन्नानां तस्मिन् कार्योपलब्धेः, पुनश्च त्र्यात्मकस्त्रिधातुकत्वात् त्रिभिर्वातपित्तश्लेष्मभिः । न भूतान्तराणि स प्रत्याख्याय केवलाभिरद्भिरारब्धुं शक्यते । तस्मात् भूयस्त्वापेक्षोऽयमापः पुरुषवचस इति प्रश्नप्रतिवचनयोरप्शब्दो न कैवल्यापेक्षः, सर्वदेहेषु हि रसलोहितादिद्रवभूयस्त्वं दृश्यते । ननु पार्थिवो धातुर्भूयिष्ठो देहेषूपलक्ष्यते, नैष दोषः, इतरापेक्षयाऽपां बाहुल्यं भविष्यति । दृश्यते च शुक्रशोणितलक्षणेऽपि देहबीजे द्रवबाहुल्यम् । कर्म च निमित्तकारणं, देहान्तरारम्भे कर्माणि चाग्निहोत्रादीनि सोमाज्यपयःप्रभृतिद्रवद्रव्यव्यपाश्रयाणि । कर्मसमवायिन्यश्चापः श्रद्धा-

---

ननु पाकस्वेदशब्दरूपकार्यस्योपलब्धेस्त्र्यात्मको देह इत्ययुक्तम् ॥

प्राणावकाशयोरप्युपलब्ध्या देहस्य पञ्चभूतात्मत्वादित्यरुच्या व्याख्यान्तरमाह । पुनश्चेति । देहधारकत्वाद्धातवो रसादयस्त्रिधातुत्वात्त्र्यात्मक इत्यन्वयः । देहस्य बीजाद्यत्वे वातं पित्तञ्च नाप्यं तैजसं न

शब्दोदिताः सह कर्मिभिर्द्युलोकाख्येऽग्नौ हवन ... वक्ष्यति, तस्मादप्यपां बाहुल्यप्रसिद्धिः। बाहुल्यात्त्वप्शब्दः सर्वेषामेव देहबीजानां भूतसूक्ष्माणामुपादानमिति सिद्धम्॥

प्राणगतेश्च॥ ३॥

प्राणानाञ्च देहान्तरप्रतिपत्तौ गतिः श्राव्यते 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्यादिश्रुतिभिः। सा च प्राणानां गतिराश्रयमन्तरेण न सम्भवतीत्यतः प्राणगतिप्रयुक्तानां तदाश्रयभूतानामपामपि भूतान्तरोपसृष्टानां गतिरवगम्यते। नहि निराश्रयाः प्राणाः क्वचिद्गच्छन्ति तिष्ठन्ति वा, जीवतोऽदर्शनात्॥

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्॥ ४॥

स्यादेतत्, नैव प्राणा देहान्तरप्रतिपत्तौ सह जीवेन गच्छन्ति, अग्न्यादिगतिश्रुतेः। तथाहि श्रुतिः मरणकाले वागादयः प्राणाः अग्न्यादीन् देवान् गच्छन्तीति दर्शयति 'यत्रास्य पुरुषस्य मृतस्याऽग्निं वागप्येति वातं प्राणः

स्तातानिति भावः। पृथिवीतरभूतापेक्षया बाहुल्यम्। किञ्च देहारम्भकाणां कर्मणामपूर्वबाहुल्यात्ताभिर्भूतान्तरायुपलक्षणं इत्याह। ... चेत्यादिना॥

उक्ताय प्राणा देहबीजभूतसूक्ष्माश्रयाः प्राणत्वाज्जीवद्देहप्राणवदित्याह। प्राणगतेश्चेति॥

प्राणानां गतिरसिद्धेत्याशङ्क्य निषेधति। अग्न्यादीति। ... दोषधिवनस्पतिगमनश्रुतेरिति शेषः। लोमान्यपि यन्तीत्यर्थः। प्राणा

त्वादिनेति चेन्न, भाक्तत्वात्। वागादीनामग्न्यादिगतिश्रुति-र्गौणी लोमसु केशेषु चादर्शनात्। 'ओषधीर्लोमानि वनस्पतीन् केशाः' इति हि तत्राम्नायते। न हि लोमानि केशाश्चोत्प्लुत्यौषधीर्वनस्पतींश्च गच्छन्तीति सम्भवति। न च जीवस्य प्राणोपाधिप्रत्याख्याने गमनमवकल्पते, नापि प्राणै-र्विना देहान्तर उपभोग उपपद्यते, विस्पष्टञ्च प्राणानां सह जीवेन गमनमन्यत्र श्रावितं, अतो वागाद्यधिष्ठात्रीणां अ-ग्न्यादिदेवतानां वागाद्युपकारिणीनां मरणकाल उपकार-निवृत्तिमात्रमपेक्ष्य वागादयोऽग्न्यादीन् गच्छन्तीत्युपचर्यते॥

**प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः॥५॥**

स्यादेतत्, कथं पुनः पञ्चम्यामाहुतौ आपः पुरुषवचसो भवन्तीत्येतन्निर्धारयितुं पार्यते यावता नैव प्रथमेऽग्नावपां श्रवणमस्ति। इह हि द्युलोकप्रभृतयः पञ्चाग्नयः पञ्चाना-माहुतीनामाधारत्वेनाधीताः, तेषाञ्च प्रमुखे 'असौ वाव लोको गौतमाग्निः' इत्युपन्यस्य 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इति श्रद्धा होम्यद्रव्यत्वेनावेदिता, न तत्रा-पो होम्यद्रव्यतया श्रुताः। यदि नाम पर्जन्यादिषु उत्तरेषु

---

ग्न्यादिषु लयस्य मुख्यत्वे जीवस्य गतिभोगयोरयोगात् यत्रैं प्राणा अनु-त्क्रामन्तीति विस्पष्टश्रुतेर्लोमादिगौणफलपाठाच्च गौणत्वमित्यर्थः॥

भूतान्तरयुक्तानामपामुक्तिसम्भवा पुरुषवचस्त्वं तासामाक्षिप्य समाध-त्ते। प्रथम इति। ननु प्रथमपदं व्यर्थं उत्तराग्निष्वपामश्रवणादि-

चतुर्थ्यग्निष्वपां होम्यद्रव्यता परिकल्प्येत परिकल्पितां ता
तेषु होतव्यतयोपात्तानां सोमादीनामव्बहुललोपपत्ते
प्रथमे त्वग्नौ श्रुतां श्रद्धां परित्यज्याश्रुता आपः परिकल्प्य
इति साहसमेतत् । श्रद्धा च नाम प्रत्ययविशेषः प्रसिद्धि
मर्थात् । तस्मादयुक्तः पञ्चम्यामाहुतौ अपां पुरुषभाव
चेन्नैष दोषः । हि यतस्तत्रापि प्रथमेऽग्नौ ता एवापः
शब्देनाभिप्रेयन्ते । कुतः, उपपत्तेः । एवं ह्यादिमध्याव
नसंधानादनाकुलमेतदेकवाक्यमुपपद्यते, इतरथा पुनः
ञ्चम्यामाहुतावपां पुरुषवचस्त्वप्रकारे पृष्टे प्रतिवचनावसरे
प्रथमाहुतिस्थाने यद्यनपो होम्यद्रव्यं श्रद्धां नामावता
ततोऽन्यथा प्रश्नोऽन्यथा प्रतिवचनमित्येकवाक्यता न
इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति
संहरन्नेतदेव दर्शयति । श्रद्धाकार्यं च सोमवृष्ट्यादि
भवद्व्बहुलं लक्ष्यते। सा च श्रद्धाया अपत्वे युक्तिः । का

न्यायाङ्क्षा सोमवृष्ट्यन्तरे ताभावमतत्वादुत्तर एतासां श्रवणमस्ति ।
इत्याह । यदि नामेति । पञ्चाग्निष्वपामाहुतित्वे सिद्धे तासां
माहुतौ पुरुषवचस्त्वं भवेत तत्सिद्धं प्रथमाग्नौ तासामनाहुति
शङ्कार्थः । एवं हि श्रद्धाशब्देनापां ग्रहे सति प्रश्नोत्तरोपसंहार
संधानादेकार्थत्वादेकवाक्यतोपपद्यते, अग्रहे चतुर्थ्यग्निष्वेवापां
त्वाच्चतुर्थ्यामाहुताविति वाच्यं, अतः प्रश्नोपसंहारयोः
श्रवणात् प्रथमाग्नावप्याप एव ग्राह्या इति समाधानार्थः । अन्य
प्रश्नोऽन्यत एतदेवोत श्रद्धाशब्दस्याप्यर्थान्तरत्वं दर्शयतीत्यर्थः । 
तेरित्यस्यार्थान्तरमाह । श्रद्धाकार्यमिति । तस्याः श्रद्धाहुतौ
त्वभवतीत्यादिना श्रद्धासोमादीनां पूर्वपूर्वपरिणामत्वं श्रुतं ततो

नुरूपं हि कार्यं भवति। न च श्रद्धाख्यः प्रत्ययो मनसो जीवस्य वा धर्मः सन् धर्मिणो निष्कृष्य होमायोपादातुं शक्यते पश्वादिभ्य इव हृदयादीनीत्यापः एव श्रद्धाशब्दा भवेयुः, श्रद्धाशब्दश्चाप्सूपपद्यते, वैदिकात् प्रयोगदर्शनात् 'श्रद्धा वा आपः' इति। तनुत्वं च 'श्रद्धासारूप्यं गच्छन्त्यापो देहबीजभूताः' इत्यतः श्रद्धाशब्दाः स्युः, यथा सिंहपराक्रमो नरः सिंहशब्दो भवति। श्रद्धापूर्वककर्मसमवायाच्चाप्सु श्रद्धाशब्द उपपद्यते मञ्चशब्द इव पुरुषेषु। श्रद्धाहेतुत्वाच्च श्रद्धाशब्दोपपत्तिः 'आपो हास्मै श्रद्धां संनमन्ते पुण्याय कर्मणे' इति श्रुतेः॥५॥

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः॥६॥

अथापि स्यात् प्रश्नप्रतिवचनाभ्यामापः श्रद्धादिक्रमेण पञ्चम्यामाहुतौ पुरुषाकारं प्रतिपद्येरन्नाम तत्सम्परिष्वक्ता जीवा रंहेयुः, अश्रुतत्वात्। न ह्यत्रापामिव जीवानां श्रावयिता कश्चिच्छब्दोऽस्ति। तस्माद्रंहति सम्परिष्वक्त इत्ययुक्तमिति चेत्, नैष दोषः। कुतः, इष्टादिकारिणां प्रतीतेः।

---

मानत्वात् श्रद्धया वस्तु प्रत्ययात्मकमुख्यश्रद्धाया आहुतित्वायोगाच्चेत्यर्थः। श्रद्धाशब्दस्याप्सु सूक्ष्मत्वगुणेन वृत्तिमुक्त्वा लक्षणां वक्तुं श्रद्धया वह्निरेव कर्मयोगित्वं हेतुत्वं वा सम्बन्धमाह। श्रद्धापूर्वेति। श्रद्धै यजमानाय। स्नानाद्यर्थमापः श्रद्धां सन्नमन्ते जनयन्तीति तदर्थः॥५॥

अपां गतिमुपेत्याद्भिःसह जीवानां गतिमाशिष्य समाधत्ते। प्रत्याचीत्यादिना। द्युलोकाग्नौ श्रद्धाहुतेः सोमो राजा सम्भवतीत्युक्ता वा-

अथ 'ये इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूम
भिसम्भवन्ति" इत्युपक्रमेणेष्टादिकारिणां धूमादिना पि
यानेन पथा चन्द्रमाप्तिं कथयति 'आकाशाच्चन्द्रमस
सोमराजा इति त एवेहापि प्रतीयन्ते तस्मिन्नेतस्मि
देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भ
इति श्रुतिसामान्यात् । तेषां चाग्निहोत्रदर्शपूर्णमासादि
संसाधनभूता दधिपयःप्रभृतयो द्रवद्रव्यभूयस्त्वात् प्रत्य
वाप: सम्भवन्ति, ता आहवनीये हुताः सूक्ष्मा आहुत्य
पाः सत्यस्तानिष्टादिकारिण आश्रयन्ति । तेषां च
नैधनेन विधानेनान्त्येऽग्नावृत्विजो जुह्वत्यसौ स्वर्गाय
य स्वाहेति । ततस्ताः श्रद्धापूर्वककर्मसमवायिन्यः
मय्य आपोऽपूर्वरूपाः सत्यस्तानिष्टादिकारिणो
परिवेष्ट्यामुं लोकं फलदानाय नयन्तीति यत्तदत्र
नाभिधीयते श्रद्धां जुहुतीति तथायाऽग्निहोत्रे षट्

कर्षेऽपि धूमादिमार्गेण आकाशाच्चन्द्रमसं प्राप्ता इष्टादिकारि
सोमो राजेत्युक्ताः अतः सोमराजशब्दसामान्यादिष्टादिकारिणां
यानां श्रद्धाशब्देनाद्भिः सह गतिरिह श्रद्धाहुतिवाक्ये प्रतीयत
तेषां सूक्ष्माभिर्द्ध्यापूर्वरूपाभिः पञ्चीकृताभिरद्भिः सम्बन्धं वद
विद्रणोति । तेषाञ्चाग्निहोत्रेति । नैधनं मरणं, तन्निमित्त
विधानं, असौ यजमानः, स्वर्गाय गच्छत्विति मन्त्रार्थः । ज्ञाना
त्मतरां गमने श्रुत्यन्तरमाह । तथा चेति । अग्निहोत्रप्रकरणे
याज्ञवल्क्यं प्रति 'नत्वेवैनयोः सायंप्रातराहुत्योरुत्क्रान्तिं
न प्रतिष्ठां न तृप्तिं न पुनरावृत्तिं न लोकं प्रत्युत्थायिनं वेत्थ
षट् प्रश्नाः कृतास्तेषां निर्वचनमपि राज्ञैव ते एते आहुती हुते

निर्वचनरूपेण वाक्यशेषेण 'ते वा एते आहुती हुते उत्क्रामतः' इत्येवमादिनाऽग्निहोत्राहुत्योः फलारम्भाय लोकान्तरप्राप्तिर्दर्शिता। तस्मादाहुतिमयीभिरद्भिः सम्परिष्वक्ता जीवा रंहन्ति स्वकर्मफलोपभोगायेति श्लिष्यते। कथं पुनरिदमिष्टादिकारिणां स्वकर्मफलोपभोगाय रंहणं प्रतिज्ञायते' यावता तेषां धूमप्रतीकेन वर्त्मना चन्द्रमसमधिरूढानामन्नभावं दर्शयति 'एष सोमो राजा तद्देवानामन्नन्तद्देवा भक्षयन्ति' इति। 'ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेतांस्तत्र भक्षयन्ति' इति च समानविषयं श्रुत्यन्तरम्। न च व्याघ्रादिभिरिव देवैर्भक्ष्यमाणानामुपभोगः सम्भवतीत्यत उत्तरं पठति॥

**भाक्तं वाऽनात्मवित्त्वात् तथाहि दर्शयति॥ ७॥**

वाशब्दश्चोदितदोषव्यावर्तनार्थः भाक्तमेषामन्नत्वं न मुख्यं, मुख्ये ह्यन्नत्वे 'स्वर्गकामो यजेत' इत्येवंजातीयकाधिका-

---

क्रामतः तेऽन्तरिक्षद्वारा दिवं गच्छतस्ते दिवमेवाहवनीयं कुर्वाते दिवं तर्पयतस्ते ततः पुनरावर्तेते ततः पृथिव्यां पुरुषे योषिति च हुते पुरुषरूपेणोत्तिष्ठत इति वाक्यशेषेण कृतम्। सम्प्रत्युत्तरसूत्रव्यावर्त्यं शङ्कते। कथमित्यादिना। अत्र सोमाख्यचन्द्रस्यान्नत्वमुक्तं नेष्टादिकारिणामिति भ्रान्तिनिरासार्थं श्रुत्यन्तरमाह। ते चन्द्रमिति। यथा यज्ञे चमसस्थं सोममृत्विज आप्यायस्वेति क्रियावृत्तौ लोट् पुनः पुनराप्याय्य पुनः पुनरपक्षय्य भक्षयन्ति। एवं एतानिष्टादिकारिणोऽन्नरूपान् भक्षयन्ति देवा इत्यर्थः॥

अधिक्रियते पुरुषो विधिना सम्बध्यतेऽनेनेत्यधिकारः फलकामना।

रश्रुतिरुपरुध्येत। चन्द्रमण्डले चेदिष्टादिकारिणामुपभो
न स्यात् किमर्थमधिकारिण इष्टाद्यायासबहुलं क
कुर्युः। अन्नशब्दस्योपभोगहेतुत्वसामान्यात् अनन्नेऽप्युप
यमाणो दृश्यते 'यथा विशोऽन्नं राज्ञां पशवोऽन्नं विशां
इति। तस्मादिष्टस्त्रीपुत्रमित्रादिभिरिव गुणभावोपगतै
ष्टादिकारिभिर्यत्सुखविहरणं देवानां तदेवैषां भक्ष
भिप्रेतं न मोदकादिवच्चर्वणं निगरणं वा। 'न
देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति' इ
देवानां चर्वणादिव्यापारं वारयति। तेषां चेष्टा
कारिणां देवान् प्रति गुणभावोपगतानामप्युपभोग
पद्यते राजोपजीविनामिव परिजनानां, अनात्मवित्त्वा
ष्टादिकारिणां देवोपभोग्यभाव उपपद्यते। तथा हि श्रुति
नात्मविदां देवोपभोग्यतां दर्शयति 'अथ योऽन्यां देवताउ
स्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स दे
नाम्' इति। स चास्मिन्नपि लोक इष्टादिभिः कर्मभिः प्रीण
पशुवद्देवानामुपकरोत्यमुष्मिन्नपि लोके तदुपजीवी तदा
फलमुपभुञ्जानः पशुवदेव देवानामुपकरोतीति गम्य
अनात्मवित्त्वात् तथा हि दर्शयति इत्यस्यापरा व्याख्या

---

भाष्यानर्थक्यपरिहाराय अन्नत्वं गौणमिति भावः। केन दोषेण
देवभोग्यतेत्यत आह। अनात्मवित्त्वादिति। यथा पशुभिः
न इह भेदधीमान् देवानां भोग्य इत्यर्थः। आत्मशब्दस्य
मुख्यार्थं व्याख्याय प्रकृतपञ्चाग्नयः स्वकृतात्मत्वेनोपचरिता इति
व्याख्यानान्तरमाह। अनात्मवित्त्वादिना। विद्याशून्यस्यान्नत्वं न मुख्य

अनात्मविदो ह्येते केवलकर्मिण इष्टादिकारिणो न ज्ञानकर्मसमुच्चयानुष्ठायिनः । पञ्चाग्निविद्यामिहात्मविद्येत्युपचरन्ति प्रकरणात् पञ्चाग्निविद्याविहीनत्वाच्चेदमिष्टादिकारिणां गुणवादेनानात्मत्वमुद्भाव्यते पञ्चाग्निविद्याप्रशंसायै । पञ्चाग्निविद्या इह विधित्सिता वाक्यतात्पर्यावगमात् । तथा हि श्रुत्यन्तरं चन्द्रमण्डले भोगसद्भावं दर्शयति 'स सोमलोके भूतिमनुभूय पुनरावर्तते' इति । तथान्यदपि श्रुत्यन्तरं 'अथ ये शतं पितॄणां जितलोकानामानन्दाः स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसम्पद्यन्ते' इतीष्टादिकारिणां देवैः संवसतां भोगप्राप्तिं दर्शयति । एवं भाक्तत्वादन्नभाववचनस्येष्टादिकारिणो जीवा रंहन्तीति प्रतीयन्ते । तस्माद्रंहति सम्परिष्वक्त इति युक्तमेवोक्तम् ॥

## कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च ॥ ८ ॥

इष्टादिकारिणां धूमादिना वर्त्मना चन्द्रमण्डलमधिरूढानां भुक्तभोगानां ततः प्रत्यवरोह आम्नायते 'तस्मिन् यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते यथेत-

---

श्रुत्यन्तरार्थं सूत्रशेषं व्याचष्टे । तथा हीति । एवं गतिपर्यालोचनया वैराग्यमिति सिद्धम् ॥

इदानीं गत्यनन्तरभाविनीमागतिं निरूपयति । कृतात्यय इति । भोक्तव्यकर्मसमाप्त्यानन्तर्यमथशब्दार्थः । यथेतमित्यारभ्य श्वादियोनिभिन्नं वाक्यं यावत्तावदाम्नायत इति योजना । अत्र यावत्सम्पातमिति

मित्यारभ्य यावद्रमणीयचरणा ब्राह्मणादियोनिमापद्येरन् कपूयचरणाः श्वादियोनिम्' इति। तत्रेदं विचार्यते निरनुशया भुक्तकृत्स्नकर्माणोऽवरोहन्त्याहोस्वित्सानुशया इति। किन्तावत् प्राप्तं निरनुशया इति। कुतः यावत्सम्पातमिति विशेषणात्। सम्पातशब्देनात्र कर्माशय उच्यते। सम्पतत्यनेनास्माल्लोकादमुं लोकं फलोपभोगायेति। यावत्सम्पातमुषित्वेति च कृत्स्नस्य तस्य तत्रैव भुक्ततां दर्शयति। 'तेषां यदा तत्पर्यवैति' इति च श्रुत्यन्तरेणैवार्थः प्रदर्श्यते। स्यादेतत् यावदमुष्मिँल्लोके उपभोग्यं कर्म तावदुपभुङ्क्त इति कल्पयिष्यामीति। नैवं कल्पयितुं शक्यते यत्किञ्चेत्यन्यत्र परामर्शात्। 'प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्। तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे' इत्यपरा श्रुतिः यत्किञ्चेत्यविशेषपरामर्शेन कृत्स्नस्येह कृतस्य कर्मणस्तत्र क्षयिततां दर्शयति। अपि च प्रायणमनारब्धफलस्य कर्मणोऽभिव्यञ्जकम् प्राक् प्रायणादारब्धफलेन कर्मणा प्रतिबद्धस्याभिव्यक्त्यनुपपत्तेः। तच्चाविशेषात् यावत् किञ्चिदनारब्धफलं तस्य सर्वस्याभिव्यञ्जकं, न हि साधारणे निमित्ते नैमित्तिकमसाधारणं भवितुमर्हति। न ह्यविशिष्टे प्रदीपसन्निधौ घटोऽभि-

---

विशेष्याद्रमणीयचरणा इति वाक्याच्च संशयमाह। तत्रेति। अत्र कर्म, अत्र पूर्वपक्षे कर्माभावेनागतेरनियमात् वैराग्यादार्ढ्यं, सिद्धान्ते कर्मसत्त्वेनागतिनियमाद्वैराग्यदार्ढ्यमिति भेदः। तेषामिति। यदा तत्कर्म पर्यवैति विपरिक्षीणं भवति तदा पुनरावर्तन्त इति श्रु-

ज्यते न पट इत्युपपद्यते। तस्मान्निरनुशया अवरोहन्तीत्येवं प्राप्ते ब्रूमः। कृतात्ययेऽनुशयवानिति। येन कर्मवृन्देन चन्द्रमसमारूढाः फलोपभोगाय तस्मिन्नुपभोगेन क्षयिते तेषां यदम्मयं शरीरं चन्द्रमस्युपभोगायारब्धं तदुपभोगक्षयदर्शनशोकाग्निसम्पर्कात् प्रविलीयते सवितृकिरणसम्पर्कादिव हिमकरके, हुतभुगर्चिःसम्पर्कादिव घृतकाठिन्यम्। ततः कृतात्यये कृतस्येष्टादेः कर्मणः फलोपभोगेनोपक्षये सति सानुशया एवेममवरोहन्ति। केन हेतुना दृष्टस्मृतिभ्यामित्याह। तथा हि प्रत्यक्षा श्रुतिः सानुशयानामवरोहं दर्शयति 'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वा' इति। चरणशब्देनात्रानुशयः सूच्यत इति वर्णयिष्यते। दृष्टश्चायं जन्मनैव प्रतिप्राण्युच्चावचरूप उपभोगः प्रविभज्यमान आकस्मिक-

---

रेवापि कृत्स्नकर्म चन्द्रलोके भुक्त्वा मुच्यत इत्यर्थः। यावत् पदस्कन्धो न भुक्तः श्रुत्यन्तरं दर्शयतीत्याह। नैर्गतेति। अथ नरो यत्किञ्चिदिह लोके कर्म करोति तस्यान्तं फलं परलोके प्राप्य कर्मार्थं पुनरायातीति श्रुत्यर्थः। कर्माभावे श्रुतिमुक्त्वा युक्तिमाह। अपि चेति। अभिव्यक्तिः फलोन्मुखता, मरणेनाभिव्यक्तस्य सर्वस्य कर्मणः परलोकभोगस्यावश्यम्भावात् कर्माभाव इत्यर्थः। चरमशरीरमात्रमवरोह इति प्राप्ते सिद्धान्तसूत्रं व्याचष्टे येनेत्यादिना। तत्रावरोहतां जीवानां मध्ये ये केचिदिह कर्मभूमौ रमणीयचरणाः पुण्यकर्माणः पुण्ययोनिभाज इति

त्वासम्भवादनुशयसद्भावं सूचयति। अभ्युदयप्रलयवादं सुकृतदुष्कृतहेतुत्वस्य सामान्यतः शास्त्रेणावगमितत्वात् स्मृतिरपि वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्त इति सानुशयानामवरोहं दर्शयति। कः पुनरनुशयो नामेति, केचित्तावदाहुः स्वर्गार्थस्य कर्मणो भुक्तफलस्यावशेषः कश्चिदनुशयो नाम भाण्डानुसारिस्नेहवत्। यथा हि स्नेहभाण्डं रिच्यमानं न सर्वात्मना रिच्यते भाण्डानुसार्येव कश्चित् स्नेहशेषोऽवतिष्ठते तथानुशयोऽपीति। ननु कार्यविरोधित्वादद्दृष्टस्य न भुक्तफलस्यादशेषावस्थानं न्याय्यम्। नायं दोषः। न हि सर्वात्मना भुक्तफलत्वं कर्मणः प्रतिजानीमहे। ननु निरवशेषकर्मफलोपभोगाय चन्द्रमण्डलमारूढाः। बाढं, तथापि स्वल्पकर्मावशेषमात्रेण तत्रावस्थातुं न शक्यते। यथा किल कश्चित् सेवकः सकलैः सेवोपकरणैः राजकुलमुपसृप्तश्चिरप्रवासात् परिक्षीणबहूपकरणश्छत्रपादुका

यत् स्थास्यो हि प्रयत्नं शोध्यर्थः। कपूयं पापम्। इत्यदः ...समर्थमुक्तार्थान्तरमाह। इष्टेति। पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेत्यादिशास्त्रेण सुखदुःखयोर्धर्माधर्महेतुकत्वमवगतम्। ... जन्मारभ्य दृष्टो भोगः कर्महेतुकभोगत्वात् स्वर्गभोगवत् इत्यनुमानं ... विपक्षे च हेत्वभावात् भोगस्याकस्मिकत्वप्रसङ्ग इत्यर्थः। स्मृता वर्णाश्चाश्रमिणः प्रेत्य गत्वा लोकान्तरे कर्मफलं भुक्त्वा ततः शेषेण भुक्ता... कर्मणा अनुशयाख्येन पुनर्जन्म प्रतिपद्यन्ते इति सम्बन्धः। विशिष्ट... देशादयो मेधान्ता दश गुणा येषु ते तथोक्ताः। श्रुतं शास्त्रं, वृत्तं आचारः। सामिसतानुशयं वक्तुं पृच्छति। कः पुनरिति। इतरः

साचावशेषेण राजकुलेऽवस्थातुं शक्नोत्येवमनुशयलेशमात्रपरिग्रहो न चन्द्रमण्डलेऽवस्थातुं शक्नोतीति। न चैतद्युक्तमिव, न हि स्वर्गार्थस्य कर्मणो भुक्तफलस्यावशेषानुवृत्तिरुपपद्यते कार्त्स्न्यविरोधित्वादित्युक्तम्। नन्वेतदप्युक्तं न स्वर्गफलस्य कर्मणो निखिलस्य भुक्तफलत्वं भवतीति। तदेतदपेशलम्। स्वर्गार्थं किल कर्म स्वर्गस्थस्यैव स्वर्गफलं निखिलं जनयति स्वर्गच्युतस्यापि कञ्चित् फललेशं जनयतीति न शब्दप्रमाणकानां ईदृशी कल्पनावकल्पते। स्नेहभाण्डे तु स्नेहलेशानुवृत्तिर्दृष्टत्वादुपपद्यते। तथा सेवकस्योपकरणलेशानुवृत्तिर्दृश्यते न त्विह तथा स्वर्गफलस्य कर्मणो लेशानुवृत्तिर्दृश्यते नापि कल्पयितुं शक्यते, स्वर्गफलत्वशास्त्रविरोधात्। अवश्यञ्चैतदेवं विज्ञेयं न स्वर्गफलस्येष्टादेः कर्मणो भाण्डानुसारिस्नेहवदेकदेशोऽनुवर्तमानोऽनुशय इति। यदि हि येन सुकृतेन कर्मणेष्टादिना स्वर्गमन्वभूवन् तस्यैव कश्चिदेकदेशोऽनुशयः कल्प्येत ततो रम-

---

शेषः स्वर्गे भोगे सति भुक्तस्य कर्मणो लेशोऽनुशयस्तद्वानवरोहति, भाण्डे स्नेहलेशस्य दृष्टत्वात्। ततः शेषेणेति कृतैकदेशव्याख्यानात्। कर्मादित्यादिना। रिच्यमानं स्नेहेन वियुज्यमानम्। ननु भोगनाशकत्वात् कर्मणो लेशो न युक्त इति शङ्कते। नन्विति। कृत्स्नकर्मणो भोगे जाते नाशः स्यात् न तु भोगो जात इति परिहारार्थो भोगो न जायत इत्ययुक्तमिति शङ्कते। नन्विति। भोगः सावशेषो जात इति समाधत्ते। तदेतदित्यादिना। इष्टैकदेशव्याख्यानं दूषयति। न हीति। स्वर्गकामो यजेतेत्यादिशास्त्रेण स्वर्गभोगार्थं कर्म चोदितं, तच्छेषस्य भ-

णीय एवैकोऽनुशयः स्याच्च विपरीतस्तर्ह्ययमनुशयविभागश्रुतिरुपरुध्येत 'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्... कपूयचरणाः' इति। तस्मादामुष्मिकफले कर्मजाते उपभुक्ते अवशिष्टमैहिकफलं कर्मान्तरजातं अनुशयस्तद्वन्तोऽवरोहन्तीति। यदुक्तं यत्किञ्चेत्यविशेषपरामर्शात् सर्वस्येह कृतस्य कर्मणः फलोपभोगेनान्तं प्राप्य निरनुशया अवरोहन्तीति। नैतदेवं, अनुशयसद्भावस्यावगमितत्वात्। यत्किञ्चिदिह कृतमामुष्मिकफलं कर्मारब्धभोगं तत्सर्वं फलोपभोगेन क्षपयित्वेति गम्यते। यदप्युक्तं प्रायणमनभिव्यक्तानारब्धफलं कृत्स्नमेव कर्माभिव्यनक्ति, तत्र केनचित् कर्मणामुष्मिन् लोके फलमारभ्यते केनचिदस्मिन्नित्ययं विभागो न सम्भवतीति। तदप्यनुशयसद्भावप्रतिपादनेन प्रत्युक्तम्। अपि च केन हेतुना प्रायणमनारब्धफलस्य कर्मणोऽभिव्यञ्जकं प्रतिज्ञायत इति वक्तव्यम्। आरब्ध-

---

त्वं भोगहेतुत्वे शास्त्रविरोध इत्यर्थः। किञ्च स्वर्गहेतुकर्मणः... कृत्स्नयोन्यापत्तिश्रुतिविरोध इत्याह। अनुशयश्चेति। स्वाभिमतमाह। तस्मादिति। पूर्वपक्षबीजमनूद्य दूष्यति। यदिति। क्षपयित्वा पुनरागच्छतीति प्राप्यान्तमिति वाक्येन गम्यत इति ... जन्मारम्भ इहभोगलिङ्गानुमितानुशयवत्तया रमणीयकपूयचरणश्रुतेरविशेषपरया विरोधात् यत्किञ्चेति यावत्स्वर्गफलमिति ... न्यायवद्योरामुष्मिकविषयत्वेन सङ्कोचो न्याय्य इति भावः। अयं कृत्स्नकर्माभिव्यञ्जकमित्ययुक्तं उक्तानुशयश्रुतिविरोधादित्याह। ... बलवदनारब्धकर्मप्रतिबन्धाच्च न कृत्स्नकर्माभिव्यक्तिरित्याह। ... तत्रादिना। तस्य कृत्स्नकर्मव्यञ्जकत्वे हेतुर्नास्तीति भावः। ... न्तरं शङ्कते। आरब्धेति। आरब्धवदनारब्धस्यापि ...

कर्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तेस्तदुपशमात् प्रायणकाले वृत्त्युद्भवो भवतीति यदुक्तं तत्र वक्तव्यं, यथा तर्हि प्राक् प्रायणादारब्धफलेन कर्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तिः, एवं प्रायणकालेऽपि विरुद्धफलस्यानेकस्य कर्मणो युगपत्फलारम्भासम्भवाद्बलवता प्रतिबद्धस्य दुर्बलस्य वृत्त्युद्भवानुपपत्तिरिति। न ह्यनारब्धफलत्वसामान्येन जात्यन्तरोपभोग्यफलमप्यनेकं कर्मैकस्मिन् प्रायणे युगपदभिव्यक्तं सदेकां जातिमारभत इति शक्यं वक्तुं, प्रतिनियतफलत्वविरोधात्, नापि कस्यचित् कर्मणः प्रायणेऽभिव्यक्तिः कस्यचिदुच्छेद इति शक्यते वक्तुं, ऐकान्तिकफलत्वविरोधात्। न हि प्रायश्चित्तादिभिर्हेतुभिर्विना कर्मणामुच्छेदः सम्भाव्यते। स्मृतिरपि विरुद्धफलेन कर्मणा प्रतिबद्धस्य कर्मान्तरस्य चिरमप्यवस्थानं दर्शयति—

---

त्वात् न सर्वकर्मणः फलदानायाभिव्यक्तिरिति समाधत्ते। यथेति। अनारब्धफलत्वाविशेषात् सर्वकर्मणामभिव्यक्तिमाशङ्क्य मिथो विरुद्धस्वर्गनरकादिदेहफलानामेकदेहारम्भकत्वासम्भव उक्तस्तं विवृणोति। नहीति। अस्तु तर्हि दुर्बलस्य कर्मणो नाश इत्यत आह। नापीति। नाभुक्तं क्षीयते कर्मेत्यैकान्त उत्सर्गः, स च प्रायश्चित्तब्रह्मज्ञानध्यानैर्बाध्यते न मरणमात्रेणेत्यर्थः। मरणेन दुर्बलकर्मविनाशे मानमाह। स्मृतिरिति। कर्मनाशपक्षं निरस्य प्रकृतकृत्स्नकर्माभिव्यक्तिपक्षे दोषान्तरमाह। यदि चेति। कृत्स्नकर्मणामेकस्मिन् देवादिजन्मनि भोगेन क्षयात् न जन्मान्तरं स्यात् ज्ञानाभावात् न मुक्तिरित्यन्धेरस्य कदा दशा स्यादित्यर्थः।

"कदाचित्सुकृतं कर्म कूटस्थमिह तिष्ठति।
पच्यमानस्य संसारे यावद्दुःखाद्विमुच्यते" ॥

इत्येवंजातीया। यदि च कृत्स्नमनारब्धफलं एकस्मिन् प्रायणेऽभिव्यक्तं सदेकां जातिमारभेत ततः र्गनरकतिर्यग्योनिषु अधिकारानवगमाद्धर्माधर्मानु निमित्ताभावान्नोत्तरा जातिरुपपद्येत। ब्रह्महत्यादे चैकैकस्य कर्मणोऽनेकजन्मनिमित्तत्वं स्मर्यमाणमुपरु न च धर्माधर्मयोः स्वरूपफलसाधनादिसमधिगमे शा तिरिक्तं कारणं शक्यं संभावयितुम्। न च दृष्टफलस्य क कारीर्यादेः प्रायणमभिव्यञ्जकं सम्भवतीत्यप्रापिकेयं प्र णस्याभिव्यञ्जकत्वकल्पना। प्रदीपोपन्यासोऽपि कर्मबला

"श्वसूकरखरोष्ट्राणां गोऽजाविमृगपक्षिणाम्।
चण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति" ॥

इत्यादिस्मृतिविरोधाच्च न सर्वकर्मणामेकजन्मारम्भकत्वमि ब्रह्मेति। नन्वेकस्य कर्मणः कथमनेकजन्मफलकत्वं धर्मादिव न चेति। किञ्च व्यञ्जकत्वेऽपि मरणस्य किं सर्वकर्मव्यञ्जकत्वं यत्किञ्चित्कर्मव्यञ्जकत्वं, नाद्यः, इह सतकारीर्यादेरव फल व्यञ्जकत्वासम्भवादित्याह। न चेति। द्वितीयं निरस्यन् प्रदी विघटयति। प्रदीपेति। रूपाणां प्रदीपवत् मरणं न सर्व कर्मणो व्यञ्जकं किन्तु प्रबलकर्मप्रतिबन्धाभावे दुर्बलं व्यज्यत इ मरणस्य व्यञ्जकत्वानङ्गीकारेण दीपदृष्टान्तो निरस्तः, अङ्गीकारे दृष्टान्त इत्याह। स्थूलेति। सूक्ष्ममनुद्भूतरूपमिति मरणे सर्वकर्मा दिविरिति शेषः। एवं सर्वकर्मणाम् एकजन्मारम्भ इत्येकभविक इति मतनिरासमुपसंहरति। तस्मादिति। चरणश्रुत्या ततः शेषे सत्त्वा प्रबलप्रतिबन्धादित्यन्यायेन चानभिव्यक्तकर्मबाहुल्यादिवा कान्तद्युपपत्त्याऽङ्गीकार्यं एकभविक इत्यत आह। शेषेति। कर्मा चष्टे। ते चेत्यादिना। अवरोहमार्गे इत्थं श्रूयते 'तस्मिन् या

दर्शनेनैव प्रतिनीतः, स्थूलसूक्ष्मरूपाभिव्यक्तिवच्चेदं द्रष्टव्यम्। यथा हि प्रदीपः समानेऽपि सन्निधाने स्थूलरूपमभिव्यनक्ति न सूक्ष्मं, एवं प्रायणं समानेऽप्यनारब्धफलस्य कर्मजातस्य प्राप्तावसरत्वे बलवतः कर्मणो वृत्तिमुद्भावयति न दुर्बलस्येति। तस्माच्छ्रुतिस्मृतिन्यायविरोधादश्लिष्टोऽयमशेषकर्माभिव्यक्त्यभ्युपगमः, शेषकर्मसद्भावेऽनिर्मोक्षप्रसङ्ग इत्ययमप्यस्थाने सम्भ्रमः सम्यग्दर्शनादशेषकर्मक्षयश्रुतेः। तस्मात् स्थितमेतदनुशयवन्तोऽवरोहन्तीति। ते चावरोहन्तो यथेतमनेवं चावरोहन्ति। यथेतमिति यथागतमित्यर्थः। अनेवमिति तद्विपर्ययेणेत्यर्थः। धूमाकाशयोः पितृयाणेऽध्वन्युपात्तयोरवरोहे सङ्कीर्तनात् यथेतशब्दाच्च यथागतमिति प्रतीयते, रात्र्याद्यसङ्कीर्तनादभ्राद्युपसङ्ख्यानाच्च विपर्ययोऽपि प्रतीयते॥

---

मुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षन्ति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्तेऽतो वै दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति तद्य इह रमणीयचरणा रमणीयां योनिमापद्यन्ते" इति। धूमाध्वना यथेतं यथागतं तमेतमध्वानं पुनरायान्तीत्युक्त्वा धूमादिरूपपितृमार्गस्य रात्र्यादिकं नोक्तं अधिकं चाभ्रादिकमुक्तमिति मत्वा व्याचष्टे— यथेतमनेवञ्चेति। अवशिष्टमत्रार्थेऽग्रे स्फुटीभविष्यति॥

क्वचित् श्रुतिस्थचरणशब्दमाक्षेपपूर्वकं व्याचष्टे। चरणादिति चेदिति।

**चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥**

अथापि स्यात् या श्रुतिरनुशयसद्भावप्रतिपादनायो दाहृता 'तद्य इह रमणीयचरणाः' इति सा खलु चरणा न्यापत्तिं दर्शयति नानुशयादन्यच्चरणमन्योऽनुशयः, चरणं चारित्रमाचारः शीलमित्यनर्थान्तरम् । अनुशयस्तु सुकृतदुष्कृतं कर्मणोऽतिरिक्तं कर्माभिप्रेतम् । श्रुतिश्च कर्मचरणे भेदेन व्यपदिशति । 'यथाचारी तथा भवति' इति 'यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि' इति च । तस्माच्चरणाद्योन्यापत्तिश्रुतेर्नानुशयसिद्धिरिति चेन्नैष दोषः यतोऽनुशयोपलक्षणार्थैवैषा चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते ।

**आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥**

स्यादेतत्, कस्मात् पुनश्चरणशब्देन श्रौतं शीलं विहाय लाक्षणिकोऽनुशयः प्रत्याय्यते । ननु शीलस्यैव तु श्रौतस्य वि

---

"अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानञ्च शीलमेतद्विदुर्बुधाः" ॥ इति-
स्मृतावक्रोधादयः शास्त्रार्थज्ञानरूपं शीलं सर्वकर्माङ्गत्वं चरणपदमङ्गिनः श्रौतादिकर्मणो लक्षकं 'कर्मशेषेणोत्तरावस्था प्नुयुः' इति कर्मलक्षणयैव तदभिलापूर्वस्यानुशयसिद्धिरिति कार्ष्णाजिनिमतम् ॥

तदेव शङ्कासमाधानाभ्यामाह । आनर्थक्यमिति चेदित्यादिना चरणशब्दवाच्यस्य सदाचारस्यानुलक्षणा युक्तेति यद्धित्वैव न हि

प्रतिषिद्धस्य वाऽसाधुरूपस्य शुभाशुभयोन्यापत्तिः फलं भविष्यति, अवश्यं च शीलस्यापि किञ्चित् फलमभ्युपगन्तव्यम्। अन्यथा ह्यानर्थक्यमेव शीलस्य प्रसज्येतेति चेत्। नैष दोषः। कुतस्तदपेक्षत्वात्। इष्टादि हि कर्मजातं चरणापेक्षम्। न हि सदाचारहीनः कश्चिदधिकृतः स्यात्। 'आचारहीनं न पुनन्ति वेदाः' इत्यादिस्मृतिभ्यः। पुरुषार्थत्वादप्याचारस्य नानर्थक्यम्। इष्टादौ हि कर्मजाते फलमारभमाणे तदपेक्ष एवाचारस्तत्रैव कञ्चिदतिशयमारप्स्यते। कर्म च सर्वार्थकारीति श्रुतिस्मृतिप्रसिद्धिः, तस्मात् कर्मैव शीलोपलक्षितमनुशयभूतं योन्यापत्तौ कारणमिति कार्ष्णाजिनेर्मतम्। न हि कर्मणि सम्भवति शीलाद्योन्यापत्तिर्युक्ता। न हि पद्भ्यां पलायितुं पारयमाणो जानुभ्यां रंहितुमर्हतीति॥

---

प्रतिषिद्धं शीलं क्रोधानृतादिरूपं। किन्तु शीलस्य निष्फलत्वायोगाद् तद्योन्यापत्तिस्तस्यैव फलं नानुशयस्येत्यत आह। अनर्थक्यमिति। वेदास्तदर्थकर्म चाचारं विना न फलन्तीति सदाचारस्य शीलस्य कर्माङ्गत्वान्न पृथक्फलापेक्षा अङ्गिफलेनार्थवत्त्वात्। न चाङ्गमात्राद्योन्यापत्तिः फलमिति वाच्यं। अङ्गस्य फलासम्भवेन मुख्यार्थस्याचारस्य पक्षस्यायोगाल्लक्षणा युक्तेति समाधानार्थः। यद्वाचारस्य स्नानादेः पुरुषसंस्कारतया पुरुषार्थत्वं तदाप्यविरोध इत्याह। पुरुषार्थत्वेऽपीति। अङ्गाश्रयोपास्तिवदाचारोऽति-शयार्थः। अस्तु तर्हि शीलाख्याचारादेव योन्यापत्तिरित्यत आह। पुण्यो वै पुण्येन कर्मणेत्यादि श्रुत्यादिविरोधाद्बादरिमतमाह। कर्मैवेति। चरणादिः शब्दो यद्यपि क्रोधादिरूपं शीलं साधारणधर्मात्मकं निषेधरूपात् कर्मणोऽभिन्नं तथापि चरणाचारशब्दौ कर्मसामान्यवाचिनावेव न शीलवाचकाविति न लक्षणावसर इति बादरिमतम्॥

सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

बादरिस्त्वाचार्यः सुकृतदुष्कृते एव चरणशब्देन प्रतीयेते इति मन्यते। चरणमनुष्ठानं कर्मेत्यनर्थान्तरम्। तथा ह्यविशेषेण कर्ममात्रे चरतिः प्रयुज्यमानो दृश्यते। यो हीष्टादिलक्षणं पुण्यं कर्म करोति तं लौकिका आचक्षते धर्मं चरत्येष महात्मेति। आचारोऽपि धर्मविशेष एव, भेदव्यपदेशस्तु कर्मचरणयोर्ब्राह्मणपरिव्राजकन्यायेनाप्युपपद्यते। तस्माद्रमणीयचरणाः प्रशस्तकर्माणः कपूयचरणा निन्दितकर्माण इति निर्णयः ॥

अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

इष्टादिकारिणश्चन्द्रमसं गच्छन्तीत्युक्तम्। ये त्वितरेऽनिष्टादिकारिणस्तेऽपि किं चन्द्रमसं गच्छन्ति उत न गच्छन्तीति चिन्त्यते। तत्र तावदाह। इष्टादिकारिण

---

मुख्यसिद्धान्तमाह। सुकृतेति। चरणशब्दार्थमुपसंहरति। आचारोऽपीति। कर्मण एवाचारत्वे यथाकारीत्यादिभेदोऽस्ति कथमित्यत आह। भेदव्यपदेश इति। निरुपपदाचारशब्दात् सदाचारद्योतिभाति कस्तत्समभिव्याहृतः कर्मसामान्यवाचको यथाकारीतिचरतिर्विशेषपरः एवमनवद्यानि कर्माणीति सामान्यतः, अस्माकं सुचरितानि विशेष इति विवेकः, तस्मादनुशयवतामागत्याशङ्काभावानुसन्धानादेव सिद्धमिति सिद्धम् ॥

एवं मुमुक्षूणां गत्यागतिचिन्तया वैराग्यं निरूप्य पापिनां गतिं निरूपयति। अनिष्टादिकारिणामपीति। ये के चेदमधिकारिणः ... गमनं जनानामिति श्रुतेश्च संशये प्रथमाधिकरणेन सिद्धमित्याशङ्क्य

चन्द्रमसं गच्छन्तीत्येतन्न, कस्मात्, यतोऽनिष्टादिकारिणामपि चन्द्रमण्डलं गन्तव्यत्वेन श्रुतम् । तथा ह्यविशेषेण कौषीतकिनः समामनन्ति 'ये वै केचास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इति । देहारम्भोऽपि च पुनर्जायमानानां नान्तरेण चन्द्रप्राप्तिमवकल्प्येत, पञ्चम्यामाहुतावित्याहुतिसङ्ख्यानियमात्, तस्मात् सर्व एव चन्द्रमसमासीदेयुः । इष्टादिकारिणामितरेषाञ्च समानगतित्वं न युक्तमिति चेत्, न, इतरेषां चन्द्रमण्डले भोगाभावात् ॥

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥

तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति सर्वे चन्द्रमसं गच्छन्तीति । कस्मात्, भोगायैव हि चन्द्रारोहणं न निष्प्रयोजनं नापि प्रत्यवरोहायैव, यथा कश्चिद्वृक्षमारोहति पुष्पफलोपादानाय न निष्प्रयोजनं नापि पतनायैव । भोगश्चानिष्टादिकारिणां चन्द्रमसि नास्तीत्युक्तं, तस्मादिष्टादिकारिण एव चन्द्रमसमारोहन्ति नेतरे तु संयमनं यमालयमवगाह्य स्वदुष्कृतानुरूपा यामीर्यातनाः अनुभूय

पूर्वपक्षसूत्रं व्याचष्टे। तत्रेत्यादिना। यमराजं पापिजनानां संयमनाख्यं, दक्षिणस्थीयं भवनमिति सूत्रार्थः। पूर्वपक्षे पुण्यवतामेव चन्द्रगतिरिति नियमाभावात् पुण्यवैयर्थ्यं परमसुकृतावसदार्थ्यञ्चेति फलं, सिद्धान्ते पापिनां चन्द्रलोकदर्शनमपि नास्तीति पुण्यार्थकर्त्यं वैराग्यदार्ढ्यञ्चेति फलं, पञ्चम्यामौ देहारम्भ इति नियमात् पापिनामपिप्रथमद्युलोकाग्निप्राप्तिरावश्यकेत्याह। देहारम्भइति। पापिनां स्वर्गभोगाभावेऽपि मार्गान्तराभावाच्चन्द्रगतिरितिभावः॥

पुनरेवमं लोकं प्रत्यवरोहन्ति, एवम्भूतौ तेषामारोहा-वरोहौ भवतः। कुतः तद्गतिदर्शनात्। तथा हि। यम-वचनस्वरूपा श्रुतिः प्रयतामनिष्टादिकारिणां यमवश्यतां दर्शयति—

'न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्। अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे'। इति। 'वैवस्वतं सङ्गमनं जनानां' इत्येवंजातीयका च यमवश्यताप्राप्तिलिङ्गं भवति ॥

## स्मरन्ति च ॥ १४ ॥

अपि च मनुव्यासप्रभृतयः शिष्टाः संयमने पुरे यमायत्तं कपूयकर्मविपाकं स्मरन्ति नाचिकेतोपाख्यानादिषु ॥

## अपि च सप्त ॥ १५ ॥

अपि च सप्त नरका रौरवप्रमुखा दुष्कृतफलोपभोग-भूमित्वेन स्मर्यन्ते पौराणिकैः, ताननिष्टादिकारिणः प्राप्नु-वन्ति, कुतस्ते चन्द्रं प्राप्नुयुरित्यभिप्रायः। ननु विरुद्धमिदं यमायत्ता यातनाः पापकर्माणोऽनुभवन्तीति, यावता तेषु रौरवादिषु अन्ये चित्रगुप्तादयो नानाधिष्ठातारः स्मर्यन्ते इति, नेत्याह ॥

---

सिद्धान्तसूत्रं व्याचष्टे। तुशब्द इत्यादिना। संयमने यमलोके यमकृता यातनाः अनुभूयावरोहन्तीत्येवं आरोहावरोहाविति योजना ज्ञेया। यमवश्यतां स्मृत्वा गच्छताम्। सम्यक् परस्तात् प्राप्यत इति संपरायः परलोकः, तदुपायः साम्परायः, बालमज्ञं, विशेषतो वित्तमोहेन मूढं मोहात् प्रमादं कुर्वन्तं प्रति न भाति। स च बालोऽयं स्त्र्यादिर्लोकोऽस्ति न परलोकोऽस्तीति मानी स मे मम यमस्य वशमापद्यते।

## तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

तेष्वपि सप्तसु नरकेषु तस्यैव यमस्याधिष्ठातृत्वव्यापाराभ्युपगमादविरोधः। यमप्रयुक्ता एव हि ते चित्रगुप्तादयोऽधिष्ठातारः स्मर्यन्ते॥

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

पञ्चाग्निविद्यायां 'वेत्थ यथासौ लोको न सम्पूर्यते' इत्यस्य प्रश्नस्य प्रतिवचनावसरे श्रूयते,'अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते' इति। तत्रैतयोः पथोरिति विद्याकर्मणोरित्येतत्। कस्मात् प्रकृतत्वात्। विद्याकर्मणी हि देवयानपितृयानयोः पथोः प्रतिपत्तौ प्रकृते। 'तद् य इत्थं विदुः' इति विद्या तया प्रतिपत्तव्यो देवयानः पन्थाः प्रकीर्तितः, 'इष्टापूर्ते दत्तमिति' कर्म तेन प्रतिपत्तव्यः पितृयाणः पन्थाः प्रकीर्तितः, तत्प्रक्रियायामथैतयोः पथोर्न कतरेण च नेति

---

पापिनां यमवश्यतावादिश्रुतिस्मृतिवशात् 'ये वै केच' इत्यविशेषश्रुतिरिष्टादिकारिविषयत्वेन व्याख्येयेति भावः ॥

सूत्रत्रयस्य भाष्यं सुबोधम् ॥

यदुक्तं मार्गान्तराभावात् पापिनामपि चन्द्रगतिरिति तन्न, तृतीयमार्गश्रुतेरित्याह। विद्याकर्मणोरिति। मार्गद्वितयोक्त्यनन्तरं तृतीयमार्गोपक्रमारम्भार्थं तुशब्दः। एतयोर्विद्याकर्मणोः पथिद्वयसाधनयोरन्यतरेणापि साधनेन ये नरा न युक्तास्ते [illegible] न भूतानि भवन्ति, म्रियस्वेति घोरः, तेन पापिनां चन्द्रगत्यभाव-

श्रुतम्। एतदुक्तं भवति, ये च न विद्यासाधनेन देवयाने पथ्यधिकृताः नापि कर्मणा पितृयाने तेषामेष क्षुद्रजन्तु लक्षणोऽसकृदावर्ती तृतीयः पन्था भवतीति, तस्मादपि ना निष्टादिकारिभिश्चन्द्रमाः प्राप्यते। स्यादेतत्, तेऽपि चन्द्र मसमारुह्य ततोऽवरुह्य क्षुद्रजन्तुत्वं प्रतिपत्स्यन्ते इति, तद नास्ति, आरोहानर्थक्यात्। अपि च सर्वेषु प्रयत्सु चन्द्रलोकं प्राप्नुवत्स्वसौ लोकः प्रयद्भिः सम्पूर्येतेत्यतः प्रश्नविरुद्धं प्रति वचनं प्रसज्येत। तथाहि प्रतिवचनं दातव्यं यथासौ लोको न सम्पूर्यते। अवरोहाभ्युपगमादसम्पूरणोपपत्तिरिति चे न, अश्रुतत्वात्। सत्यं अवरोहादप्यसम्पूरणमुपपद्यते। श्रु तिस्तु तृतीयस्थानसङ्कीर्तनेनासम्पूरणं दर्शयति 'एतत् तृ तीयं स्थानं तेनासौ लोको न सम्पूर्यते' इति, तेनानारोहा देवासम्पूरणमिति युक्तम्। अवरोहस्येष्टादिकारिष्वप्यवि शिष्टत्वे सति तृतीयस्थानोक्त्यानर्थक्यप्रसङ्गात्। तुशब्दस्तु शा खान्तरीयवाक्यप्रभवामशेषगमनाशङ्कामुच्छिनत्ति, एवं स त्यधिकृतापेक्षः शाखान्तरीये वाक्ये सर्वशब्दोऽवतिष्ठते।

---

चन्द्रलोको न संपूर्यत इति श्रुत्यर्थः। प्रतिपत्ताविति प्राप्तिसाधने इ र्थः। अपि च पापिनां चन्द्रगतौ 'असौ लोकः सम्पूर्यते इत सम्पूर्यते' इत्येतत्प्रतिवचनं विरुद्धं प्रसज्येतेत्यन्वयः। अवरोहाभ्यु पगमस्तु न कल्प्यः श्रुतहान्यापत्तेरित्याह। नाश्रुतत्वादिति। इत्थं एव तृतीयं स्थानं श्रुतमक्षमित्यत आह। अवरोहस्येति। इष्टा पुनर्निवर्तन्त इति इष्टादिकारिणामवरोहोक्तेरनिष्टादिकारिणामपि रोहणार्थं विरुद्धत्वात् पुनरुक्तिर्व्यर्थेत्यर्थः। अर्थं तयोरिति मार्गयो क्रमशः घटतौ ममाद्यावत्तावतः स्थानशब्दो मार्गवचन इति इ

ये केचिदधिकृता अस्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इति। यत्पुनरुक्तं देहलाभोपपत्तये सर्वे चन्द्रमसं गन्तुमर्हन्ति पञ्चम्यामाहुतावित्याहुतिसङ्ख्यानियमादिति तत्प्रत्युच्यते ॥

न तृतीये तथोपलब्धेः ॥ १८ ॥

न तृतीये स्थाने देहलाभाय पञ्चसङ्ख्यानियम आहुतीनामादर्तव्यः। कुतः, तथोपलब्धेः । तथा ह्यन्तरेणैवाहुतिसङ्ख्यानियमं वर्णितेन प्रकारेण तृतीयस्थानप्राप्तिरुपलभ्यते 'जायस्व म्रियस्व' इत्येतत् तृतीयं स्थानमिति । अपि च 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति मनुष्यशरीरहेतुत्वेनाहुतिसङ्ख्या सङ्कीर्त्यते न कीटपतङ्गादिशरीरहेतुत्वेन, पुरुषशब्दस्य मनुष्यजातिवचनत्वात् । अपि च पञ्चम्यामाहुतावपां पुरुषवचस्त्वमुपदिश्यते नापञ्चम्यामाहुतौ पुरुषवचस्त्वं प्रतिषिध्यते, वाक्यस्य द्व्यर्थतादोषात्, तत्र येषामारोहावरोहौ सम्भवतस्तेषां पञ्चम्यामाहुतौ देह उद्भविष्यत्यन्येषान्तु विनैवाहुतिसङ्ख्यया भूतान्तरोपसृष्टाभिरद्भिर्देह आरभ्यते ॥

---

एवमविशेषश्रुतेर्मार्गाभावाच्चेति पूर्वपक्षबीजद्वयं निरस्य तृतीयबीजनिरासार्थं सूत्रमाह । यत्पुनरित्यादिना ॥

विद्याकर्मशून्यानां कृमिकीटादिभावेन जायस्वेत्यादिश्रुत्या निरन्तरजन्ममरणोपलब्धेर्नाहुतिसङ्ख्यादर इत्यर्थः । पुरुषशब्दार्थमित्याह । अपि चेति ॥

स्मर्यतेऽपि च लोके ॥ १९ ॥

अपि च स्मर्यते लोके द्रोणधृष्टद्युम्नप्रभृतीनां सीताद्रौपदीप्रभृतीनाञ्चायोनिजत्वं, तत्र द्रोणादीनां योषिद्विषयैकाहुतिर्नास्ति, धृष्टद्युम्नादीनान्तु योषित्पुरुषविषये अप्याहुती न स्तः। यथा च तत्राहुतिसङ्ख्यानादरो भवति एवमन्यत्रापि भविष्यति। बलाकाप्यन्तरेणैव रेतःसेकं गर्भं धत्त इति लोके रूढिः॥

दर्शनाच्च ॥ २० ॥

अपि च चतुर्विधे भूतग्रामे जरायुजाण्डजस्वेदजोद्भिज्जलक्षणे स्वेदजोद्भिज्जयोरन्तरेणैव ग्राम्यधर्ममुत्पत्तिदर्शनादाहुतिसङ्ख्यानादरो भवति, एवमन्यत्रापि भविष्यति। ननु तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति 'अण्डजं जीवजमुद्भिज्जमिति' अत्र त्रिविध एव भूतग्रामः श्रूयते कथं चतुर्विधत्वं भूतग्रामस्य प्रतिज्ञातमित्यत्रोच्यते

---

मनुष्यदेहस्यापि नाहुतिसङ्ख्यानियम इत्याह। अपि चेत्यादि। विधिनिषेधरूपार्थद्वये वाक्यभेदः स्यादित्यर्थः। अनियमे स्मृतिसंवादमाह। स्मर्यतेऽपीति। लोक्यतेऽनेनेति लोको भारतादिस्तत्र। इत्याह। बलाकेति॥

अण्डजानि च जरायुजानि च स्वेदजानि च उद्भिज्जानि इति श्रुत्यन्तरमिति न सूत्रं व्याचष्टे। अपि चेति। अन्यत्रापि इत्यर्थः। अनया श्रुत्या चातुर्विध्यं कथमुक्तं श्रुत्यन्तरे त्रीण्येवेत्यवधारणविरोधादिति शङ्कोत्तरत्वेन सूत्रमादत्ते। नन्वित्यादिना॥

## तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

'आण्डजं जीवजमुद्भिज्जम्' इत्यत्र तृतीयेनोद्भिज्जशब्देनैव स्वेदजोपसङ्ग्रहः कृतः प्रत्येतव्यः, उभयोरपि स्वेदजोद्भिज्जयोर्भूम्युदकोद्भेदप्रभवत्वस्य तुल्यत्वात्। स्थावरोद्भेदात्तु विलक्षणो जङ्गमोद्भेद इत्यन्यत्र स्वेदजोद्भिज्जयोर्भेदवाद इत्यविरोधः॥

## साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

इष्टादिकारिणश्चन्द्रमसमासाद्य 'तस्मिन् यावत्सम्पातमुषित्वा ततः सानुशया अवरोहन्ति' इत्युक्तं, अथावरोहप्रकारः परीक्ष्यते। तत्रेयमवरोहश्रुतिर्भवति 'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' इति तत्र संशयः किमाकाशादिस्वरूपमेवावरोहन्तः प्रतिपद्यन्ते किं वाकाशादिसाम्यमिति। तत्र प्राप्तं तावदाकाशादिस्वरूपमेव प्रतिपद्यन्त इति। कुतः-

---

जीवजं जरायुजं मनुष्यादि, भूमिमुद्भिद्य जायते वृक्षादिकं, उदकं भित्त्वा जायते यूकादिजन्ममिति भेदः। संशोकः स्वेदः॥

एवं पापिनां गत्यागतौ विचार्य सम्प्रतीष्टादिकारिणामवरोहे विशेषमाह। साभाव्यापत्तिरुपपत्तेः। यथेतमनेन चेदुक्तरीत्या यथागतं धूमाद्यध्वानं पुनर्निवर्तन्ते, निवृत्तायानुशयिनः कर्मान्ते द्रुतदेहाः आकाशं गताः आकाशसदृशा भवन्ति। आकाशसादृश्यानन्तरं पिण्डीकृता अतिसूक्ष्मलिङ्गोपचिताः वायुनेतस्ततश्च नीयमाना वायुसमा भवन्ति। सानुशयः कश्चो वायुसमो भूत्वा धूमं गतस्तत्समो भवति, धूमसमो भूत्वाऽभ्रसमो भवति। अपो बिभर्तीत्यभ्रं, मेहति सिञ्चतीति वृष्टिकर्ता मेघस्तत्समो भूत्वा वर्षधाराद्वारा पृथिवीं प्रविश्य व्रीहियवादिरूपो

एवं हि श्रुतिर्भवति, इतरथा लक्षणा स्यात् । श्रुतिलक्षणाविषये च श्रुतिर्न्याय्या न लक्षणा, तथा च 'वायुर्भूत्वा धूमो भवति' इत्येवमादीन्यक्षराणि तत्स्वरूपोपपत्तिं कल्पयन्ति, तस्मादाकाशादिस्वरूपोपपत्तिरित्येवं प्राप्ते ब्रूमः, आकाशादिसाम्यं प्रतिपद्यन्त इति । चन्द्रमण्डले यदम्मयं शरीरं उपभोगार्थमारब्धं तदुपभोगक्षये सति प्रविलीयमानं सूक्ष्ममाकाशसमम्भवति ततो वायोर्वशमेति ततो धूमादिभिः संसृज्यते इति । तदेतदुच्यते 'यथेत माकाशमाकाशाद्वायुमित्येवमादिना । कुतः, एतदुपपत्तेः । एवं ह्येतदुपपद्यते, न ह्यन्यस्यान्यभावो मुख्य उपपद्यते । आकाशस्वरूपप्रतिपत्तौ च वाय्वादिक्रमेणावरोहो नोपपद्यते । विभुत्वाच्चाकाशेन नित्यसम्बन्धत्वान्न तत्सादृश्यापत्तेरन्यस्तत्सम्बन्धो घटते । श्रुत्यसम्भवे च लक्षणाश्रयणं न्याय्यमेव, अत आकाशादितुल्यतापत्तिरेवात्राकाशादिभाव इत्युपचर्यते ॥

भवतीति विक्रान्तगतया श्रुत्यर्थः । पूर्वोत्तरयुक्तिद्वयं संशयबीजं द्रष्टव्यं पूर्वत्र मार्गद्वयं उक्तवतीयत्योक्तेर्युक्तं स्यानशब्दस्य मार्गवचनत्वे दुग्धं दधि भवतीत्यादिप्रयोगे भवति श्रुतेर्विकारस्वरूपापत्तौ मुख्यत्वात् सादृश्यापत्तिलक्षणबीजं नास्तीति प्रत्युदाहरणसङ्गतिः । श्रुतिमुख्यफलमिति पूर्वपक्षः । अनुशयिनां पूर्वसिद्धाकाशादिस्वरूपापत्त्यसम्भवाल्लक्षणेति सिद्धान्तयति । एवमित्यादिना । समानो भावो धर्मो यस्य तद्भावः साभाव्यं साम्यमिति सूत्रपदार्थः । एवं ह्येतदिति एतत्सूत्रं नैवंसादृश्यरूपमेवोपपद्यत इत्यर्थः । अनुशयिनामाकाशादिभ्यो निर्गमनान्यथानुपपत्त्यापि सादृश्यलक्षणेत्याह । आकाशस्वरूपेति । अवरोहणलक्षणाभावश्चाह । विभुत्वादिति । भवतिश्रुतया संयोगस्याप्यनुवादः स्यादित्यर्थः । विविधभूतसाम्यमवरोहे भवतीत्युक्तहेतोरैराम्यमुपसंहरति । अत इति ॥

## नातिचिरेण विशेषात् ॥ २३ ॥

तत्राकाशादिप्रतिपत्तौ प्राग्व्रीह्यादिप्रतिपत्तेर्भवति विशयः किं दीर्घं कालं पूर्वपूर्वसादृश्येनावस्थायोत्तरोत्तरसादृश्यं गच्छन्त्युताल्पमल्पमिति । तत्रानियमो नियमकारिणः शास्त्रस्याभावात् इत्येवं प्राप्त इदमाह । नातिचिरेणेति । अल्पमल्पं कालमाकाशादिभावेनावस्थाय वर्षधाराभिः सहेमां भुवमापतन्ति । कुत एतत् विशेषदर्शनात् । तथा हि व्रीह्यादिभावापत्तेरनन्तरं विशिनष्टि 'अतो वै खलु दुर्निष्प्रपतरम्' इति । तकार एकश्छान्दस्यां प्रक्रियायां लुप्तो मन्तव्यः । दुर्निष्प्रपतरं दुर्निष्क्रमतरं दुःखतरमस्मात् व्रीह्यादिभावान्निःसरणं भवतीत्यर्थः । तदत्र दुःखं निष्प्रपतनं प्रदर्शयन् पूर्वेषु सुखं निष्प्रपतनं दर्शयति । सुखदुःखताविशेषश्चायं निष्प्रपतनस्य कालाल्पत्वदीर्घत्वनिमित्तः, तस्मिन्नवधौ शरीरानिष्पत्तेरुपभोगासम्भवात् तस्मात् व्रीह्यादिभावापत्तेः प्रागल्पेनैव कालेनावरोहः स्यादिति ॥

---

नातिचिरेण । उक्तं सादृश्यमुपजीव्य लोके गन्तॄणां चिराचिरगतिदर्शनात् संशयं वदन् पूर्वपक्षयति । तत्रेत्यादिना । अनियमात् कदाचिद्विलम्बेन योन्यापत्तिरिति पूर्वपक्षफलं, सिद्धान्ते तु व्रीहियवादिभावादनुशयिनां विलम्बेन निर्गमनमिति विशेषादाकाशादिभावादाशु निर्गम इत्यविलम्बेन योन्यापत्तिरित्यनुसन्धानाद्वैराग्यदार्ढ्यमिति विवेकः । नन्वाकाशादिष्वनुशयिनां सुखं व्रीहियवादिषु दुःखमिति दुःखश्रवणात् न चिराचिरनिर्गमनमित्यत आह । सुखदुःखताविशेषश्चायमिति । अवधिः कालः ॥

## अन्याधिष्ठिते पूर्ववदभिलापात्॥ २४॥

तस्मिन्नेवावरोहे प्रवर्षणानन्तरं पठ्यते 'त इह व्रीहिय(वा) ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' इति। तत्र सं(श)शयः किमस्मिन्नेवावधौ स्थावरजात्यापन्नाः स्थावरसुख(दुः)खभाजोऽनुशयिनो भवन्त्याहोस्वित् क्षेत्रज्ञान्तराधिष्ठितेषु स्था(व)वरशरीरेषु संश्लेषमात्रं गच्छन्तीति किं तावत् प्राप्तं स्था(व)वरजात्यापन्नास्तत्सुखदुःखभाजोऽनुशयिनो भवन्तीति। कुतः एतत्, जनेर्मुख्यार्थत्वोपपत्तेः, स्थावरभावस्य च श्रु(ति)तिस्मृत्योरुपभोगस्थानत्वप्रसिद्धेः, पशुहिंसादियोगाच्चेष्टा(दि)कर्मजातस्यानिष्टफलत्वोपपत्तेः तस्मान्मुख्यमेवानुश(यि)...

---

अन्याभिलापात् श्रुतिक्रमात् अर्थक्रमाच्चाधिकरणानां क्रमो बोध्यः। इह भूमौ वर्षधाराद्वारा पतितास्तेऽनुशयिनो व्रीह्यादिसाम्येन अव(तिष्ठन्ते) इति सूत्रार्थः। अत्र जायन्त इति श्रुतेः पूर्वत्राकाशादिवन्निवासोक्तेः च संशयमाह तत्रेति। अस्मिन्नवधौ वर्षसाहचर्यानन्तरमित्यर्थः। दुर्निष्प्रपतरशब्देन चिरनिर्गमनलक्षणोक्ता न युक्ता दुःखेन निर्गमो... सुख... पक्षश्रयादित्याक्षेपसङ्गत्या पूर्वपक्षयति। किं तावदित्यादिना। पूर्वपक्षे स्थावरत्वनिवृत्तयेऽधिकारिणां यत्नगौरवं, सिद्धान्ते व्रीह्या(दि)संश्लेषमात्रं परिहर्तुं यत्नलाघवमिति विवेकः। ननु ... पत्या जीवानां जन्म स्यात् स्वतः, व्रीह्यादेस्तु न देहत्वमित्यत आह स्थावरभावस्येति। 'स्थाणुमन्येऽनुसंयन्ति' इत्याद्या श्रुतिः। 'शरीर(जैः) कर्मदोषैर्याति स्थावरतां नरः' इत्याद्या स्मृतिः। ननु सर्विदां ... भावात् कथं स्थावरत्वं तत्र... ह। पश्विति। सोमाद्युद्देश... पश्वादिशब्दार्थः। क्रत्वर्थं हिं... ादेरपि हिंसात्वादिशास्त्र...

व्रीह्यादिजन्म श्वादिजन्मवत् । यथा श्वयोनिं वा शूकरयोनिं वा चण्डालयोनिं वेति मुख्यमेवानुशयिनां श्वादिजन्म तत्सुखदुःखान्वितं भवति एवं व्रीह्यादिजन्मापीत्येवं प्राप्ते ब्रूमः । अन्यैर्जीवैरधिष्ठितेषु व्रीह्यादिषु संसर्गमात्रमनुशयिनः प्रतिपद्यन्ते न तत्सुखदुःखभाजो भवन्ति पूर्ववत् । यथा वायुधूमादिभावोऽनुशयिनां तत्संश्लेषमात्रमेवं व्रीह्यादिभावोऽपि जातिस्थावरैः संश्लेषमात्रम् । कुत एतत्, तद्वदेवेहाप्यभिलापात् । कोऽभिलापस्य तद्भावः कर्मव्यापारमन्तरेण सङ्कीर्तनं यथाकाशादिषु प्रवर्षणान्तेषु न कञ्चित् कर्मव्यापारं परामृशत्येवं व्रीह्यादिजन्मन्यपि । तस्मान्नास्त्यत्र सुखदुःखभाक्त्वमनुशयिनाम् । यत्र तु सुखदुःखभाक्त्वमभिप्रैति परामृशति तत्र कर्मव्यापारं रमणीयचरणाः कपूयचरणा इति । अपि च मुख्येऽनुशयिनां व्रीह्यादिजन्मनि व्रीह्यादिषु लूयमानेषु कण्ड्यमानेषु भज्यमानेषु पच्यमानेषु भक्ष्यमाणेषु च तदभिमानिनोऽनुश-

र्न हिंसादिमत्त्वादिशास्त्रनिषिद्धत्वाकारेण दुरितापूर्वकारित्वमविरुद्धमिति शङ्काशयः । श्रुतौ तु व्रीह्यादिभावोऽनुशयिनां न जन्मरूपः कर्मविशेषपरामर्शं विनाऽऽलोक्यत्वात् पूर्वोक्ताकाशादिभाववदिति सिद्धान्तयति । एवं प्राप्त इत्यादिना । पूर्ववदिति पदं दृष्टान्तत्वेन हेतुत्वेन च व्याख्यातं, यत्र प्रकरणे कर्मविशेषपरामर्शपूर्वकमुच्यते तज्जन्मेति व्यतिरेकदृष्टान्तमप्याह । यत्र त्विति । अपि च 'यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति' इति वाक्यशेषे व्रीह्यादिषु प्रविष्टस्यानुशयसंश्लिष्टस्य न दारारेतःसिक्पुरुषयोगः स्यात् अतः तदन्यथानुपपत्त्यापि जन्मश्रुतिर्न युक्तेत्याह । अपि चेत्यादिना । व्रीह्यादि-

यिनः प्रवसेयुः, यो हि जीवो यच्छरीरमभिमन्यते स तस्मिन् पीड्यमाने प्रवसति इति प्रसिद्धम् । तत्र व्रीह्यादिभावाद्रेतःसिग्भावोऽनुशयिनां नाभिलप्येत, अतःसंसर्गमात्रमनुशयिनामन्याधिष्ठितेषु व्रीह्यादिषु भवति । एतेन जनेर्मुख्यार्थत्वं प्रति ब्रूयात्, उपभोगस्थानत्वञ्च स्थावरभावस्य ! न च वयमुपभोगस्थानत्वं स्थावरभावस्यावजानीमहे, भवत्वन्येषां जन्तूनामपुण्यसामर्थ्येन स्थावरभावमुपगतानां तदुपभोगस्थानम् । चन्द्रमसस्त्ववरोहन्तोऽनुशयिनो न स्थावरभावमुपभुञ्जत इत्याचक्ष्महे ॥

## अशुद्धमिति चेन्नशब्दात् ॥ २५ ॥

यत्पुनरुक्तं पशुहिंसादियोगादशुद्धमाध्वरिकं कर्म तस्यानिष्टमपि फलमवकल्पत इत्यतो मुख्यमेवेहानुशयिनां व्रीह्यादिजन्मास्तु तत्र गौणी कल्पनाऽनर्थिकेति

पदेहनाशे देहिनास्तत्क्रान्तेरवश्यम्भावाद्रेतःसिग्योगो न स्वादिसर्वः। एतेनेति उक्तानुमानार्थापत्तिभ्याम् । जायत इति श्रुतेर्मुख्यार्थत्वमनुशये भोगायतनत्वञ्च व्रीह्यादेः प्रति ब्रूयादित्यर्थः । ननु व्रीह्यादेर्भोगायतनत्वानङ्गीकारे पूर्वोक्तश्रुतिस्मृतिप्रवृत्तिबाध इत्यत आह न चेति ॥

वैदिकं कर्माशुद्धं न भवति शास्त्रविहितत्वादिति सूत्रार्थं प्रपञ्चयति । यद्यं धर्म्म इत्यादिना । शुचौ देशे प्रातःसायङ्काले श्रौतनिमित्तकृतमग्निहोत्रं धर्म्मो भवति स एवाशुचिदेशे मध्यरात्रे काकादिनिमित्ते कृतः सन्नधर्म्मो भवतीति निर्णयः शास्त्रैकसाध्य इत्यर्थः। अतः किमुक्तमाह । शास्त्राद्धेति । ननु या हिंसा सोऽधर्म इत्युत्सर्गनियेधविधिना बाधोऽस्य न युक्तः । नाभिचरेदिति निषिद्धस्येवास्य पुरु

तत्परिक्षीयते। न शास्त्रहेतुत्वाद्धर्माधर्मविज्ञानस्य। अयं धर्मोऽयमधर्म इति शास्त्रमेव विज्ञाने कारणमतीन्द्रियत्वात् तयोरनियतदेशकालनिमित्तत्वाच्च। यस्मिन् देशे काले निमित्ते च यो धर्मोऽनुष्ठीयते स एव देशकालनिमित्तान्तरेष्वधर्मो भवति, तेन न शास्त्रादृते धर्माधर्मविषयं विज्ञानं कस्यचिदस्ति। शास्त्राच्च हिंसानुग्रहाद्यात्मको ज्योतिष्टोमो धर्म इत्यवधारितं, स कथमशुद्ध इति शक्यते वक्तुम्। ननु न हिंस्यात् सर्वभूतानीति शास्त्रमेव भूतविषयां हिंसामधर्म इत्यवगमयति। बाढं, उत्सर्गस्तु सः, अग्नीषोमीयं पशुमालभेतेति अपवादः, उत्सर्गापवादयोश्च व्यवस्थितविषयत्वम्। तस्माद्विशुद्धं वैदिकं कर्म शिष्टैरनुष्ठीयमानत्वादनिन्द्यमानत्वाच्च। तेन न तस्य प्रतिरूपं फलं जातिस्थावरत्वम्। न च श्वादिजन्मवदपि व्रीह्यादिजन्म भवितुमर्हति। तद्धि कपूयचरणानधिकृत्योच्यते, नैव-

---

र्थं स्यात् निषिद्धहिंसादेरपि क्रतूपकारकत्वाविरोधादिति तत्राह। उत्सर्गापवादयोरिति। अयमर्थः काम्ये कर्मणि सर्वत्र करणांशे रागतः प्रवृत्तिः अङ्गेषु विधित इति स्थितिः। तथा च श्येनाख्ये कर्मणि निषेधादोषप्राबल्यात् प्रवृत्तिः स्यात् क्रत्वङ्गहिंसादौ तु विधित एव प्रवृत्तिर्वाच्या। स च विधिर्यद्युत्सर्गप्राप्तं अनर्थहेतुत्वं न बाधेत तर्हि प्रवर्तको न स्यात्, प्रवर्तकत्वे वा विधिरनर्थाय स्यात्, अतो निरवकाशो विधिः सावकाशमुत्सर्गमविहितहिंसादिषु स्थापयतीति। इदञ्च निषेधशास्त्रस्य हिंसात्वादिसामान्येन प्रवृत्तिमङ्गीकृत्योक्तम्। वस्तुतस्तस्य रागप्राप्तहिंसाविषयत्वाद्वैधहिंसायामप्रवृत्तेर्नोत्सर्गापवादावसर इति द्रष्टव्यम्। प्रतिरूपं दुःखरूपं तस्य फलं नेति योजना। इह श्रीहरा-

मिह वैशेषिकः कश्चिदधिकारोऽस्ति, अतश्चन्द्रमण्डलात् स्खलितानामनुशयिनां व्रीह्यादिसंश्लेषमात्रं तत्राव उप- पचर्य्यते ॥

## रेतःसिग्योगोऽथ ॥ २६ ॥

इतश्च व्रीह्यादिसंश्लेषमात्रं तद्भावो यत्कारणं व्रीह्या- दिभावस्यानन्तरमनुशयिनां रेतःसिग्भाव आम्नायते 'यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति' इति न चात्र मुख्यो रेतःसिग्भावः सम्भवति। चिरजातो हि प्राप्तयौवनो रेतःसिग् भवति कथमिवानुपचरिततद्भावमन्न- नानुगतोऽनुशयो प्रतिपद्यते। तत्र तावदवश्यं रेतःसि- ग्योग एव रेतःसिग्भावोऽभ्युपगन्तव्यः तद्वत् व्रीह्यादि- भावोऽपि व्रीह्यादियोग एवेत्यविरोधः ॥

## योनेः शरीरम् ॥ २७ ॥

अथ रेतःसिग्भावानन्तरं योनौ निषिक्ते रेतसि यो- नेरधिशरीरमनुशयिनामनुशयफलोपभोगाय जायत इत्या- याह 'तद् य इह रमणीयचरणाः, इत्यादि, तस्मादव-

---

दिभावे कश्चिदधिकारः कर्म्मपरामर्शो नास्तीत्यर्थः। अथ व्रीह्या- भावानन्तरं रेतःसिग्भावः श्रुतः। तत्राचस्यानुशयिनो रेतःसेक्तृ- त्वायोगाद्योगमात्रं वाच्यं तद्वदत्राप्यक्रमेऽपि योग एवाश्रेयः, अन्यथो- पक्रमोपसंहारयोः विरोधः स्यादिति मत्वोक्तमविरोध इति ॥ शरीरश्रुतेर्न व्रीह्यादिशरीरत्वमनुशयिनामिति सूत्रार्थः। ए॥ कर्मिणां गत्यागतिसंसारो दर्शितः इतरानुसन्धानात् कर्मफलादौ तत्त्वज्ञानसाधनं सिद्धमिति पादार्थमुपसंहरति। इति

गम्यते नावरोहे व्रीह्यादिभावावसरे तच्छरीरमेव सुखदुःखान्वितं भवतीति, तस्मात् व्रीह्यादिसंश्लेषमात्रमनुशयिनां तज्जन्मेति सिद्धम् ॥

इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीशङ्करभगवत्पादकृतौ तृतीयाध्यायस्य प्रथमः पादः ॥

---

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमद्गोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभायां तृतीयाध्यायस्य प्रथमः पादः ॥

## ओं परमात्मने नमः ।

—÷०÷—

## सन्ध्ये सृष्टिराह हि ॥ १ ॥

अतिक्रान्ते पादे पञ्चाग्निविद्यामुदाहृत्य जीवस्य संसा-
रगतिप्रभेदः प्रपञ्चितः, इदानीं तस्यैवावस्थाभेदः प्रपञ्च्यते।
इदमामनन्ति 'स यत्र प्रस्वपिति' इत्युपक्रम्य 'न तत्र रथा
न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान्
पथः सृजते, इत्यादि। तत्र संशयः किं प्रबोध इव स्वप्ने-
ऽपि पारमार्थिकी सृष्टिराहोस्विन्मायामयीति। तत्र ता-

ओं वेदव्यासाय नमः ।

सन्ध्ये सृष्टिराह हि । उक्तवैराग्यसाध्यस्त्वंपदार्थविवेको ब्रह्म-
ध्यानसाधनमस्मिन् पादे निरूप्यत इति पादयोर्हेतुहेतुमद्भाव-
माह । अतिक्रान्त इति । साधनविचारत्वादेतस्य पादस्याधिकरण-
सङ्गतिः । अस्मिन् पादे न स्थानतोऽपीत्यतः प्राग्वैराग्येण प्र-
जिज्ञासितत्वंपदार्थोऽवस्थाद्वारा विविच्यते, तदारम्भापादकमा-
विधेयस्तत्पदार्थविवेकः, तत्र पूर्वं गत्यागतिचिन्तया जाग्रद-
निरूपिता तदनन्तरभाविनीं स्वप्नावस्थां श्रुत्युक्तां विषयीकृत्य
स्वप्ने रथादिसृष्ट्युक्तेस्तदभावोक्तेश्च संशय' वदन् पूर्वपक्षं
योजयति । तत्र संशय इत्यादिना । स्वप्नरथादयो जाग्रद्रथा-
दिवत् व्यावहारिकसत्ताका उत शुक्तिरजतवत् प्रातीतिका इति
संशयार्थः । आरम्भाधिकरणे प्रपञ्चस्य पारमार्थिकत्वनिरा-
दिति मन्तव्यम् । अत्र पूर्वपक्षे जाग्रद्वत् स्वप्नाज्जीवस्य विवेका-

वत् प्रतिपद्यते सन्ध्ये सृष्टिरिति। सन्ध्यमिति स्वप्नस्थानमाचष्टे वेदे प्रयोगदर्शनात् 'सन्ध्यं तृतीयं स्वप्नस्थानम्' इति। द्वयोर्लोकस्थानयोः प्रबोधसम्प्रसादस्थानयोर्वा सन्धौ भवतीति सन्ध्यं तस्मिन् सन्ध्ये स्थाने तथ्यरूपैव सृष्टिर्भवितुमर्हति। कुतः, यतः प्रमाणभूता श्रुतिरेवमाह 'अथ रथान् रथयोगान् पथः सृजते' इत्यादि। स हि कर्तेति चोपसंहारादेवमेवावगम्यते ॥

## निर्म्मातारं चैके पुत्रादयश्च ॥ २ ॥

अपि चैके शाखिनोऽस्मिन्नेव सन्ध्ये स्थाने कामानां निर्म्मातारमात्मानमामनन्ति 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' इति। पुत्रादयश्च तत्र कामा

---

निश्चान्ते प्रातीतिकरथादिसाधकतया विवेकात् स्वयंज्योतिष्ट्वसिद्धिरिति फलम्। मुमूर्षोः सर्वेन्द्रियोपसंहारादेतल्लोकाननुभवे सति वासनामात्रेण इमं लोकं स्मरतः कर्मवशादुद्बुद्धे भाविपरलोकस्फूर्तिरूपः स्वप्नो भवति, सोऽयं लोकद्वयसन्धौ भवतीति सन्ध्यः स्वप्नः। तथा च श्रुतिः 'तस्मिन् सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यति इदञ्च परलोकस्थानञ्च' इति अयं स्वप्नः कादाचित्क इत्यन्यो नित्यस्वप्नस्य प्रबोधस्थानस्य प्रबोधसन्ध्यां दर्शयितव्यमुक्तम्। श्रुतस्तु मर्त्यचक्षुराद्यजन्यरूपादिसाक्षात्कारत्वं परलोकलक्षणं, दैवचक्षुराद्यजन्यत्वं मर्त्यलोकलक्षणञ्च स्वप्नेऽस्तीति उभयतो लोकद्वयस्पर्शित्वात् नित्यस्वप्नस्यैव लोकद्वयसन्ध्यत्वं स्थानद्वयस्पर्शिमार्गस्य तद्वत्सन्ध्यत्वमिति व्याचष्टे। न चैतच्छ्रुत्या स्वप्नार्थानां व्यावहारिकसत्यत्वं किन्तु सत्यं कथादर्पोक्त्याह। स हि कर्तेति।

किञ्च स्वप्नार्थाः सत्याः प्राज्ञनिर्मितत्वात् आकाशादिवदिति सूत्रार्थमाह। अपि चैकेऽस्मिन्निति। दृष्टिमात्रञ्च प्रकरणादिसिद्धमिति। कामानामिति-

अभिप्रेयन्ते काम्यन्त इति । ननु कामशब्देनेच्छाविशे षा उच्येरन्, न, 'शतायुषः पुत्रपौत्रान् वृणीष्व' इति प्रक्रम्य 'अन्ते कामानान्त्वा कामभाजं करोमि' इति प्रकृतेषु तेषु पुत्रादिषु कामशब्दस्य प्रयुक्तत्वात् । प्राज्ञं चैनं निर्मा तारं प्रकरणवाक्यशेषाभ्यां प्रतीमः । प्राज्ञस्य हीदं प्रकरणं 'अन्यत्र धर्मादन्यत्राधर्मात्' इत्यादि । तद्विषय एव च वाक्यशेषोऽपि–

'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन'

इति प्राज्ञकर्तृका च सृष्टिस्तथ्यरूपा समधिगता जागरि ताश्रया तथा स्वप्नाश्रयापि सृष्टिर्भवितुमर्हति । तथा च श्रुतिः 'अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्तः' इति स्वप्नजागरितयोः समानन्यायतां श्रावयति । तस्मात् तथ्यरूपैव स्वप्ने सृष्टिरित्येवं प्राप्ते प्रत्याह ॥

**मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥३॥**

तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति यदुक्तं स्वप्ने सृष्टिः पारमार्थिकीति । मायामय्येव सन्ध्ये सृष्टिर्न

---

भा । यः सुप्तेषु करणेषु जागर्ति सदैव शुक्रं स्वप्रकाशं ब्रह्मेत्यर्थः तस्य जाग्रदेशैः समानदेशत्वश्रुतेरभेदश्रुतेश्च सत्यत्वे तात्पर्यमित्याह अथो खल्वाहुरिति ॥

अश्वरथादयः प्रातीतिकाः जाग्रद्रथादौ शुक्तिरजतादिवदिति सिद्धान्तयति । तुशब्द इत्यादिना । विवक्षितं

मार्थगन्धोऽप्यस्ति । कुतः कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ।
न हि कार्त्स्न्येन परमार्थवस्तुधर्मेणाभिव्यक्तस्वरूपः स्वप्नः ।
किं पुनरत्र कार्त्स्न्यमभिप्रेतं, देशकालनिमित्तसम्पत्तिरबा-
धश्च । न हि परमार्थवस्तुविषयाणि देशकालनिमित्तानि
अबाधश्च स्वप्ने सम्भाव्यन्ते । न तावत् स्वप्ने रथादीनामु-
चितो देशः सम्भवति, न तावत् संवृते देहदेशे रथादयोऽ-
वकाशं लभेरन् । स्यादेतत्, बहिर्देहात् स्वप्नं द्रक्ष्यति
देशान्तरितद्रव्यग्रहणात् । दर्शयति च श्रुतिः 'बहिर्देहात्
स्वप्नं बहिःकुलायादमृतश्चरित्वा स ईयतेऽमृतो यत्र
कामम्' इति । स्थितिगतिप्रत्ययभेदश्च नानिष्क्रान्ते जन्तौ
सामञ्जस्यमुपैतीति । नेत्युच्यते, न हि सुप्तस्य जन्तोः
क्षणमात्रेण योजनशतान्तरितं देशं पर्येतुं विपर्येतुं च ततः
सामर्थ्यं सम्भाव्यते । क्वचिच्च प्रत्यागमनवर्जितं स्वप्नं श्रा-
वयति 'कुरुष्वहं शय्यायां शयानो निद्रयाभिप्लुतः स्वप्ने
पञ्चालानभिगतश्चास्मिन् प्रतिबुद्धश्च' इति । देहाच्चेदपे-
यात् पञ्चालेष्वेव प्रतिबुध्येत तानसावभिगत इति कुरुष्वेव
तु प्रतिबुध्यते । येन चायं देहेन देशान्तरमश्नुवानो मन्य-
ते तमन्ये पार्श्वस्थाः शयनदेश एव पश्यन्ति । यथाभूतानि

---

अविद्यात्मिकात्वाच्छब्देन जीवेऽपि स्थिता रथाद्याकारा मायेति सूत्रभाष्य-
योर्ब्रह्ममायाविद्ययोरभेदज्ञापनार्थं मात्रपदेन सति प्रमातर्यबाध्यत्वरूपस्य
व्यावहारिकसत्यत्वस्य निरास उक्तः । कार्त्स्न्यमत्र जाग्रति [illegible]नामन्दो,
तस्माच्चत्वं परमार्थवस्तुनो जाग्रद्वस्तुनो धर्मः [illegible] तद-
[illegible] निरुक्तः । न तावदित्यादिना । संवृते सङ्कीर्णे, पर्येतुं गन्तुं,

चायं देशान्तराणि स्वप्ने पश्यति न तानि तथाभूतानि भवन्ति, परिधावंश्चेत् पश्येज्जाग्रद्वद्भूतमर्थमाकलयेत् दर्शयति च श्रुतिः 'अन्तरेव देहे स्वप्नं' स यत्रैतत् स्वप्न्यया चरति' इत्युपक्रम्य 'स्वे शरीरे यथाकामं परिवर्तते' इति अतश्च श्रुत्युपपत्तिविरोधाद्बहिःकुलायश्रुतिर्गौणी व्याख्यातव्या 'बहिरिव कुलायादमृतश्चरित्वा।' इति यो हि वसन् शरीरे न तेन प्रयोजनं करोति स बहिरिव शरीराद्भवति इति। स्थितिगतिप्रत्ययभेदोऽप्येवं सति विप्रलम्भ एवाभ्युपगन्तव्यः, कालविसंवादोऽपि च स्वप्ने भवति रजन्यां सुप्तो वासरं भारते वर्षे मन्यते तथा मुहूर्तमात्रवर्तिनि स्वप्ने कदाचिद्बहून् वर्षपूगानतिवाहयति। निमित्तान्यपि च स्वप्ने न बुद्धये कर्मणे वोचितानि विद्यन्ते, करणोपसंहाराद्धि नास्य रथादिग्रहणाय चक्षुरादीनि सन्ति, रथादिनिर्वर्तनेऽपि कुतोऽस्य निमेषमात्रेण सामर्थ्यं दारूणि वा, बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोधे, स्वप्न एव चैते सुलभबाधा भवन्ति आद्यन्तयोर्व्यभिचारदर्शनात्, रथोऽयमिति हि कदाचित् स्वप्ने निर्धारितः क्षणेन मनुष्यः सम्पद्यते, मनुष्य

विपर्येतुमागन्तुं, आश्चर्यमिति प्रबुद्धो जनः, पार्श्वस्थान् पृच्छति भेदः। स्वप्नं यथा स्यात् तथा यत्र काले स्वप्नधियाऽऽत्मा चरति तदा स्वशरीर एवेदं चरतीत्यर्थः। बहिरिवेति कुलायदेहात् बहिरिवासक्त चरित्वा यत्र कामं यथेष्टमीयते विहरतीत्यर्थः। गुणमाह। यो हि देहाभिमानहीनतया गुणेन बहिष्ठदेहस्थोऽपि विहरतीत्युक्तः एवं सति श्रुतियुक्तिभ्यां स्वतएव स्वप्ने सतीत्यर्थः विप्रलम्भः

यमिति वा निर्धारितः क्षणेन ह्रस्वः। स्पष्टञ्चाभावं रथादीनां स्वप्ने श्रावयति शास्त्रं 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति' इत्यादि। तस्मान्मायामात्रं स्वप्नदर्शनम्॥

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः॥ ४॥

मायामात्रत्वात् तर्हि न कश्चित् स्वप्ने परमार्थगन्ध इति, नेत्युच्यते। सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोः। तथा हि श्रूयते 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने' इति। तथा 'पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इत्येवमादिभिः स्वप्नैरचिरजीवित्वमावेद्यत इति श्रावयति। आचक्षते च स्वप्नाध्यायविदः 'कुञ्जरारोहणादीनि स्वप्ने धन्यानि खरयानादीन्यधन्यानि' इति, मन्त्रदेवताद्रव्यविशेषनिमित्ताश्च केचित् स्वप्नाः सत्यार्थगन्धिनो भवन्तीति मन्यन्ते तत्रापि भवतु नाम सूच्यमानस्य वस्तुनः सत्यत्वं, सूचकस्य तु स्त्रीदर्शनादेर्भवत्येव वैतथ्यं बाध्यमा-

---

योग्यदेशाभावमुक्त्वा कालाभावमाह। बाधेति। अत्र रात्रिसमयेऽपि केतुमालादिवर्षान्तरे वासरो भवति इति भारत इत्युक्तम्॥

परपक्षानुमानानां जाग्रद्दर्शनदृष्टान्ते क्रमवाक्यैर्जन्यत्वमबाधयोग्यत्वं चोपाधिरिति सूत्रतात्पर्यं स्वप्नस्य भ्रान्तिमात्रत्वे तदुपदिष्टोऽप्यर्थः सत्यो न स्यादिति शङ्कोत्तरत्वेन सूत्रान्तरं व्याचष्टे। मायेत्यादिना। मन्त्रैश्च देवतानुग्रहैरौषधिविशेषैर्या स्वप्नाः सत्यसूचकाश्चेत् स्वप्नाः स्युरित्यत्र आह। तत्रापि भवतु नामेति। सत्यत्वस्य हेतोरपि मुख्यत्वस्य असत्यत्वा-द्दर्शनादिति भावः। यथा कस्यचिद्दारा शाङ्गस्य गजादिजीवननिमित्तत्वं त-

नत्वादित्यभिप्रायः। तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम्। यदुक्तमाह हीति तदेवं सति भाक्तं व्याख्यातव्यं यथा लाङ्गलं गवादीनुद्वहतीति निमित्तमात्रत्वादेवमुच्यते न तु प्रत्यक्षमेव लाङ्गलं गवादीनुद्वहति, एवं निमित्तमात्रत्वात् सुप्तो रथादीन् सृजते स हि कर्तेति चोच्यते न तु प्रत्यक्षमेव सुप्तो रथादीन् सृजति। निमित्तत्वं त्वस्य रथादिप्रतिभाननिमित्तमोदत्रासदर्शनात् तन्निमित्तभूतयोः सुकृतदुष्कृतयोः कर्तृत्वेनेति वक्तव्यम्। अपि च जागरिते विषयेन्द्रियसंयोगादादित्यादिज्योतिर्व्यतिकराच्चात्मनः स्वयंज्योतिष्ट्वं दुर्विवेचनमिति तद्विवेचनाय स्वप्न उपन्यस्तः, तत्र यदि रथादिसृष्टिवचनं श्रुत्या नीयेत स्वयंज्योतिष्ट्वं न निर्णीतं स्यात्। तस्माद्रथाद्यभाववचनश्रुत्या रथादिसृष्टिवचनं भाक्तमिति व्याख्येयम्। एतेन निर्माणश्रवणं व्याख्यातम्।

३. स्वप्नभोगप्रदादृष्टद्वारा स्वप्नसृष्टिनिमित्तत्वं ननु कुम्भं प्रति कुम्भकारवदधानात् स्वप्नकर्तृत्वं सामग्र्यभावबाधयोरुक्तत्वादित्याह। यदुक्तमित्यादिना। तथा च स्वप्नस्य सकर्तृकत्वं मुख्यं नास्तीति हेतुविविदिति भावः। श्रुतितात्पर्यविरोधाच्च न स्वप्नस्तत्रेत्याह। अपि चेति। व्यतिकरः सङ्करः, श्रुत्या तत्परतयेत्यर्थः। जागरिताद्विवेचनादिति भावः। फलितमाह। तस्मादिति। एतेनेति भाक्तत्वेनेत्यर्थः। द्वितीयश्लोकप्राप्तस्वप्नेश्वरस्यापि स्वप्नस्य किं श्रुतिविरुद्धः उत प्राज्ञस्य सर्वेश्वरत्वात् सिद्धः, नाद्य इत्याह। यदुक्तमित्यादिना। स्वयं विहत्य आत्मदेहं निश्चेष्टं कृत्वा स्वयं वासनया देहं निर्माय, स्वेन भासा धीवृत्त्या स्वेन ज्योतिषा स्वरूपचैतन्येन च स्वप्नमनुभवतीत्यर्थः। न केवलं बृहदारण्यके जीवस्य स्वप्नकर्तृत्वं श्रुतं किन्तु काठकेऽपीत्याह कामानिति। जीवोक्तौ प्र-

यदप्युक्तं 'प्राज्ञमेनं निर्मातारमामनन्ति' इति, तदप्यसत् श्रुत्यन्तरे 'स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति' इति जीवव्यापारश्रवणात् । इहापि च 'य एष सुप्तेषु जागर्ति' इति प्रसिद्धानुवादाज्जीव एवायं कामानां निर्माता सङ्कीर्त्यते, तस्य तु वाक्यशेषेण तदेव शुक्रन्तद्ब्रह्मेति जीवभावं व्यावर्त्य ब्रह्मभाव उपदिश्यते, 'तत्त्वमसि' इत्यादिवदिति न ब्रह्मप्रकरणत्वं विरुध्यते । न चास्माभिः स्वप्नेऽपि प्राज्ञव्यापारः प्रतिषिध्यते, तस्य सर्वेश्वरत्वात् सर्वास्ववस्थास्वधिष्ठातृत्वोपपत्तेः । पारमार्थिकस्तु नायं सन्ध्याश्रयः सर्गो वियदादिसर्गवदित्येतावत् प्रतिपाद्यते । न च वियदादिसर्गस्याप्यात्यन्तिकं सत्यत्वमस्ति, प्रतिपादितं हि 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यत्र समस्तस्य प्रपञ्चस्य मायामात्रत्वम् । प्राक् च ब्रह्मात्मदर्शनात् वियदादिप्रपञ्चो व्यवस्थितरूपो भवति, सन्ध्याश्रयस्तु प्रपञ्चः प्रतिदिनं बाध्यत इत्यतो वैशेषिकमिदं सन्ध्यस्य मायामात्रत्वमुदितम् ॥

---

करणविरोध इत्यत आह । तस्य त्विति । एवं हेतोः श्रुतिविरुद्धत्वं निरस्य द्वितीयमङ्गीकरोति । न चास्माभिरिति । तर्हि हेतुसिद्धेः स्वप्नस्य सत्यत्वमित्याशङ्क्य सत्यत्वं व्यावहारिकं पारमार्थिकं वेति विकल्प्य व्यवहारकाले बाधदर्शनात् नाद्य इत्याह । पारमार्थिकस्त्विति । द्वितीये दृष्टान्तस्य साध्यवैकल्यमित्याह । न चेति । कर्हि स्वप्नस्य जाग्रतो विशेषोऽस्य कथम् इत्याशङ्क्य प्रातिभासिकत्वमित्याह । प्रागिति ॥

एव सर्वेषां जन्तूनां, कुतस्ततो हि ईश्वराद्धेतोरस्य जीवस्य बन्धमोक्षौ भवतः, ईश्वरस्य स्वरूपापरिज्ञानाद्बन्धः तत्स्वरूपपरिज्ञानात्तु मोक्षः। तथा च श्रुतिः 'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः। तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः' इत्येवमाद्या।

## देहयोगाद्वा सोऽपि ॥ ६ ॥

कस्मात् पुनर्जीवः परमात्मांश एव सन्तिरस्कृतज्ञानैश्वर्यो भवति युक्तन्तु ज्ञानैश्वर्ययोरतिरस्कृतत्वं विस्फुलिङ्गस्येव दहनप्रकाशयोरिति। उच्यते सत्यमेवैतत्, सोऽपि तु जीवस्य ज्ञानैश्वर्यतिरोभावो देहयोगाद्देहेन्द्रियमनोबुद्धिविषयवेदनादियोगाद्भवति। अस्ति चात्रोपमा यथाग्नेर्दहनप्रकाशनसम्पन्नस्याप्यरणिगतस्य दहनप्रकाशने तिरोभवतः, यथा वा भस्मनाच्छन्नस्य, एवमविद्याप्रत्युपस्थापितनामरूपकृतदेहाद्युपाधियोगात् तदविवेकभ्रमकृतो जीवस्य ज्ञानैश्वर्यतिरोभावः। वाशब्दो जीवेश्वरयोरन्यत्वाशङ्काव्यावृत्त्यर्थः। नन्वन्य एव जीव ईश्वरादस्तु तिर-

---

मादिकं मध्ये देहपाते सति विश्वैश्वर्यं भवति तद्भोगानन्तरमात्मज्ञानात् केवलो द्वैतशून्य आप्तकामः प्राप्तनित्यज्योतिरानन्दो भवतीति क्रममुक्तिरित्यर्थः ॥

ज्ञानैश्वर्यतिरोभावे देहाभिमानो हेतुरिति कथनार्थं सूत्रं, तदिर-स्याशङ्कामाह। कस्मादिति। सत्यादरं नाशोऽङ्गीकृत्य कल्पनारूपं

स्य, तज्ज्ञानैश्वर्यत्वात् किं देहयोगकल्पनया। नेत्युच्यते, न ह्यन्यत्वं जीवस्येश्वरादुपपद्यते 'सेयं देवतैक्षत' इत्युपक्रम्य 'अनेन जीवेनात्मनानुप्रविश्य' इत्यात्मशब्देन जीवस्य परामर्शात्। 'तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो'। इति च जीवायोपदिशतीश्वरात्मत्वं, अतोऽनन्य एवेश्वरात् जीवः सन् देहयोगात् तिरोहितज्ञानैश्वर्यो भवति, अतश्च न साङ्कल्पिकी जीवस्य स्वप्ने रथादिसृष्टिसिद्धिर्घटते। यदि च साङ्कल्पिकी स्वप्ने सृष्टिसिद्धिः स्यात् नैवानिष्टं कश्चित् स्वप्नं पश्येत्। न हि कश्चिदनिष्टं सङ्कल्पयते। यत्पुनरुक्तं जागरितदेशश्रुतिः स्वप्नस्य सत्यत्वं ख्यापयतीति न तत्साम्यवचनं सत्यत्वाभिप्रायं स्वयंज्योतिष्ट्वविरोधात्, श्रुत्यैव च स्वप्ने रथाद्यभावस्य दर्शितत्वात्, जागरितप्रभववासनानिर्मितत्वात् तु स्वप्नस्य तत्तुल्यनिर्भासत्वाभिप्रायं तत्। तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम्॥

**तदभावो नाडीषु तच्छ्रुतेरात्मनि च॥७॥**

स्वप्नावस्था परीक्षिता सुषुप्तावस्थेदानीं परीक्ष्यते। त

---

साधयति। अन्यत इत्यादिना। जीवस्येश्वरत्वमङ्गीकृत्यापरवशकल्पनात- मन्यत्वकल्पनैवाशङ्कामुत्थाप्य श्रुत्या निरस्यति। यदि चेत्यादिना। स्वप्ने शोकादेः [illegible] जाग्रतो ह्यात्मनः स्वप्रकाशत्वमस्फुटं स्यात् प्रातिभासि- कालोकेन्द्रियाद्यभावेऽप्यर्थापरोक्षभासकज्योतिष एवेति स्फुटं विभा- तस्मादेशादिसाम्यवचनं स्वप्नस्य जाग्रत्तुल्यभानाभिप्रायमित्यर्थः॥

एवं शास्त्रकारोपरचिते सति मनोवाक्यो[illegible]पितविद्याविशेषात्मक [illegible] कारण, साक्षिण, स्वयंज्योतिष्ट्वं निर्धार्य प्रतियोग्यदर्शनाभाव[illegible]

त्रैताः सुषुप्तविषयाः श्रुतयो भवन्ति । क्वचित् श्रूयते 'तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सृप्तो भवति' इति । अन्यत्र तु नाडीरेवानुक्रम्य श्रूयते 'ताभिः प्रत्यवसृप्य पुरीतति शेते' इति । तथान्यत्रापि नाडीरेवानुक्रम्य 'तासु तदा भवति यदा सुप्तः स्वप्नं न कञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति' इति । तथान्यत्रापि 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' इति । तथान्यत्र 'सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति' इति । तथा 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' इति च । तत्र संशयः । किमेतानि नाड्यादीनि परस्परनिरपेक्षतया भिन्नानि सुषुप्तिस्थानानि आहोस्वित् परस्परापेक्षतयैकं सुषुप्तिस्थानमिति । किं तावत् प्राप्तं भिन्नानीति । कुतः एकार्थत्वात् । न हि एकार्थानां

---

स्वप्नावस्थस्य मनोलयात्मिकां सुषुप्तिं विचारयति । तदभावो नाडीषु तच्छ्रुतेरात्मनि च । तदेतत् स्वप्नं यथा स्यात् तथा । यत्र काले सुप्तः सुषुप्तः समस्तो निरस्तबाह्यकरणो मनोलयात् सम्यक् प्रसन्न इत्यर्थः । स्वापे नाडीस्थानमुक्त्वा नाडीपुरीततो नाडीपरमात्मनोश्च समुच्चयश्रुती आह । अन्यत्रेति । परमात्मसमुच्चयश्रुतीराह । तथान्यत्रेत्यादिना । नाडीपुरीतद्ब्रह्मसु सप्तम्यन्तैः समुच्चयश्रुतेश्च संशयमाह । तत्रेति । पूर्वपक्षे स्थानविकल्पाज्जीवस्य नियमाद्ब्रह्मैक्यानिर्णयः सिद्धान्ते नाडीभिः पुरीततं गत्वा तत्र ब्रह्मण्येव शेत इति समुच्चयात् तन्निर्णय इति विवेकः । एकप्रयोजनार्थत्वं व्रीहियवयोर्दृष्टं नाड्यादीनामेकस्मिन् स्वापरूपार्थे निरपेक्षत्वमस्तु कुत इत्यत आह । नाड्यादीनामिति । यति सप्तमि तृतीया-

क्वचित् परस्परापेक्षत्वं दृश्यते व्रीहियवादीनाम्। नाड्यादीनां त्वेकार्थता सुषुप्तौ दृश्यते 'नाडीषु सृप्तो भवति पुरीतति शेते' इति च तत्र तत्र सप्तमीनिर्देशस्य तुल्यत्वात्। ननु नैवं सति सप्तमीनिर्देशो दृश्यते 'सता सोम्य तदा सम्पन्नो भवति' इति नैष दोषः, तत्रापि सप्तम्यर्थस्य गम्यमानत्वात्। वाक्यशेषे हि 'तत्रायतनैषी जीवः सदुपसर्पति' इत्याह। 'अन्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते' इति प्राणशब्देन तत्र प्रकृतस्य सत उपादानात्। आयतनञ्च सप्तम्यर्थः, सप्तमीनिर्देशोऽपि तत्र वाक्यशेषे दृश्यते 'सति सम्पद्य न विदुः सति सम्पद्यामहे' इति। सर्वत्र च विशेषविज्ञानोपशमलक्षणं सुषुप्तं न विशिष्यते। तस्मादेकार्थत्वान्नाड्यादीनां विकल्पेन कदाचित् किञ्चित् स्थानं स्वापायोपसर्पतीत्येवं प्राप्ते प्रतिपद्यते तदभावो नाडीषु

---

सर्वैन सम्पर्केति शङ्कार्थः। आयतनशब्दस्तु सप्तम्यर्थः आधारत्वं सत इत्याह। नैष दोष इति। अन्यत्रायतनान्तरे श्रान्तो जीवो विश्रान्तिस्थानं प्राणाख्यं सद्ब्रह्मोपसर्पति सुषुप्तावित्यर्थः। सप्तमीश्रुत्या निरपेक्षाधारत्वभानाद्विकल्प आस्थेयः। कदाचित् समुच्चयेऽपि नाड्यादीनां स्थानत्वमिति न समुच्चयश्रुतिविरोध इति पूर्वपक्षार्थः। सिद्धान्तयति। एवं प्राप्त इति। सूत्रे चकारः पुरीतत्समुच्चयार्थः। यदा नाड्यः सुप्तिस्थानं तदा पुरीतत्स्थानं न भवतीति श्रुतस्थानत्वस्य पक्षे बाधः स्यात् स न युक्त इत्याह। विकल्पे चेदादिना। व्रीहिवदगत्या विकल्प इति भावः। यत्तु सप्तमीश्रुत्या नाड्यादीनामेकफलकत्वमिति तत्रेत्याह। न चैकार्थ्येति। प्रासादस्य पर्यङ्काधारत्वं पर्यङ्कस्य तु शयनार्थमिति कार्यभेदेऽप्येकविभक्तिर्दृश्यते, व्यवधानाद्

आत्मनि चेति। तदभाव इति तस्य प्रकृतस्य स्वप्नदर्शनस्याभावः सुषुप्तमित्यर्थः, नाडीष्वात्मनि चेति समुच्चयेनैतानि नाड्यादीनि स्वापायोपैति न विकल्पेनेत्यर्थः। कुतः तच्छ्रुतेः। तथा हि सर्वेषामेषां नाड्यादीनां तत्र तत्र सुप्तिस्थानत्वं श्रूयते तच्च समुच्चये संगृहीतं भवति, विकल्पे ह्येषां पक्षे बाधः स्यात्। नन्वेकार्थत्वाद्विकल्पो नाड्यादीनां व्रीहियवादिवदित्युक्तम्। नेत्युच्यते, न ह्येकविभक्तिनिर्देशमात्रेणैकार्थत्वं विकल्पश्चापतति, नानार्थत्वसमुच्चययोरप्येकविभक्तिनिर्देशदर्शनात् प्रासादे शेते पर्यङ्के शेत इत्येवमादिषु, तथेहापि नाडीषु पुरीतति ब्रह्मणि च स्वपितीत्युपपद्यते समुच्चयः, तथा च श्रुतिः 'तासु तदा भवति यदा सुप्तः स्वप्नं न कञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति' इति समुच्चयं नाडीनां प्राणस्य च सुषुप्तौ श्रावयति, एकवाक्योपादानात्। प्राणस्य च ब्रह्मत्वं समधिगतं 'प्राणस्तथानुगमात्' इत्यत्र। यत्रापि निरपेक्षा इव नाडीः सुप्तिस्थानत्वेन श्रावयति 'आसु तदा नाडीषु सृप्तो भवति' इति तत्रापि प्रदेशान्तरप्रसिद्धस्य ब्रह्मणोऽप्रतिषेधान्नाडीद्वारेण ब्रह्मण्येवावतिष्ठत इति प्रतीयते। न चैवमपि

वधानाभ्यां शयनसाधनत्वात् समुच्चय, तथेहापि नाडीपुरीतो जीवस्य सञ्चारद्वारा ब्रह्मणेव स्वप्तिरिति समुच्चय इत्यर्थः। नाडीनां प्राणस्य च एकेन वाक्येनोपादानाच्चायं समुच्चय इत्याह एकवाक्येति। आधारत्वमात्रं सप्तम्यर्थो न निरपेक्षत्वं अतो न समुच्चयस्य सप्तम्या बाध इत्याह। न चैवमपीति। समुच्चयेऽपीत्यर्थः। अत्र नाडीशब्दो नाडीषु भोक्तुः

नाडीषु सप्तमी विरुध्यते, नाडीभिरपि ब्रह्मोपसर्पन् सुप्त एव नाडीषु भवति। यो हि गङ्गया सागरं गच्छति गत एव स गङ्गायां भवति। अपि चात्र रश्मिनाडीद्वारात्मकस्य ब्रह्मलोकमार्गस्य विवक्षितत्वान्नाडीस्तुत्यर्थं सुप्तिसङ्कीर्तनं, नाडीषु सुप्तो भवतीत्युक्त्वा 'अतस्तं न कश्चन पाप्मा स्पृशति' इति ब्रुवन् नाडीः प्रशंसति। ब्रवीति च पाप्मस्पर्शाभावे हेतुं 'तेजसा हि तदा सम्पन्नो भवति' इति। तेजसा नाडीगतेन पित्ताख्येनाभिव्याप्तकरणो न बाह्यान् विषयानीक्षत इत्यर्थः। अथवा तेजस इति ब्रह्मण एवायं निर्देशः, श्रुत्यन्तरे 'ब्रह्मैव तेज एव' इति तेजःशब्दस्य ब्रह्मणि प्रयुक्तत्वात्, ब्रह्मणा हि तदा सम्पन्नो भवति नाडीद्वारेण अतस्तं न कश्चन पाप्मा स्पृशतीत्यर्थः। ब्रह्मसम्पत्तिश्च पाप्मस्पर्शाभावे हेतुः समधिगतः, सर्वे पाप्मानोऽतो निवर्तन्ते अपहतपा-

---

गुमनं विवक्षितं रश्मिसम्बद्धनाडीरूपमार्गस्तुत्यर्थत्वादित्याह। तेज-सेति। पित्तेन विप्रकीर्णत्वाभावे सुखदुःखयोरभावात् तद्धेतुधर्माधर्माख्य-पाप्मास्पर्श इत्यर्थः, अपहतपाप्मब्रह्मसम्पत्त्या वा पाप्मास्पर्श इत्याह। अथ वेति। अस्मिन् व्याख्याने लाभमाह। एवञ्चेति। नात्र तदा भवत्यस्मिन् प्राण एवैकधा भवतीति श्रुतः समुच्चय आश्रितो भवतीत्यर्थः। नाडीमत्स्ययोर्गुणप्रधानभावेन द्वावौ समुच्चयवत् पुरीतद्ब्रह्मणोरपीत्याह। तयोरित्यादिना। आकाशे ब्रह्मणि शेते हृत्पुण्डरीकस्य ताभिः प्रत्यवसृप्य पुरीतति शेते इत्युक्तं, तथा च नाडीद्वारा पुरीततं गत्वा ब्रह्मणि शेत इति समुच्चयः सिद्ध इत्याह। तथा प्राज्ञेनेति। सत्यानन्दो भवति प्राज्ञेन सम्परिष्वक्त इति समाख्यातः श्रुतेः एव सम्प्रसादनीत्यत इत्याह। एवञ्चेति। किञ्च प्रकृतदर्शादिसाधनैकपुरोऽज्ञानिवृत्तौ मिथोऽनपेक्षतया समर्थत्वाद्युक्तो वीहियवयोर्विकल्पः, नाड्यादीनान्तु ब्रह्मनिरपेक्षतया

यथा ह्येष ब्रह्मलोकः' इत्यादिश्रुतिभ्यः। एवं च सति प्रदेशान्तरप्रसिद्धेन ब्रह्मणा सुप्तिस्थानेनानुगतो नाडीनां चयः समाश्रितो भवति। तथा पुरीततोऽपि ब्रह्मप्रक्रियायां सङ्कीर्तनात्। तदनुगुणमेव सुप्तिस्थानत्वं विज्ञायते 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' इति हृदयाकाशे सुप्तिस्थाने प्रकृते इदमुच्यते 'पुरीतति शेते' इति। 'पुरीतदिति हृदयपरिवेष्टनमुच्यते, तदन्तर्वर्तिन्यपि हृदयाकाशे शयानः शक्यते पुरीतति शेत इति वक्तुं, प्राकारपरिक्षिप्तेऽपि हि पुरे वर्तमानः प्राकारे वर्तत इत्युच्यते। हृदयाकाशस्य च ब्रह्मत्वं समधिगतं 'दहर उत्तरेभ्यः' इत्यत्र। तथा नाडीपुरीतत्समुच्चयोऽपि ताभिः प्रत्यवसृप्य पुरीतति शेत इत्येकवाक्योपादानादवगम्यते। सत आगमीय प्रसिद्धमेव ब्रह्मत्वमेतासु श्रुतिषु 'त्रीण्येव सुप्तिस्थानानि सङ्कीर्तितानि नाड्यः पुरीतद्ब्रह्म च' इति, तत्रापि च द्वारमात्रं नाड्यः पुरीतच्च, ब्रह्मैव त्वेकं अनपायि सुप्तिस्थानम्। अपि च नाड्यः पुरीतद्वा जीवस्योपाध्याधार एव भवति, तत्रास्य करणानि वर्तन्त इति। न ह्युपाधिसम्बन्धमन्तरेण स्वत

---

सुषुप्तजीवाधारत्वासामर्थ्यात् न विकल्प इत्याह। अपि च नाड्य इति। उपाधिद्वारा नाडीपुरीततोरुपहितजीवाश्रयत्वं परम्परया वाच्यं, तदपि सुषुप्तौ न सम्भवति उपाध्यभावादित्यर्थः। ननु ब्रह्मापि जीवस्य न मुख्यं स्थानं अभेदादित्यत आह। ब्रह्माधारत्वमिति। जीवस्य ब्रह्म स्वाभेदेनाऽऽधार-स्थानं नाडीपुरीततोस्तु लीनोपाधेर्जीवस्य स्थितिरेव न सम्भवतीत्युक्त-

एव जीवस्याधारः कश्चित् सम्भवति, ब्रह्माव्यतिरेकेण स्वमहिमप्रतिष्ठितत्वात्। ब्रह्माधारत्वमप्यस्य सुषुप्तेनैवाधाराधेयभेदाभिप्रायेणोच्यते कथं तर्हि तादात्म्याभिप्रायेण यत आह 'सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति' इति। स्वशब्देनात्माभिलप्यते स्वरूपमापन्नः सुषुप्तो भवतीत्यर्थः। अपि च न कदाचिज्जीवस्य ब्रह्मणा सम्पत्तिर्नास्ति स्वरूपस्यानपायित्वात्, स्वप्नजागरितयोस्तु उपाधिसम्पर्कवशात् पररूपापत्तिमिवापेक्ष्य तदुपशमनमाचात् सुषुप्ते स्वरूपापत्तिर्विवक्ष्यते, अतश्च सुषुप्तावस्थायां कदाचित् सता सम्पद्यते कदाचित् न सम्पद्यत इत्ययुक्तम्। अपि च स्थानविकल्पाभ्युपगमेऽपि विशेषविज्ञानोपशमलक्षणं तावत् सुषुप्तं न क्वचिद्विशिष्यते तत्र सति सम्पन्नस्तावदेकत्वात् न विजानातीति युक्तं 'तत्केन कं विजानीयात्' इति श्रुतेः। नाडीषु पुरीतति च शयानस्य न किञ्चिदविज्ञाने कारणं शक्यं विज्ञातुं भेदविषयत्वात्, 'यत्र वान्यदिव स्यात् तत्रान्योऽन्यत्

---

र्थसामर्थ्याभावात् न विकल्प इत्यर्थः। सुषुप्तौ जीवस्य भेदकोपाधिलयादौत्सर्गिकब्रह्माभेदस्य विकल्पो न युक्त इत्याह। अपि चेति। किञ्च नाड्यादीनामन्यतमस्थाने वा सुप्तिर्नाडीनापि सुप्तं न विशिष्यत इति सर्वं तच्च वक्तुं न शक्यत इत्याह। अपि च स्थानेति। भेदाभावो हि भेदज्ञानाभावे हेतुः, नाडीपुरीतद्गतस्य तु जीवस्य भेदावस्थत्वात् भेदाविज्ञाने कारणं नास्तीत्यर्थः। द्वैतावस्थस्यापि द्वैताज्ञाने हेतुं शङ्कते। ननु भेदेऽपि द्रष्टुर्द्रष्टव्यात् दूरत्वं स्वाभाविकमौपाधिकं वा। तत्राद्यं शङ्कातमनूद्य प्रत्याह यत्राऽन्यद्वादिना। द्वितीयमनूद्य दूषयति। उपाधिगतमेवेति।

स्येत्' इति श्रुतेः। ननु भेदविषयस्याप्यतिदूरादिकारणमविज्ञाने स्यात्। नाऽस्त्येवं स्यात् यदि जीवः स्वतः परिच्छिन्नोऽभ्युपगम्येत यथा विष्णुमित्रः प्रवासी स्वगृहं न पश्यतीति, न तु जीवस्योपाधिव्यतिरेकेण परिच्छेदो विद्यते, उपाधिगतमेवातिदूरादिकारणमविज्ञान इति यद्युच्येत तथाप्युपाधेरुपशान्तत्वात् सत्येव सम्पन्नो न विजानातीति युक्तम्। न च वयमिह तुल्यवत् नाड्यादिसमुच्चयं प्रतिपादयामः, न हि नाड्यः सुप्तिस्थानं पुरीतद्वेत्यनेन विज्ञानेन किञ्चित् प्रयोजनमस्ति, न ह्येतद्विज्ञानप्रतिबद्धं फलं किञ्चित् श्रूयते, नाप्येतद्विज्ञानं फलवतः कस्यचिदङ्गमुपदिश्यते, ब्रह्म त्वनपायि सुप्तिस्थानमित्येतत् प्रतिपादयामः, तेन तु विज्ञानेन प्रयोजनमस्ति, जीवस्य ब्रह्मात्मत्वावधारणं स्वप्नजागरितव्यवहारविमुक्तत्वावधारणञ्च। तस्मादात्मैव सुप्तिस्थानम्॥

## अतः प्रबोधोऽस्मात्॥ ८ ॥

यस्माच्चात्मैव सुप्तिस्थानं अत एव कारणात् नित्यवदेवास्मादात्मनः प्रबोधः स्वापाधिकारे शिष्यते, कुत एतदा-

---

उपाधिभिन्नत्वेन नाड्यादौ स्वापे कतिपयसन्निकृष्टार्थज्ञानप्रसङ्गात् सुषुप्तिव्याघातः स्यात्। उपाधिलये त्वन्यत् न जानाति स्वैक्ययोगात् ब्रह्मण्येव स्वाप आत्मन्येव इत्यर्थः। एवं विकल्पं निरस्य नाडीपुरीतोर्ब्रह्मणा सह तुल्यवत्समुच्चयत्फलत्वेन दूषयन् गुणप्रधानत्वेन समुच्चयमुपसंहरति। न च वयमित्यादिना॥

किञ्च ब्रह्मणः सकाशाज्जीवस्योत्थानश्रुतेर्ब्रह्मैव सुषुप्तिस्थानमित्याह

गादित्यस्य प्रश्नस्य प्रतिवचनावसरे 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वे प्राणाः' इत्यादि, 'सत आगम्य न विदुः सत आगच्छामहे' इति च । विकल्प्यमानेषु तु सुषुप्तिस्थानेषु कदाचित् नाडीभ्यः प्रतिबुध्यते कदाचित् पुरीततः कदाचिदात्मन इत्यशासिष्यत् । तस्मादप्यात्मैव तु सुप्तिस्थानमिति ॥

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

तस्याः पुनः सत्सम्पत्तेः प्रतिबुध्यमानः किं य एव सत् सम्पन्नः स एव प्रतिबुध्यते उतान्यो वेति चिन्त्यते । तत्र प्राप्तं तावत् अनियम इति । कुतः, यदा हि जलराशौ कश्चिज्जलबिन्दुः प्रक्षिप्यते जलराशिरेव स तदा भवति, पुनरुद्धरणे स एव जलबिन्दुर्भवतीति दुःसम्पादं, तद्वत् सुप्तः परेणैकत्वमापन्नः सम्प्रसीदति न स एव पुनरुत्थातुमर्हति, तस्मात् स एवेश्वरो वान्यो वा जीवः प्रतिबुध्यत इत्येवं प्रा-

---

सूत्रकारः । अतः प्रबोध इति । नाडीपुरीततोः कार्यस्थानापादकत्वाभावात् न सुप्तिस्थानमित्यर्थः, तस्मादुपाधिलये जीवस्य ब्रह्माभेदादौपाधिक एव भेद इति विवेकाद्वाक्यार्थभेदविद्भिरिति स्थितम् ॥

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः । सुषुप्तौ उपाधिनाशात् कर्मानुस्मृत्यादेर्दर्शनाच्च संशये सद्रूपात् ब्रह्मणो जीवस्योत्थाननियमोक्तेः सुषुप्तिस्थानमितक्रमयुक्तं । सुप्तादन्यस्याप्युत्थानसम्भवेन सुषुप्तस्य नामादिस्थानत्वसम्भावितत्वापेक्षया नियामकाभावादनियम इति पूर्वपक्षमाह । तस्याः पुनरित्यादिना । पूर्वपक्षे ज्ञानवैयर्थ्यं सुषुप्तौ वा पुराणसिद्धस्य मुक्तिसिद्धेः, सिद्धान्ते तु अज्ञातब्रह्मात्मना स्थितस्यास्य

म्ने इदमाह। स एव तु जीवः सुप्तः स्वास्थ्यं गतः पुनरुत्तिष्ठति नान्यः। कस्मात्, कर्मानुस्मृतिशब्दविधिभ्यः। विभज्य हेतून् दर्शयिष्यामि, कर्मशेषानुष्ठानदर्शनात् तावत् स एवोत्थातुमर्हति नान्यः। तथा हि पूर्वेद्युरनुष्ठितस्य कर्मणोऽपरेद्युः शेषमनुतिष्ठन् दृश्यते, न चान्येन सामिकृतस्य कर्मणोऽन्यः शेषक्रियायां प्रवर्तितुमर्हति अतिप्रसङ्गात्, तस्मादेक एव पूर्वेद्युरपरेद्युश्चैकस्य कर्मणः कर्तेति गम्यते। इतश्च स एवोत्तिष्ठति यत्कारणमतीतेऽहन्यहमदोऽद्राक्षमिति पूर्वानुभूतस्य पश्चात् स्मरणमन्यस्योत्थाने नोपपद्यते, न ह्यन्यदृष्टमन्योऽनुस्मर्तुमर्हति। 'सोऽहमस्मि' इति चात्मानुस्मरणमात्मान्तरोत्थाने नावकल्पते। शब्देभ्यश्च तस्यैवोत्थानमवगम्यते 'तथा हि पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव' 'इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति'। 'त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तत्तदा भवन्ति' इत्येवमादयः शब्दाः स्वापप्रबोधाधिकारे

---

पुनस्तस्यैवोत्थानाद्ब्रह्मभावादज्ञाननाशाय ज्ञानापेक्षेति फलं ईश्वरो नेता-नियमदार्ढ्यायोक्तं। 'स वान्यो वेतीदं पूर्वपक्षः। ज्ञानं विना बुद्ध्याद्युपाधेरत्यन्तनाशाभावाद्यथा बुद्ध्युपहितो जीवः सुषुप्तौ कारणात्मना स्थितस्तथैव नानाकर्मानुभवसंस्कारवद्बुद्ध्युपहित उत्तिष्ठतीति सिद्धान्तयति। न यथा जिनमार्दिनः। नासिकृतस्यार्धकृतस्य' एकस्यैव ज्योतिष्टोमादेरनेकयजमानकर्तृकत्वेऽतिप्रसङ्गः। श्रुतिसूत्राण्युदाहृत्य दर्शयतां प्रत्यभिज्ञामाह। 'सोऽहमस्मि'। अयनं गमनं न्यायः। योनिं तत्तदिन्द्रियस्थानं प्रति

पठिता नाम्नान्तरोत्थाने सामञ्जस्यमीयुः । कर्मविद्याविधिभ्यश्चैवमेव गम्यते, अन्यथा हि कर्मविद्याविधयोऽनर्थकाः स्युः, अन्योत्थानपक्षे हि सुप्तमात्रो मुच्यते इत्यापद्येत, एवं चेत् स्यात् वद किं कालान्तरफलेन कर्मणा विद्यया वा कृतं स्यात् । अपि चान्योत्थानपक्षे यदि तावच्छरीरान्तरे व्यवहरमाणो जीव उत्तिष्ठेत् तत्तद्व्यवहारलोपप्रसङ्गः स्यात्। अथ तत्र सुप्त उत्तिष्ठेत् कल्पनानर्थक्यं स्यात्, यो हि यस्मिन् शरीरे सुप्तः स तस्मिन्नोत्तिष्ठति, अन्यस्मिन् शरीरे सुप्तोऽन्यस्मिन्नुत्तिष्ठति इति कोऽस्यां कल्पनायां लाभः स्यात् । अथ मुक्त उत्तिष्ठेत् अन्तवान्मोक्ष आपद्येत, निवृत्ताविद्यस्य च पुनरुत्थानमनुपपन्नम् । एतेनैश्वरोत्थानं प्रत्युक्तं, नित्यनिवृत्ताविद्यत्वात् । अकृताभ्यागमकृतविप्रणाशौ च दुर्निवारावन्योत्थानपक्षे स्यातां, तस्मात् स एवोत्तिष्ठति नान्य इति । यत्पुनरुक्तं 'यथा जलराशौ प्रक्षिप्तो जलबिन्दुर्नोद्धर्तुं शक्यते एवं सति सम्पन्नो जीवो नोत्पतितुमर्हतीति' तत्परिह्रियते । युक्तं तत्र विवेककारणाभावाज्जलबिन्दोरनु-

---

नियतं गमनं यथा भवति तथा प्रतियोन्यागच्छति जागरणायेति सूत्रार्थः। न विन्दूनामितरस्थानसम्भवात् सुप्तस्योत्थाननियम उक्तः, इह पूर्वप्रबोधे ये भवन्ति त एव तदोत्तरप्रबोधे भवन्तीत्यर्थः । विधिं व्याचष्टे । [illegible] । स एवोत्तिष्ठतीति निर्णीयतेऽत्रार्थः अत्रैवोत्सूत्रं युक्त्यन्तरमाह । [illegible]र्चनतादिना । अन्योत्थाने सुप्तादेर्न पूर्वकृतकार्यं तत्प्रकृतसुप्ताद्याः परैः सुप्तजीवकृतकर्मनाशश्चेत्यर्थः । पूर्वपक्षयुक्तं दृष्टान्तं वैषम्येण दूषयति । यत् पुनरित्यादिना । अपसृतजलमपि विवेचनं प्राज्ञदृष्टापेक्ष ईश्वर-

ज्वरणं, इह तु विद्यते विवेककारणं, कर्म्म च विद्या चेति वैषम्यम् । दृश्यते च दुर्विवेचनयोरपि अस्मज्जातीयैः क्षीरोदकयोः संसृष्टयोर्हंसेन विवेचनम् । अपि च न जीवो नाम कश्चित् परस्मादात्मनोऽन्यो विद्यते यो जलबिन्दुरिव जलराशेः सतो विविच्येत, सदेव तूपाधिसम्पर्काज्जीव इत्युपचर्य्यते इत्यसकृत् प्रपञ्चितम् । एवं सति यावदेकोपाधिगता बन्धानुवृत्तिस्तावदेकजीवव्यवहारः, उपाध्यन्तरगतायां तु बन्धानुवृत्तौ जीवान्तरव्यवहारः, स एवायमुपाधिः स्वापप्रबोधयोर्बीजाङ्कुरन्यायेनेत्यतः स एव जीवः प्रतिबुध्यत इति युक्तम् ॥

## मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥ १० ॥

अस्ति मुग्धो नाम यं मूर्च्छित इति लौकिकाः कथयन्ति, स तु किमवस्थ इति परीक्षायामुच्यते, तिस्रस्तावदवस्थाः शरीरस्थस्य जीवस्य प्रसिद्धाः जागरितं स्वप्नः सुषुप्तमिति । चतुर्थी शरीरादपसृप्तिः, न तु पञ्चमी काचिदवस्था जीवस्य

---

करोतीति मत्वा दृष्टान्तमाह । दृश्यते चेति । ब्रह्माभेदाच्च जीवस्य जलबिन्दुवैलक्षण्यमित्याह । अपि चेति । अभेदे 'न चान्यो योऽवतिष्ठति' इति चिन्तानवकाश इत्याशङ्क्य बुद्धिभेदेन जीवभेदाच्छिन्नेत्याह । एवं सतीति । सुषुप्ते बुद्धिनाशेन मतमहं बुद्ध्युपाधिभेदादेकजीवस्य व्यवहारो न स्यादित्यत आह । स एवायमिति । सूक्ष्मरूपात्मना स्थितोऽयमुपाधिरित्यर्थः ॥

अवस्थान्तरत्वादात्मानं विविच्य मूर्च्छितो विवेचयति । मुग्धेऽर्द्धसम्पत्तिः परिशेषात् । मूर्च्छा प्रसिद्धावस्थान्तर्गता वा पञ्चमावस्था वेति अवस्था-चतुष्टयविदं संशयस्य तद्वैलक्षण्यात् संशये सोऽर्द्धमिति प्रतिज्ञातोऽसिद्धः

श्रुतौ स्मृतौ वा प्रसिद्धास्ति, तस्मात्त्रयाणामेवावस्थानामन्यतमावस्था मूर्च्छेत्येवं प्राप्ते ब्रूमः । न तावन्मुग्धो जागरितावस्थो भवितुमर्हति, न ह्ययमिन्द्रियैर्विषयानीक्षते । स्यादेतत् इषुकारन्यायेन मुग्धो भविष्यति, यथेषुकारो जाग्रदपि इष्वासक्तमनस्तया नान्यान् विषयानीक्षते एवं मुग्धो मुसलसम्पातादिजनितदुःखानुभवव्यग्रमनस्तया जाग्रदपि नान्यान् विषयानीक्षते इति । न, अचेतयमानत्वात् । इषुकारो हि व्यापृतमना ब्रवीति इषुमेवाहमेतावन्तं कालमुपलभमानोऽभूवमिति, मुग्धस्तु लब्धसंज्ञो ब्रवीति अन्धे तमसि अहमेतावन्तं कालं प्रक्षिप्तोऽभूवं न किञ्चिन्मया चेतितमिति । जाग्रतश्चैकविषयासक्तचेतसोऽपि देहो विध्रियते, मुग्धस्य तु देहो धरण्यां पतति, तस्मात् न जागर्ति नापि स्वप्नान् पश्यति, निःसंज्ञत्वात् । नापि मृतः, प्राणोष्मणोर्भावात् । मुग्धे हि जन्तौ मृतोऽयं स्यात् न वा मृत इति संशयाना ऊष्मास्ति नास्तीति हृदयदेशमालभन्ते निश्चयार्थं, प्राणोऽस्ति नास्तीति च नासिकादेशं, यदि प्राणोष्मणोरस्तित्वं नावगच्छन्ति ततो मृतोऽयमित्यध्यवसाय दहना-

सुषुप्त्यभेदबुद्धिर्विशेषज्ञानाभावविशेषेण लिङ्गेन सुषुप्तिरेव मूर्च्छेति प्रत्यभिज्ञानात् सुषुप्त्यन्तर्गता मूर्च्छेति दृष्टान्तसङ्गत्या पूर्वपक्षमाह । निपला-दिति । पूर्वपक्षे प्रसिद्धावस्थातः पृथगात्मनो मूर्च्छाता विवेकार्थं यत्नाविधिः फलं, सिद्धान्ते पृथक्यत्नभाव्यमिति भेदः। परिशेषं दर्शयन् सिद्धान्तयति । न तावदित्यादिना । जाग्रदपि जागरावस्थोऽपीत्यर्थः । ऐन्द्रियकसर्वज्ञानं देहधारणञ्च तस्यास्ति न मुग्धस्येति वैधर्म्योक्त्या दूषयति । चेता-दिना । मूर्च्छाया जागराद्देहद्वारा संबन्धाभ्यां भेदमाह । नापीत्यादिना।

यारण्यं नयन्ति, अथ तु प्राणमूष्माणं वा प्रतिपद्यन्ते ततो नायं मृत इत्यध्यवसाय संज्ञालाभायाभिषज्यन्ति । पुनश्च-स्थानाच्च न दिष्टं गतः न हि यम गतो यमराष्ट्रात् प्रत्यागच्छति । अस्तु तर्हि सुषुप्तः निःसंज्ञत्वात् अमृतत्वाच्च । न, वैलक्षण्यात् । मुग्धः कदाचिच्चिरमपि नोच्छ्वसिति सवेपथुरस्य देहो भवति भयानकम् वदनं विस्फारिते नेत्रे, सुषुप्तस्तु प्रसन्नवदनः तुल्यकालं पुनः पुनरुच्छ्वसिति निमीलिते अस्य नेत्रे भवतः, न चास्य देहो वेपते, पाणिपेषणमात्रेण च सुषुप्तमुत्थापयन्ति, न तु मुग्धं मुद्गरघातेनापि । निमित्तभेदश्च भवति मोहस्वापयोः, मुसलसम्पातादिनिमित्तत्वान्मोहस्य श्रमनिमित्तत्वाच्च स्वापस्य । न च लोकेऽस्ति प्रसिद्धिः मुग्धः सुप्त इति । परिशेषादर्धसम्पत्तिर्मुग्धतेत्यवगच्छामः निःसंज्ञकत्वात् सम्पन्नः इतरस्माच्च वैलक्षण्यादसम्पन्न इति । कथं पुनरर्धसम्पत्तिर्मुग्धता इति शक्यते वक्तुं, यावता सुप्तं प्रति तावदुक्तं श्रुत्या 'सता सोम्य तदा सम्पन्नो भवति' 'अत्र स्तेनोऽस्तेनो भवति' 'नैनं सेतुमहोरात्रे-

---

आरभन्ते सुवन्ति । दिष्टं मरणम् । सुषुप्तिमूर्च्छयोः किञ्चित्साम्येऽपि बहुवैलक्षण्याद्भेद इत्याह । नेति । लक्षणभेदमुक्त्वा निमित्तभेदमाह । निमित्तेति । प्रत्यभिज्ञामभिप्रेत्याह । न चेति । उक्तमाक्षेपं व्याख्यानर्धसम्पत्तिः सर्वैः सुषुप्तिधर्मैरसम्पन्नो मुग्धः सुषुप्तो न भवति, सर्वैर्मरणावस्थाधर्मैरसम्पत्तेर्मृतोऽपि न किन्तु अवस्थान्तरं गत इति सूत्रार्थः । अत्र सर्वो जीवस्य ब्रह्मणार्धसम्पत्तिरस्तीति मानः शङ्कते । कथमिति । ननु सुषुप्तं प्रति सत्सम्पत्त्युक्तं नत्वर्धसम्पत्त्यभिप्रायं । उदाहरणान्त मुग्धस्यापि तत्र इति चेत्; तथात्र सम्पत्त्यभिप्रायेणार्धः । सुषुप्तावे

तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्' इत्यादि । जीवे हि सुकृतदुष्कृतयोः प्राप्तिः सुखित्वदुःखित्वप्रत्ययोत्पादनेन भवति, न च सुखित्वप्रत्ययो दुःखित्वप्रत्ययो वा सुषुप्ते विद्यते, मुग्धेऽपि तौ प्रत्ययौ नैव विद्येते, तस्मादुपाध्युपशमात् सुषुप्तवन्मुग्धेऽपि कृत्स्नसम्पत्तिरेव भवितुमर्हति नार्धसम्पत्तिरिति । अत्रोच्यते न ब्रूमो मुग्धेऽर्धसम्पत्तिर्जीवस्य ब्रह्मणा भवतीति, किं तर्हि अर्धेन सुषुप्तपक्षस्य भवति मुग्धत्वं अर्धेनावस्थान्तरपक्षस्येति ब्रूमः । दर्शिते च मोहस्य स्वापेन साम्यवैषम्ये । द्वारं चैतन्मरणस्य यदास्य सावशेषं कर्म भवति तदा वाङ्मनसे प्रत्यागच्छतः यदा तु निरवशेषं कर्म भवति तदा प्राणोष्माणावपगच्छतः, तस्मादर्धसम्पत्तिं ब्रह्मविद इच्छन्ति । यत्तूक्तं न पञ्चमी काचिदवस्था प्रसिद्धास्तीति, नैष दोषः, कादाचित्कीयमवस्थेति न प्रसिद्धा स्यात्, प्रसिद्धा चैषा लोकायुर्वेदयोः । अर्धसम्पत्त्यभ्युपगमाच्च न पञ्चमी गण्यत इत्यनवद्यम् ॥

---

कर्मासम्बन्धे पुनरुत्थानं कथमित्याशङ्क्य तत्कार्याभावात् तदसम्बन्धोक्तिरित्याह । जीवे हीति । ब्रह्मणा कृत्स्नसम्पत्तिमङ्गीकृत्य परिहरति । न ब्रूम इति । मुग्धत्वं हि सुषुप्त्यर्धेन निःसंज्ञत्वादिधर्मेण साम्येन सम्पन्नं भवति, मरणस्यार्धेन कम्पादिना सम्पन्नमित्यर्धसम्पत्तिरित्यर्थः । इतोऽपि सुषुप्तिवैषम्यमित्याह । द्वारञ्चेति । अप्रसिद्धिमङ्गीकृत्योक्तं प्रसिद्धिरप्यस्तीत्याह । प्रसिद्धा चेति । आयुर्वेदो वैद्यशास्त्रं । प्रसिद्धौ कथं विचार इत्याशङ्क्य पञ्चमत्वेनाप्रसिद्धेरित्याह । अर्धेति । सुषुप्त्यादिधर्मार्धसम्पत्त्या तदन्तर्भावबुद्धेर्लोकानामित्यर्थः ॥

एताभिरवस्थाभिरलिप्तस्त्वमर्थ इति विचार्यादावुद्दिष्टं तत्पदार्थं निरूपयितुकामः प्रथमं तस्य निर्विशेषत्वमाह । न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि । उद्दिष्टत्वंपदार्थविशोधनानन्तरं तत्पदार्थ-

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

येन ब्रह्मणा सुषुप्त्यादिषु जीव उपाध्युपशमात् सम्पद्यते तस्येदानीं स्वरूपं श्रुतिवशेन निर्धार्यते । सन्त्युभयलिङ्गाः श्रुतयः ब्रह्मविषयाः 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' इत्येवमाद्याः सविशेषलिङ्गाः, 'अस्थूलमनण्वह्रस्वमदीर्घम्' इत्येवमाद्याश्च निर्विशेषलिङ्गाः । किमासु श्रुतिषु उभयलिङ्गं ब्रह्म प्रतिपत्तव्यमुतान्यतरलिङ्गं, यदाप्यन्यतरलिङ्गं तदापि सविशेषमुत निर्विशेषमिति मीमांस्यते । तत्रोभयलिङ्गश्रुत्यनुपहात् उभयलिङ्गमेव ब्रह्मेत्येवं प्राप्ते ब्रूमः, न तावत् स्वत एव परस्य ब्रह्मण उभयलिङ्गत्वमुपपद्यते, न ह्येकं वस्तु स्वत एव रूपादिविशेषोपेतं तद्विपरीतञ्चेत्यभ्युपगन्तुं शक्यं विरोधात् । अस्तु तर्हि स्थानतः पृथिव्याद्युपाधियोगादिति, तदपि नोपपद्यते । न ह्युपाधियोगादप्यन्यादृशस्य वस्तुनोऽन्यादृशस्वभावः सम्भवति । न हि स्वच्छः सन् स्फटिकोऽलक्तकाद्युपाधियोगादस्वच्छो

---

ब्रह्मविचारस्यावसरसङ्गतिमाह । येनेति । निर्विशेषत्वं सविशेषत्वञ्चेत्युभयं लिङ्ग्यते ज्ञाप्यते याभिस्ता उभयलिङ्गाः श्रुतयः संशयबीजत्वेन सन्तीत्यर्थः । यथा [illegible] मर्त्योभयरूपं सत्यत्वं तथा श्रुतिप्रामाण्यादुभयरूपं ब्रह्म ध्येयमिति दृष्टान्तेन पूर्वपक्षः । निर्विशेषमेकरूपमेव ध्येयमिति सिद्धान्तयति । न तावदिति । किमुभयरूपत्वं स्वतः उत स्वतः निर्गुणस्य सर्वगन्धत्वादिविशेषः उपाधितः सत्यः आहोस्वित् स्वतः सविशेषमेव ब्रह्मेति, तत्राद्यं निरस्य द्वितीयं अनूद्य दूषयति । अस्तु तर्हीति । स्थानमुपाधिः, ब्रह्मणि विशेषः कल्पितः औपाधिक-

भवति, भ्रममात्रत्वादस्वच्छताभिनिवेशस्य, उपाधीना-मविद्याप्रत्युपस्थापितत्वात्। अतश्चान्यतरलिङ्गपरिग्रहेऽपि समस्तविशेषरहितं निर्विकल्पकमेव ब्रह्म प्रतिपत्तव्यं न तद्विपरीतम्। सर्वत्र हि ब्रह्मस्वरूपप्रतिपादनपरेषु वाक्येषु 'अशब्दमस्पर्शमरूपमव्ययम्' इत्येवमादिष्वपास्तसमस्तवि-शेषमेव ब्रह्मोपदिश्यते॥

## न भेदादिति चेन्न प्रत्येकमतद्वचनात्॥ १२॥

अथापि स्यात्, यदुक्तं निर्विकल्पकमेकलिङ्गमेव ब्रह्म नास्य स्वतः स्थानतो वोभयलिङ्गत्वमस्तीति, तन्नोपपद्यते। कस्मात्, भेदात्। भिन्ना हि प्रतिविद्यं ब्रह्मण आकारा उपदिश्यन्ते 'चतुष्पाद् ब्रह्म षोडशकलं ब्रह्म वामनत्वा-दिलक्षणं ब्रह्म त्रैलोक्यशरीरवैश्वानरशब्दोदितं ब्रह्म' इत्येवंजातीयकाः, तस्मात् सविशेषत्वमपि ब्रह्मणोऽभ्युप-गन्तव्यम्। ननूक्तं नोभयलिङ्गत्वं ब्रह्मणः सम्भवतीति। अयमप्यविरोधः, उपाधिकृतत्वादाकारभेदस्य, अन्यथा हि निर्विषयमेव भेदशास्त्रं प्रसज्येतेति चेत्। नेति ब्रूमः।

---

त्वात् स्फटिकलौहित्यवदित्यर्थः। उपाधेः सत्त्वेऽपि तत्कृतः मिथ्येति वक्तुं शक्यं तूपाधीनां मिथ्यात्वात् तत्कृतो विशेषो मिथ्येति किमु वा-च्यमित्याह। उपाधीनामिति। तृतीयं निरस्यति। अतश्चेति। सर्ववि-शेषस्य कल्पितत्वादित्यर्थः। निषेधश्रुतेर्यथार्थत्वाच्च। सर्वत्र हीति॥

भिद्यत इति भेदो विशेषः। विशेषश्रुतावपि विशेषस्यापि श्रुतेरुभय-लक्षणं स्यादिति शङ्कां व्याचष्टे। अथापि स्यादिति। पूर्वोक्तं विरोधं परिहरति। ननूक्तमिति। भेदश्रुतिप्रामाण्यार्थमौपाधिकं रूपभेदमङ्गीकृत्य

श्रुतः, प्रत्येकमतद्वचनात् । प्रत्युपाधिभेदं हि अभेदमेव ब्रह्मणः श्रावयति शास्त्रं 'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा' इत्यादि । अतश्च न भिन्नाकारयोगो ब्रह्मणः शास्त्रीय इति शक्यते वक्तुं, भेदस्योपासनार्थत्वादभेदे तात्पर्यात् ॥

## अपि चैवमेके ॥ १३ ॥

अपि चैवं भेददर्शननिन्दापूर्वकमभेददर्शनमेवैके शाखिनः समामनन्ति–

"मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" ॥ इति ॥

तथान्येऽपि 'भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इति समस्तस्य भोग्यभोक्तृनियन्तृलक्षणस्य प्रपञ्चस्य ब्रह्मैकस्वभावतामधीयते, कथं पुनराकारवदुपदेशिनीष्वनाकारोपदेशिनीषु च ब्रह्मविषयासु श्रुतिषु सतीष्वनाकारमेव ब्रह्मावधार्यते न पुनर्विपरीतमित्यत उत्तरं पठति ॥

---

रादविरोध इति समाध्यर्थः । किमुपाधिगत एव रूपभेदो ब्रह्मण्युपचर्यते ध्यानार्थमुतोपाधिवियोगात् स्वाभाविकरूपतया ब्रह्मणो भेदो भवतीति । आद्येऽस्मदिष्टसिद्धिः द्वितीये भेदश्रुत्या दूष्यते । नेति ब्रूम इति सू-

त्रेतन्निन्दापूर्वकमद्वैतोक्तेश्च निर्विशेषं तत्त्वमिति सूत्रार्थमाह । अपि चेति । भोक्ता जीवो भोग्यं शब्दादि तयोः प्रेरितारमीश्वरं च मत्वा स्थितार्थं मे मम प्रोक्तं सर्वं त्रिविधं ब्रह्मैवेति जानीयादित्यर्थः । द्विविधश्रुतीषु सतीषु निर्विशेषत्वे किं नियामकमिति शङ्कते । कथं पुनरिति ॥

## अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

रूपाद्याकाररहितमेव हि ब्रह्मावधारयितव्यं न रूपादिमत् । कस्मात् तत्प्रधानत्वात् । 'अस्थूलमनण्वह्रस्वमदीर्घं, अशब्दमस्पर्शमरूपमव्ययं, आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म, दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः, तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्व्वानुभूः' इत्येवमादीनि हि वाक्यानि निष्प्रपञ्चब्रह्मात्मतत्त्वप्रधानानि नार्थान्तरप्रधानानीत्येतत्प्रतिष्ठापितं 'तत्तु समन्वयात्' इत्यत्र । तस्मादेवंजातीयकेषु वाक्येषु यथाश्रुतं निराकारमेव ब्रह्मावधारयितव्यं, इतराणि त्वाकारवद्ब्रह्मविषयाणि वाक्यानि न तत्प्रधानानि उपासनाविधिप्रधानानि हि तानि, तेष्वसति विरोधे यथाश्रुतमाश्रयितव्यं, सति तु विरोधे तत्प्रधानान्यतत्प्रधानेभ्यो बलीयांसि भवन्ति इति । एष विनिगमनायां हेतुः येनोभयास्वपि श्रुतिषु सतीष्वनाकारमेव ब्रह्मावधार्यते न पुनर्विपरीतमिति का तर्हि आकारवद्विषयाणां श्रुतीनां गतिरित्यत आह ॥

---

तत्परातत्परविरोधे तत्परं बलवदिति न्यायो नियामक इत्याह । अरूपवदेवेति । उपासनपरवाक्येषु ह्याकारे तात्पर्याभावेऽपि देवतादिप्रत्यक्षवदाकारविशिष्टमात्रस्य निष्प्रपञ्चपरश्रुतिविरोधात् नैर्गुण्यात् । तेन सतीति ॥

## प्रकाशवच्चावैयर्थ्यात्॥ १५॥

यथा प्रकाशः सौरश्चान्द्रमसो वा वियद्व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसम्बन्धात्तेषु ऋजुवक्रादिभावम्प्रतिपद्यमानेषु तद्भावमिव प्रतिपद्यते एवं ब्रह्मापि पृथिव्याद्युपाधिसम्बन्धात् तदाकारमिव प्रतिपद्यते, तदालम्बनो ब्रह्मण आकारविशेषोपदेश उपासनार्थो न विरुध्यते, एवमवैयर्थ्यमाकारवद्ब्रह्मविषयाणामपि वाक्यानां भविष्यति, न हि वेदवाक्यानां कस्यचिदर्थवत्त्वं कस्यचिदनर्थवत्त्वमिति युक्तं प्रतिपत्तुं प्रमाणत्वाविशेषात्। नन्वेवमपि यत् पुरस्तात् प्रतिज्ञातं नोपाधियोगादप्युभयलिङ्गत्वं ब्रह्मणोऽस्तीति तद्विरुध्यते, नेति ब्रूमः। उपाधिनिमित्तस्य वस्तुधर्मतानुपपत्तेः, उपाधीनां चाविद्याप्रत्युपस्थापितत्वात्। सत्यामेव च नैसर्गिक्यामविद्यायां लोकवेदव्यवहारावतार इति तत्र तत्रावोचाम॥

---

कल्पितद्वैते नाऽवकाशस्याद्व मप्रपञ्चत्वश्रुतयो दुर्बला इत्याह। प्रकाशवच्चेति। नन्वाकारवाक्यानामुपाधिकल्पितधर्मवत्त्वादिनार्थवत्त्वं किमिति वर्ण्यते वैयर्थ्यमेवोच्यताम्। तत्राह। न हि वेदवाक्यानामिति। नन्वेवमपीति उभयरूपत्वाभावप्रतिज्ञाविरोधेन श्रुतीनां व्यवस्थितेः स्पष्टार्थः। उपाधीनां कल्पितत्वादौपाधिकस्य सत्यत्वानुपपत्तेर्न वस्तुनः उभयरूपत्वमिति दर्शयन् ब्रह्मणि सत्यं निर्विशेषत्वं मिथ्या सविशेषत्वमित्युपपादयन् द्वैताभ्युपगमस्वीकारेऽपि न पूर्वापरविरोध इत्याह। नेति ब्रूम इति। द्वैतस्य मिथ्यात्वे ज्ञानेन बाधादुपासनादिव्यवहारो न स्यादित्याशङ्क्य बाधात् प्रागेव इत्याह। सत्यामिति।

## आह च तन्मात्रम् ॥ १६ ॥

आह च श्रुतिश्चैतन्यमात्रं विलक्षणरूपान्तररहितं निर्विशेषं ब्रह्म 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' इति । एतदुक्तं भवति, नास्यात्मनोऽन्तर्बहिर्वा चैतन्यादन्यद्रूपमस्ति, चैतन्यमेव तु निरन्तरमस्य स्वरूपं, यथा सैन्धवघनस्यान्तर्बहिश्च लवणरस एव निरन्तरो भवति न रसान्तरं तथैवायमपीति ॥

## दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

दर्शयति च श्रुतिः पररूपप्रतिषेधेनैव ब्रह्म निर्विशेषं 'अथात आदेशो नेति नेति, अन्यदेव तद्विदितादथो अविदितादधीति, यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्येवमाद्या । बाष्कलिना च बाह्वः पृष्टः सन्नवचनेनैव ब्रह्म प्रोवाचेति श्रूयते 'स होवाचाधीहि भगवो ब्रह्मेति स तूष्णीं बभूव तं ह द्वितीये वा तृतीये वा वचन उवाच ब्रूमः

---

यतः श्रुतिश्चिन्मात्रमाह अतश्च विशेषो मिथ्येति सूत्रार्थमाह । आह चेति । सैन्धवघनो लवणपिण्डः ॥

किञ्च श्रुतिस्मृत्योः परनिषेधेन ब्रह्मोपदेशात् निष्प्रपञ्चं ब्रह्मेत्याह । दर्शयति चेति । अथ द्वैतोक्त्यनन्तरं ज्ञानहेतुत्वाच्च नेति नेति उपदेशः क्रियत इत्यर्थः । अधि अध्यापय पुनः पुनरधीहि भो इति निर्बन्धकारिणं तं द्वितीये तृतीये च प्रश्ने तूष्णींभावं स्वकृत्य उवाच । उपशान्तो निरस्तद्वैतः । अतस्तस्य तूष्णींभाव एवोत्तरमिति मौनस्य ब्रह्मा-गमकत्वार्थकः । आदिमत्कार्यं वस्तु भवतीत्यनादिमत् । सत् इन्द्रियमेयम् । असत् परोक्षं न सप्रकाशत्वादित्यर्थः । सर्वभूतगुणैर्दिव्य-

खलु त्वन्तु न विजानासि उपशान्तोऽयमात्मा' इति । तथा स्मृतिष्वपि परप्रतिषेधेनैवोपदिश्यते-

"ज्ञेयं यत् तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते" ॥

इत्येवमाद्यासु । तथा विश्वरूपधरो नारायणो नारदमुवाचेति स्मर्य्यते-

"माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ! ।
सर्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि" ॥ इति ।

## अत एव चोपमासूर्य्यकादिवत् ॥ १८ ॥

यत एव चायमात्मा चैतन्यस्वरूपो निर्विशेषो वाङ्मनसातीतः परप्रतिषेधेनोपदेश्योऽत एव चास्योपाधिनिमित्तामपारमार्थिकीं विशेषवत्तामभिप्रेत्य जलसूर्य्यकादिवत् इत्युपमोपादीयते मोक्षशास्त्रेषु—
'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् ।
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' इति ।

---

गन्धादिभिर्युक्तं मां मूर्तिमन्तं पश्यसीति यत्सा माया अत एव सर्वतो भगवानिति मां द्रष्टुं नार्हसि वस्तुतो द्वैतातीतत्वादित्यर्थः ॥

किन्तु यथा जलाद्युपाधिकल्पितः सूर्यचन्द्रादेर्भेदचलनादिधर्मः परमात्मन इति दृष्टान्तः । श्रुतेश्च निर्विशेषं तत्त्वमित्याह । अत एव चोपमेति । जलबिम्बत्वाकारेण सूर्यस्याभासत्वद्योतनाय सूर्यकेति कप्रत्ययः । यथायं ज्योतिर्मयो विवस्वान् सत एकोऽपि घटभेदेन भिन्नः

"एक एव तु भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" ॥

इति चैवमादिषु। अत्र प्रत्यवस्थीयते ॥

अम्बुवदग्रहणात् तु न तथात्वम् ॥ १९ ॥

न जलसूर्यादितुल्यत्वमिहोपपद्यते तद्वदग्रहणात्। सूर्यादिभ्यो हि मूर्तेभ्यः पृथग्भूतं विप्रकृष्टदेशं मूर्तं जलं गृह्यते तत्र युक्तः सूर्यादिप्रतिबिम्बोदयः न त्वात्माऽमूर्तो न चास्मात् पृथग्भूता विप्रकृष्टदेशाश्चोपाधयः, सर्वगतत्वात् सर्वानन्यत्वाच्च। तस्मादयुक्तोऽयं दृष्टान्त इति। अत्र प्रतिविधीयते ॥

वृद्धिह्रासभाक्त्वमन्तर्भावादुभय
सामञ्जस्यादेवम् ॥ २० ॥

युक्त एव त्वयं दृष्टान्तः विवक्षितांशसम्भवात्, न हि दृष्टान्तदार्ष्टान्तिकयोः क्वचित् किञ्चिद्विवक्षितमंशं मुक्त्वा सर्वसारूप्यं केनचिद्दर्शयितुं शक्यते, सर्वसारूप्ये हि दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात्। न चेदं स्वमनीषिकया जलसूर्यकादिदृष्टान्तप्रणयनम्। शास्त्रप्रणीतस्य त्वस्य प्र-

---

अपोऽनुगच्छन् बहुधा क्रियते एवमजोऽयमात्मा देवः स्वप्रकाश एकोऽप्युपाधिना मायया क्षेत्रेष्वनुगच्छन् भेदरूपः क्रियत इति योजना ॥

इत्यात्मसूर्यदृष्टान्तं प्रत्याशङ्कासूत्रम्। अम्बुवदिति। आत्मनो ऽमूर्तत्वात् दूरस्थोपाध्यभावाच्च मायया बुद्ध्यादिषु प्रतिबिम्बभेदो न युक्त इत्यर्थः ॥

उपाध्यन्तर्भावेन तत्कृतधर्मवत्त्वमात्रं विवक्षितांशस्तेन साम्येन समाधानसूत्रम्। दर्शयतीति। दृष्टान्तवाक्येऽपि नीरूपात्मनः प्रति-

जनमात्रमुपन्यस्यते किं पुनरत्र विवक्षितं साम्यमिति। तदुच्यते। वृद्धिह्रासभाक्त्वमिति। जलगतं हि सूर्यप्रतिबिम्बं जलवृद्धौ वर्धते जलह्रासे ह्रसति जलचलने चलति जलभेदे भिद्यत इत्येवं जलधर्मानुविधायि भवति, न तु परमार्थतः सूर्यस्य तथात्वमस्ति, एवं परमार्थतोऽविकृतमेकरूपमपि सत् ब्रह्म देहाद्युपाध्यन्तर्भावात् भजत इवोपाधिधर्मान् वृद्धिह्रासादीन्, एवमुभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविरोधः॥

दर्शनाच्च॥ २१॥

दर्शयति च श्रुतिः परस्यैव ब्रह्मणो देहादिषूपाधिषु अन्तरनुप्रवेशं—

पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः।
पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्'॥

इति, 'अनेन जीवेनात्मनानुप्रविश्य' इति च। तस्माद्यु-

---

बिम्बं स्वबुद्ध्या कथं कल्प्यत इत्याह। न चेदमिति। श्रूयते न कल्प्यत इत्यर्थः। श्रुतदृष्टान्तस्य सूर्यकादिवत् दृष्टान्तोपन्यासेन किं फलमित्यत आह। शास्त्रेति। आत्मनो निर्विशेषत्वं फलमित्यर्थः। अविरोध इति न वैषम्यमित्यर्थः। आत्मा प्रतिबिम्बशून्यः नीरूपद्रव्यत्वात् वायुवत् इत्यनुमाने आकाशे व्यभिचारः। अल्पजले विदूराकाशप्रतिबिम्बदर्शनादुपाधिरूपस्यात्मन्यपि क्वचिदनपेक्षितमिति भावः॥

प्रवेशश्रुतेश्चोक्तानुमानबाध इत्याह सूत्रकारः। दर्शनाच्चेति। द्विपदः पुरो मनुष्यादिदेहांश्चक्रे चतुष्पदः पुरः पश्वादीन् कृत्वा पुरश्चक्षुराद्यभिव्यक्तेः पुरस्तात् स ईश्वरः पक्षी लिङ्गशरीरी भूत्वा पुरः उक्तानि शरीराण्याविशत् स च प्रविष्टोऽपि पुरुषः पूर्ण इत्यर्थः। तैत्तिरीयके विज्ञा-

क्तमेतत् अत एवोपमा सूर्यकादिवदिति । तस्मात् निर्विकल्पकैकलिङ्गमेव ब्रह्म नोभयलिङ्गं न विपरीतलिङ्गञ्चेति सिद्धम् । अत्र केचित् द्वे अधिकरणे कल्पयन्ति, प्रथमं तावत् किं प्रत्यस्तमिताशेषप्रपञ्चमेकाकारं ब्रह्म उत प्रपञ्चवदनेकाकारोपेतमिति. द्वितीयन्तु स्थिते प्रत्यस्तमितप्रपञ्चत्वे किं सल्लक्षणं ब्रह्म उत बोधलक्षणं उतोभयलक्षणमिति । अत्र वयं वदामः सर्वथाप्यानर्थक्यमधिकरणान्तरारम्भस्येति । यदि तावदनेकलिङ्गत्वं परस्य ब्रह्मणो निराकर्तव्यमित्ययं प्रयासः तत्पूर्वेणैव न स्थानतोऽपीत्यनेनाधिकरणेन निराकृतमित्युत्तरमधिकरणं प्रकाशवच्चेत् व्यर्थमेव भवेत् । न च सल्लक्षणमेव ब्रह्म न बोधलक्षणमिति शक्यं वक्तुं, विज्ञानघन एवेत्यादि श्रुतिवैयर्थ्यप्रसङ्गात् । कथं वा निरस्तचैतन्यं ब्रह्म चेतनस्य जीवस्यात्मत्वेनोपदिश्येत । नापि बोधलक्षणमेव ब्रह्म, न सल्लक्षणमिति शक्यं वक्तुं, 'अस्तीत्येवो-

---

पक्षाद्युक्तेः पक्षित्वं मन्तव्यम् । एवं प्रतिबिम्बभावेन भेदादेः कल्पितत्वात् निर्विशेषं ब्रह्मेति स्वमतमुपसंहरति । तस्मादिति । एकदेशिव्याख्यामुत्थापयति । अत्रेति । न स्थानतोऽपीत्याद्येकमधिकरणं, तत्र ब्रह्मणो निष्प्रपञ्चत्वे स्थिते किंलक्षणं ब्रह्मेति सन्देहे प्रकाशवच्चेत्यादिद्वितीयमधिकरणं प्रवृत्तं न सद्रूपमेव ब्रह्म किन्तु प्रकाशवच्चिद्रूपञ्च । कुतः, अवैयर्थ्यात् । सत्यं ज्ञानं सदेव सोम्येत्युभयश्रुतेर्निरूपे ब्रह्मण्यर्थवत्त्वादिति पूर्वपक्षे सिद्धान्तः । आह च तन्मात्रं सन्मात्रं ब्रह्म । श्रुतिराह ज्ञानस्य सत्तानतिरेकादिति । इदं द्वितीयाधिकरणं दूषयति । अत्र वयमिति । द्वितीयाधिकरणस्य किं ब्रह्मणोऽनेकरूपत्वनिरासः फलं उत बोधरूपत्वनिरासः आहोस्वित् सत्तानिरास इति विकल्प्य सर्वथाप्यानर्थक्यं प्रपञ्चयन् आद्ये गतार्थतामाह । यदि ताव-

पलब्धव्यः' इत्यादिश्रुतिवैयर्थ्यप्रसङ्गात्, कथं वा निरस्तसत्ताको बोधोऽभ्युपगम्येत। नाप्युभयलक्षणमेव ब्रह्मेति शक्यं वक्तुं, पूर्वाभ्युपगमविरोधप्रसङ्गात्। सत्ताव्यावृत्तेन बोधेन बोधव्यावृत्तया च सत्तयोपेतं ब्रह्म प्रतिजानानस्य तदेव पूर्वाधिकरणप्रतिषिद्धं सप्रपञ्चत्वं प्रसज्येत। श्रुतत्वाददोष इति चेत्, न, एकस्यानेकस्वभावत्वानुपपत्तेः। अथ सत्तैव बोधो बोध एव च सत्ता नानयोः परस्परव्यावृत्तिरस्ति इति यद्युच्येत तथापि किं सल्लक्षणं ब्रह्म उत बोधलक्षणं उतोभयलक्षणमित्ययं विकल्पो निरालम्बन एव स्यात्, सूत्राणि त्वेकाधिकरणत्वेनैतान्यभिनीतानि। अपि च ब्रह्मविषयासु श्रुतिष्वाकारवदनाकारप्रतिपादनेन विप्रतिपन्नास्वनाकारं ब्रह्म परिगृह्णीते अवश्यं वक्तव्येतरासां श्रुतीनां

---

र्दिति। न हि द्वितीय इत्याह। न चेति। ब्रह्मणो बोधरूपत्वनिरासे अजडत्वाज्जीवाभेदश्रुतिबाधश्च स्यादित्याह। कथं चेति। न तर्हीय इत्याह। नापीति। सत्तानिरासे बोधस्य तुच्छत्वं च स्यादित्याह। सत्तयेति। न च बोधस्य सत्तानतिरेकान्न तुच्छतेति वाच्यम्। सद्बोधपदयोः शब्दानतिरेके पर्यायत्वप्रसङ्गात्। एवं सिद्धान्तं फलाभावेन दूषयित्वा पूर्वपक्षं दूषयति। नापीति। प्रसङ्गमेवाह। सत्तेति। व्यावृत्तत्वं भिन्नत्वम्। निष्प्रपञ्चैकरूपत्वसिद्धान्तविरोधात् भिन्नोभयरूपत्वानुपपत्तेश्चानुत्थानमित्यर्थः। उभयश्रुतिबलादुभयात्मकमिति शङ्कते। श्रुतत्वादिति। चेदविरुद्धतया परस्परं भिन्नसत्ताबोधयोरेकत्र ब्रह्मण्यभेदशङ्का श्रुतिशतेनापि न युक्तेत्याह। नेति। सद्बोधयोर्भेदोऽस्ति न वा। आद्ये श्रुतेरपि विरुद्धार्थत्वानुपपत्तेर्न पूर्वपक्षोत्थानमित्युक्तम्। अस्त्विति द्वितीयं शङ्कते। अथ सत्तैवेति। सद्बोधपदयोर्वाच्यभेदेऽपि लक्ष्यैक्योपपत्तिरखण्डार्थैकी-

गतिः, तादर्थ्येन प्रकाशवच्चेत्यादीनि सूत्राणि समञ्जसतराणि सम्पद्यन्ते। यदप्याहुः आकारवादिन्योऽपि श्रुतयः प्रपञ्चप्रविलयमुखेनानाकारप्रतिपत्त्यर्था एव न पृथगर्था इति तदपि न समीचीनमिव लक्ष्यते। कथं ये हि परविद्याधिकारे केचित् प्रपञ्चा उच्यन्ते 'यथा युक्ता ह्यस्य हरयः शता दशेत्ययं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च' इत्येवमादयः ते भवन्तु प्रविलयार्थाः, 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' इत्युपसंहारात्। ये पुनरुपासनाधिकारे प्रपञ्चा उच्यन्ते 'यथा मनोमयः प्राणशरीरो भारूपः' इत्येवमादयो न तेषां प्रविलयार्थत्वं न्याय्यं 'स क्रतुं कुर्वीत' इत्येवंजातीयकेन प्रकृतेनैवोपासनविधिना तेषां

---

कारादित्यर्थः। अवशङ्कार्थस्य पूर्वपक्षत्वं न स्यात् सिद्धान्तत्वात्। किञ्चात्र संशयोऽप्ययुक्त इत्याह। तथापीति। एकाधिकरणपक्षेऽपि समञ्जसत्वं नेयार्थोऽत्र स्यात्। सूत्राणीति। अपरे समञ्जसतरं चेत्याह। समर्थ्यादिति। अवश्यापेक्षितगत्यर्थत्वेनोत्तरसूत्राणां पूर्वैकवाक्यत्वान्नाधिकरणभेद इति भावः। आकारश्रुतीनां कल्पिताकारो गतिरिति समन्वयुक्तं, प्रपञ्चविलयवादिनस्तु 'मनोमयः प्राणशरीरः सत्यकामः' इत्याद्याकारश्रुतीनां तदितराकारप्रविलयो गतिरित्याहुः। मनोमय इति कोऽर्थः, मनोऽतिरिक्तोपाधिशून्य इत्यर्थः। एवं शरीरपदेन प्राणातिरिक्तोपाधिनिषेधान्मनोऽप्यभावसिद्धिः एवं सर्वे शब्दा अनाकारब्रह्मपरा इति तन्मतमनूद्य दूषयति। यदपीत्यादिना। किं ज्ञेयब्रह्मप्रकरणस्थानामाकारशब्दानां निषेधपरत्वं उतोपासनाप्रकरणस्थानामपि तत्राद्यमङ्गीकरोति। ये हीति। अस्य जीवस्य प्राणस्येश्वरस्य दश हरयो हि यथा हरणादिन्द्रियाणि प्राणिभेदापेक्षया शतानि सहस्राणि च तेषामीश्वराद्भेदमाशङ्क्याह। अयमिति। ईश्वर एव हरय इत्यर्थः। द्वितीयं

सम्बन्धात्। गुणाश्चैवंजातीयकानां गुणानामुपासनार्थत्वेऽवकल्पमाने न लक्षणया प्रविलयार्थत्वमवकल्प्यते। सर्वेषां च साधारणे प्रविलयार्थत्वे सति 'अभ्युदयवद्धि तत्प्रधानत्वात्' इति विनिगमनकारणवचनमनवकाशं स्यात्। फलमप्येषां यथोपदेशं क्वचित् दुरितक्षयः क्वचिदैश्वर्यप्राप्तिः क्वचित् क्रममुक्तिरित्यवगम्यत एवेति। अतः पार्थगर्थ्यमेवोपासनावाक्यानां ब्रह्मवाक्यानाञ्च न्याय्यं नैकवाक्यत्वम्। कथं चैषामेकवाक्यतोत्प्रेक्ष्यत इति वक्तव्यं। एकनियोगप्रतीतेः प्रयाजदर्शपूर्णमासवाक्यवदिति चेत्, न, ब्रह्मवाक्येषु नियोगाभावात्। वस्तुमात्रपर्यवसायीनि हि ब्रह्मवाक्यानि न नियोगोपदेशीनीति एतद्विस्तरेण प्रतिपादितं 'तत्तु समन्वयात्' [वेदा० अ० १ पा० १ सू० ४] इत्यत्र। किंविषयश्चात्र नियोगोऽभिप्रेयत इति वक्तव्यं, पुरुषो हि नियुज्यमानः कुर्विति स्वव्यापारे कस्मिंश्चित् नियुज्यते। ननु द्वैतप्रप-

द्वयवदिति। तं गुणा इति। मनोमयादिशब्दानां गुणपरत्वे निषेधशेषत्वमपि न युक्तमित्याह। गुणा चेति। किञ्चाकाराकारश्रुति-द्वैविध्ये सति ब्रह्मणः साकारत्वमेवास्तु किं विनिगमकमिति शङ्कोत्थानादस्थू-लादिश्रुतीनां निराकारतात्पर्यनियामकमिति कथनार्थमिदं सूत्रमर्थवद्-भवति। मनोमयत्वादिश्रुतीनां निषेधार्थत्वे तु शङ्कानुत्थानात् नियामकसूत्रं व्यर्थ-मित्याह। सर्वेषां चेति। ननूपासनार्थवाक्यानां स्वार्थे फलाभावात् सकलनिषेधवाक्यशेषत्वमित्याशङ्क्य तस्य श्रुतसाक्षात्फलादिभेदादाह। फलम-पीति। अर्थैक्याभावाच्च नैकवाक्यतेत्याह। कथं चेति। एवं सङ्गते। एकेति। यथा फलवत् दर्शाद्यङ्गनियोगैक्यादङ्गप्रधानवाक्यानामेकवा-क्यता तथा तत्त्वावबोधवाक्य[illegible] प्रपञ्चविलयविधायक[illegible] नियोगद्वयोः

प्रविलयो नियोगविषयो भविष्यति, अप्रविलापिते हि द्वैतप्रपञ्चे ब्रह्मतत्त्वावबोधो न भवतीत्यतो ब्रह्मतत्त्वावबोधप्रत्यनीकभूतो द्वैतप्रपञ्चः प्रविलाप्यः यथा स्वर्गकामस्य यागोऽनुष्ठातव्य उपदिश्यते, एवमपवर्गकामस्य प्रपञ्चप्रविलयः, यथा च तमसि व्यवस्थितं घटादितत्त्वं अवबुभुत्समानेन तत्प्रत्यनीकभूतं तमः प्रविलाप्यते, एवं ब्रह्मतत्त्वमवबुभुत्समानेन तत्प्रत्यनीकभूतः प्रपञ्चः प्रविलापयितव्यः। ब्रह्मस्वभावो हि प्रपञ्चो न प्रपञ्चस्वभावं ब्रह्म तेन नामरूपप्रपञ्चप्रविलापनेन ब्रह्मतत्त्वावबोधो भवति इति। अत्र वयं पृच्छामः कोऽयं प्रपञ्चप्रविलयो नाम, किमग्निप्रतापसम्पर्कात् घृतकाठिन्यप्रविलय इव प्रपञ्चप्रविलयः कर्तव्यः आहोस्विदेकस्मिन् चन्द्रे तिमिरकृतानेकचन्द्रप्रपञ्चवदविद्याकृतो ब्रह्मणि नामरूपप्रपञ्चो विद्यया प्रविलापयितव्य इति। तत्र यदि तावद्विद्यमानोऽयं प्रपञ्चो देहादिलक्षण आध्यात्मिको बाह्यश्च पृथिव्यादिलक्षणः प्रविलापयितव्य इत्युच्येत स पुरुषमात्रेणाशक्यः प्रविलापयितुमिति तत्प्रविलयोपदेशोऽश-

---

...वाक्यानां ...धर्मैक्यवाक्यतेत्यर्थः। नियोगाधिक्यं दूषयति। नेति। विषय गच्छेत्। ननु द्वैतेति। प्रत्यनीकं प्रतिबन्धकम्। ननु प्रपञ्चविलये ब्रह्मलयं स्यादभेदादित्यत आह। ब्रह्मस्वभावो हि प्रपञ्च इति। कारणं हि कार्यस्य स्वरूपं अतः कार्यनाशेऽपि कारणस्य न नाशः घटनाशेऽपि मृद्दर्शनादित्यर्थः। प्रपञ्चस्य सत्यस्य कल्पितस्य वा लयो विधिरिति विकल्प्याद्यं दूषयति। तत्र यदि तावदिति। सत्यस्य ज्ञानादध्वस्तेः पुरुषादिना च ध्वंसाशक्तेस्तस्य ...योगात् ...मोक्षमार्गेविधिरद-

धिदैवतमिकाध्यात्ममिति। तत्र सूत्रेणैवोपक्रमते यथा शाण्डिल्यविद्यायां विभागेनाप्यधीतायां गुणोपसंहार उक्तः एवमन्यत्राप्येवंजातीयके विषये भवितुमर्हति एकविद्याभिसम्बन्धात्, एका ह्येयं सत्यविद्याऽधिदैवमाध्यात्मं चाधीता उपक्रमाभेदात् व्यतिषक्तपाठाच्च, कथं तस्यामुदितो धर्मस्तस्यामेव न स्यात्, यो ह्याचार्ये कश्चिदनुगमादिराचारश्चोदितः स ग्रामगते अरण्यगते च तुल्यवदेव भवति। तस्मादुभयोरप्युपनिषदोरुभयत्र प्राप्तिरिति एवं प्राप्ते प्रतिविधत्ते॥

## न वा विशेषात्॥ २१॥

नैवोभयोरुभयत्र प्राप्तिः, कस्माद्विशेषात्, उपासनस्थानविशेषोपनिबन्धादित्यर्थः। कथं स्थानविशेषोपनिबन्ध इति उच्यते य एष एतस्मिन्मण्डले पुरुषः इति ह्याधिदैविकं पुरुषं प्रकृत्य तस्योपनिषदहरिति श्रावयति 'योऽयं दक्षि-

---

क्तम्। दृष्टान्तमुक्त्वा पूर्वपक्षं व्याचष्टे। यथेति। यथा विद्यैक्यादुपसंहार उक्तः एवमन्यत्राप्येकविद्यायामुपसंहारो भवितुमर्हतीत्यर्थः। सत्यं ब्रह्मेत्युपक्रमाभेदस्तावत्स्पष्टः, आदित्यपुरुषाध्यात्मपुरुषयोरन्योन्यस्मिन् प्रतिष्ठितौ, आदित्यो रश्मिभिश्चक्षुषि चक्षुः प्राणैरादित्ये प्रतिष्ठानादिति व्यतिषक्तपाठो मिथः संश्लेषपाठस्ताभ्यां विद्यैक्यसिद्धिः, विद्यैक्येऽपि किं स्यात्तत्राह। कथमिति। विद्यैक्येऽपि स्थानभेदादुपनिषदोरसङ्करः आदित्याद्यङ्गं दृष्टान्तं न परिहरति। यो हीति॥

नामैक्यात् नामसङ्करो युक्तः, यथा चाक्षिस्थोऽहरिति नामवान् एवमक्षिस्थादादित्यस्याहरिति नामवदिति प्राप्ते सिद्धान्तसूत्रं योजयति।

क्षेऽक्षन् पुरुषः' इति चाध्यात्मिकं पुरुषं प्रकृत्य तस्योपनिषदहमिति तस्येति चैतत् सन्निहितालम्बनं सर्वनाम तस्मादायतनविशेषव्यपाश्रयेणैवैते उपनिषदावुपदिश्येते कुत उभयोरुभयत्र प्राप्तिः । नन्वेक एवायमधिदैवतमध्यात्मञ्च पुरुषः, एकस्यैव सत्यस्य ब्रह्मण आयतनद्वयप्रतिपादनात् । सत्यमेवमेतत्, एकस्यापि त्ववस्थाविशेषोपादानेनैवोपनिषद्विशेषोपदेशात् तदवस्थस्यैव सा भवितुमर्हति । अस्ति चायं दृष्टान्तः सत्यप्याचार्य्यस्वरूपानपाये यदाचार्य्यस्यासीनस्यानुवर्त्तनमुक्तं न तत्तिष्ठतो भवति, यच्च तिष्ठत उक्तं न तदासीनस्येति । ग्रामारण्ययोस्त्वाचार्य्यस्वरूपानपायात् तत्स्वरूपानुबद्धस्य च धर्म्मस्य ग्रामारण्यकृतविशेषाभावादुभयत्र तुल्यवद्भाव इत्यदृष्टान्तः सः । तस्माद्व्यवस्थाऽनयोरुपनिषदोः ॥

## दर्शयति च ॥ २२ ॥

अपि चैवंजातीयकानां धर्म्माणां व्यवस्थितिलिङ्गदर्शनं

---

न चेति । नाम्नोरुपासनस्यार्थे विशिष्टसम्बन्धित्वादित्यर्थः । तस्योपनिषदहर्महमिति च वाक्यद्वयेन तच्छब्दपरामृष्टयोः सन्निहितस्थानविशिष्टयोः पुरुषयोर्नामसम्बन्धपरत्वेनोपसंहारानुमानं बाध्यमिति भावः । विशेष्यैक्यान्नामसङ्कर इत्याशङ्क्य स्थानभेदेन विशिष्टपुरुषभेदात् नामव्यवस्थेत्याह । नन्वित्यादिना । विशिष्टसम्बन्धे दृष्टान्तमाह । अस्तीति । प्रतिष्ठानस्य स्वरूपसम्बन्धित्वात् विशिष्टे ध्येये प्रकृते दृष्टान्तत्वं नास्ति इत्याशयामीति ॥

भवति 'तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम' इति। तस्यैतस्य तदेव रूपं यदमुष्य रूपं कथमस्य लिङ्गत्वं तदुच्यते, अक्ष्यादित्यस्थानभेदभिन्नान् धर्मानन्योन्यस्मिन्ननुपसंहार्यान् पश्यन्नतिदेशेनादित्यपुरुषगतान् रूपादीनक्षिपुरुष उपसंहरति 'तस्यैतस्य तदेव रूपम्' इत्यादिना। तस्माद्व्यवस्थिते एवैते उपनिषदाविति निर्णयः॥

## सम्भृतिद्युव्याप्त्यपि चातः॥ २३॥

'ब्रह्मज्येष्ठा वीर्या सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान' इत्येवं राणायनीयानां खिलेषु वीर्यसम्भृतिद्युनिवेशप्रभृतयो ब्रह्मणो विभूतयः पठ्यन्ते। तेषामेव चोपनिषदि शाण्डिल्यविद्याप्रभृतयो ब्रह्मविद्याः पठ्यन्ते, तासु ब्रह्मविद्यासु ता ब्रह्मविभूतय उपसंह्रियेरन् न वेति विचारणायां ब्रह्मसम्बन्धादुपसंहारप्राप्तौ पठति, सम्भृतिद्युव्याप्तिप्रभृतयो विभूतयः शाण्डिल्यविद्याप्रभृतिषु नोपसंहर्तव्याः, अत एव चायतनविशेषयोगात्। तथा हि शाण्डिल्यविद्यायां हृद-

---

उक्तनामव्यवस्थायामतिदेशो लिङ्गमित्याह। दर्शयति चेति। य-द्येकत्वादेवोपसंहारसिद्धावतिदेशो वृथा स्यात् तस्मादेकविद्यायामपि स्थानभेदेनोक्तगुणानां विनातिदेशमनुपसंहार इति सिद्धम्॥

सम्भृतिद्युव्याप्त्यपि चातः। ब्रह्मैव ज्येष्ठं कारणं येषां तानि ब्रह्मज्येष्ठानि, निलोपश्छान्दसः, वीर्याणि पराक्रमविशेषा आकाशोत्पादनादयः, तानि च वीर्याणि सम्भृतानि निर्विघ्नं धृतानि, सर्वैरप्यन्यैः कार्यं विघ्नकर्तुमशक्यत्वात्। तच्च ज्येष्ठं ब्रह्माग्रे देवानुत्पत्तेः प्रागेव दिवं स्वर्गमाततान व्याप्तवत् यद्वा सर्वमाप्तवदित्यर्थः। वीर्यसंभरणं द्यु-

यायतनत्वं ब्रह्मण उक्तं 'एष आत्मान्तर्हृदयः' इति तद्वद् दहरविद्यायामपि 'दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः' इति। उपकोशलविद्यायान्तु अक्ष्यायतनत्वं 'य एषोऽक्षिणि पुरुषो दृश्यते' इति। एवं तत्र तत्र तत्तदाध्यात्मिकमायतनमेतासु विद्यासु प्रतीयते. आधिदैविक्यस्त्वेता विभूतयः सम्भृतिद्युव्याप्तिप्रभृतयः, तासां कुत एतासु प्राप्तिः। नन्वेतास्वप्याधिदैविक्यो विभूतयः श्रूयन्ते 'ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्य एष उ एव भामनीरेष हि सर्वेषु भूतेषु भाति यावान् वायमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' इत्येवमाद्याः। सन्ति चान्या आयतनविशेषहीना अपि ब्रह्मविद्याः षोडशकलाद्याः, सत्यमेवैतत् तथाप्यत्र विद्यते विशेषः सम्भृत्याद्यनुपसंहारहेतुः, समानगुणाम्नानेन हि प्रत्युपस्थापितासु विप्रकृष्टदेशास्वपि विद्यासु विप्रकृष्टदेशगुणा उपसंह्रियेरन्निति

---

धानहेतुत्वमिति शाखान्तरस्था गुणाः प्रभवन्ति तदुपाद्याः। खिलेष्विति विधिविशेषशून्यशाखास्विन्यर्थः। ब्रह्मत्वसाहित्याभेदमानाच्च संशयमाह। नास्तीति। अनारभ्याधीतब्रह्मविभूतीनां ब्रह्मसम्बन्धेन सर्वब्रह्मविद्यासु प्राप्तिमत्त्वादुपसंहार इति पूर्वपक्षः। सिद्धान्तमाह। सम्भृतीति। सम्भृतिश्च द्युव्याप्तिश्च सम्भृतिद्युव्याप्ती तदपि सर्वत्र नोपसंहर्तव्यमुपनिषदोरिवायतनविशेषयोगादिति सूत्रयोजना। आध्यात्मिकायतनविशेषयुक्तविद्यास्वाधिदैविकविभूतीनां प्रत्यभिज्ञाने हेत्वभावात् न प्राप्तिरित्याह। नन्वेतास्विति। आधिदैविकत्वसाम्यादाध्यात्मिकायतनहीनत्व-साम्याद्वा तत्तद्विद्यासु सम्भृत्यादीनां प्राप्तिरिति भावार्थः। उक्तहेतुद्वयं न गुणप्रापकमाधिदैविकविद्यानां शाण्डिल्यदहरादीनां आयतनहीनविद्यासु

युक्तं, सम्भृत्यादयस्तु शाण्डिल्यादिवाक्यगोचराश्च गुणाः परस्परव्यावृत्तस्वरूपत्वात् न प्रदेशान्तरवर्तिविद्याप्रत्युपस्थापनक्षमाः। न च ब्रह्मसम्बन्धमात्रेण प्रदेशान्तरवर्तिविद्याप्रत्युपस्थापनमुच्यते, विद्याभेदेऽपि तदुपपत्तेः, एकमपि ब्रह्म विभूतिभेदैरनेकैरनेकधोपास्यत इति स्थितिः, परोवरीयस्त्वादिवद्भेददर्शनात्। तस्मात् वीर्यसम्भृत्यादीनां शाण्डिल्यविद्यादिष्वनुपसंहार इति॥

**पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥२४॥**

अस्ति ताण्डिनां पैङ्गिनाञ्च रहस्यब्राह्मणे पुरुषविद्या, तत्र पुरुषो यज्ञः कल्पितः, तदीयमायुस्त्रेधा विभज्य सवनत्रयं कल्पितं, अशिशिषादीनि च दीक्षादिभावेन कल्पितानि, अन्ये च

---

मिथो गुणसाङ्कर्यप्रसङ्गात्, तस्मात् कतिपयसमानगुणविशिष्टोपास्त्यैकत्वे विद्यैक्यमाशङ्क्य गुणप्राप्तिश्चेत्तदभावात् न प्राप्तिरिति परिहरति। स्थानविशेषादिना। स्थानविशिष्टभेदात् नाक्ष्योर्व्यवस्थावत् सम्भृत्यादिगुणविशिष्टस्य ब्रह्मणः शाण्डिल्यादिविद्योक्तगुणविशिष्टब्रह्मणश्च मिथो भेदेन रूपभेदात् सम्भृत्यादीनां नोपसंहार इत्यर्थ्यन्यायातिदेशत्वादस्य न संगत्याद्यपेक्षा यथैकस्मिन्नुद्गीथे परोवरीयस्त्वादिगुणोपास्तेर्हिरण्मयश्मश्रुत्वाद्युपास्तिर्भिद्यते तथैकस्मिन्नपि ब्रह्मणि विद्याभेदोपपत्तेः ब्रह्मप्रत्यभिज्ञा न गुणप्रापिकेत्याह। परोवरीयस्त्वादिवदिति। तस्मात् सम्भृत्यादिगुणविशिष्टविद्यान्तरविधिरिति सिद्धम्॥

पुरुषविद्यां छान्दोग्यस्थां भिन्नामाह। अस्तीति। 'पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशति वर्षाणि तत्प्रातःसवनमथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनं सवनमथ यान्यष्टाचत्वारिंशद्वर्षाणि तत्तृतीयसवनम्' इति यज्ञस्यायुः सवनत्रयं कल्पितं, 'स यदशिशिषति यत्पि-

धर्मास्तत्र समधिगताश्चाशीर्मन्त्रप्रयोगादयः। तैत्तिरीयका अपि कञ्चित् पुरुषयज्ञं कल्पयन्ति 'तस्यैव विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी' इत्येतेनानुवाकेन। तत्र संशयः किमितरत्रोक्ताः पुरुषयज्ञस्य धर्मास्ते तैत्तिरीयकेषूपसंहर्तव्याः किं वा नोपसंहर्तव्या इति। पुरुषयज्ञत्वाविशेषादुपसंहारप्राप्तावाचक्ष्महे नोपसंहर्तव्या इति, कस्मात् तद्रूपप्रत्यभिज्ञानाभावात्। तदाहाचार्यः पुरुषविद्यायामिवेति। यद्ध्येषां शाखिनां ताण्डिनां पैङ्गिनां च पुरुषविद्यायामाम्नानं नैवमितरेषां तैत्तिरीयाणामाम्नानमस्ति, तेषां हीतरविलक्षणमेव यज्ञसम्पादनं दृश्यते, पत्नीयजमानवेदवेदिबर्हिर्यूपाज्यपश्वृत्विगाद्यनुक्रमणात्। यदपि सवनसम्पादनं तदपीतरविलक्षणमेव 'यत्सायं प्रातर्मध्यन्दिनञ्च तानि सवनानि' इति। यदपि किञ्चिन्मरणावभृथत्वादिसामान्यं तदप्यल्पीयस्त्वाद्भूयसा वैलक्षण्येनाभिभूयमानं न प्रत्यभिज्ञापनक्षमम्। न च तैत्तिरीयके पुरुषस्य यज्ञत्वं श्रूयते विदुषो यज्ञस्येति

---

मायति यत् न रमते ता दीक्षा अथ यदश्नाति यत्पिबति यद्रमते ता उपसदः अथ यद्धसति यज्जक्षति यन्मैथुनं चरति तानि स्तुतशस्त्राणि अथ यत्तपोदानादि सा दक्षिणा मरणमेवावभृथः इत्यादिना 'ते प्राणा इदं सवनत्रयं यावदायुरनुसन्तनुते' इत्याशीः, 'अक्षितमसि अच्युतमसि प्राणसंशितमसि' इति मन्त्रत्रयप्रयोगः। षोडशाधिकशतवर्षजीवित्वं फलमिति दर्शितम्। संशयार्थं शाखान्तरीयपुरुषविद्यामाह। तैत्तिरीयका इति। अत्र विदुषो यज्ञस्येति षष्ठ्योः समानाधिकरण्यवैयधिकरण्यानिश्चयात् संशयमाह। तत्रेति। उपसंहारानुपसंहारः

ह्नि न चैते समानाधिकरणे षष्ठ्यौ विद्वानेव यो यज्ञस्तस्येति। न हि पुरुषस्य मुख्यं यज्ञत्वमस्ति व्यधिकरणे त्वेते षष्ठ्यौ विदुषो यो यज्ञस्तस्येति। भवति हि पुरुषस्य मुख्यो यज्ञसम्बन्धः, सत्याञ्च गतौ मुख्य एवार्थ आश्रयितव्यो न भाक्तः। आत्मा यजमान इति च यजमानत्वं पुरुषस्य निर्ब्रुवन् वैयधिकरण्येनैवास्य यज्ञसम्बन्धं दर्शयति। अपि च तस्यैवंविदुष इति सिद्धवदनुवादश्रुतौ सत्यां पुरुषस्य यज्ञभावमात्मादीनाञ्च यजमानादिभावं प्रतिपित्समानस्य वाक्यभेदः स्यात्। अपि च ससंन्यासामात्मविद्यां पुरस्तादुपदिश्यानन्तरं तस्यैवंविदुष इत्याद्यनुक्रमणं पश्यन्तः पूर्वशेष एवैष आम्नायो न स्वतन्त्र इति प्रतीमः। तथा चैक-

---

वेदफलम्। पूर्वस्मात्साधारणगुणप्रत्यभिज्ञानाभावात् तैत्तिरीयादौ विद्याभेद उक्तः। इह त्वसाधारणाशंसापगुणविशिष्टपुरुषयज्ञरूपैक्यप्रत्यभिज्ञानात् विद्यैक्यमिति प्रह्लादाहरणेन प्राप्ते विज्ञापयति। नोपसंहर्तव्या इति। 'तस्यैवंविदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः कामः आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा' इति बहुतरधर्मवैलक्षण्यात् न रूपैक्यप्रत्यभिज्ञानमित्यर्थः। वेदः कुशाद्यैः शमयिता दमो दक्षिणेत्यन्यथा। किञ्च छान्दोग्ये त्रिधाविभक्तायुषि पुरुषकल्पना [illegible] तु सायंप्रातरादाविति वैरूप्यमाह। मरणमिति। मरणं तदवभृथो [illegible] तदुपसद इति [illegible] माता [illegible] आह। यदपि [illegible]। [illegible] किञ्च छान्दोग्ये पुरुषयज्ञयोरैक्य [illegible] तु भेद इति वैरूप्यान्तरमाह। न चेति। यद्यपि [illegible]-

सेव फलं उभयोरप्यनुवाकयोरुपलभामहे 'ब्रह्मणो महिमानमाप्नोति' इति । इतरेषां त्वनन्यशेषः पुरुषविद्याम्नायः । आयुरभिवृद्धिफलो ह्यसौ 'प्र ह षोडशवर्षशतं जीवतीति य एवं वेद' इति समभिव्याहारात् । तस्माच्छाखान्तराधीतानां पुरुषविद्याधर्माणामाशीर्मन्त्रादीनामप्राप्तिस्तैत्तिरीयके ॥

## वेधाद्यर्थभेदात् ॥ २५ ॥

अस्त्याथर्वणिकानामुपनिषदारम्भे मन्त्रसमाम्नायः 'सर्वं प्रविध्य हृदयं प्रविध्य धमनीः प्रवृज्य शिरोऽभिप्रवृज्य त्रिधा विपृक्तः' इत्यादिः । स ताण्डिनां 'देव सवितः प्रसुव यज्ञम्' इत्यादिः । शाट्यायनिनां 'श्वेताश्वो हरितनीलो'

---

न्यायेन सामानाधिकरण्यं पश्वोर्युक्तं तथाप्यप्रसिद्धयज्ञस्य नागौरवाद्यज्ञस्यात्मेति भेदोक्तेरेकस्यैव यज्ञत्वयजमानत्वविरोधादात्मविदो यो यज्ञः प्रसिद्धस्तस्येति वैयधिकरण्यमेव युक्तम् । किञ्च विद्वत्सम्बन्धियज्ञकल्पविशेष्यानुवादेन विद्वदङ्गैरङ्गसम्पद्विधानैकवाक्यता प्रतीयते तस्यां सत्यां विशेष्यस्याङ्गानां च पृथग्विधिवादिनस्तव वाक्यभेददोषः स्यादित्यर्थः । किञ्च सत्यादिभ्यो न्यास एवापरे च यदिति संन्यासस्तुता सर्वैः धर्मैरिदं जगदितेरवं तमात्मानं ज्ञात्वा भूयोऽभ्युदयमुपयाति विद्वानिति संन्यासोऽध्यात्मविद्यां पुरस्तात् प्राजापत्यानुवाके उपदिश्यानन्तरानुवाके तस्यैवं विदुष इत्यात्मविद्यानुवादेन प्रशंसार्थत्वेन तच्छेषतया यज्ञसम्पत्तिः क्रियते फलैक्यश्रुतेः, छन्दोगानां तु स्वतन्त्रविद्याविधिरित्याह । यदि च यज्ञस्याप्राधान्यमिति । चिन्ताफलमाह । तस्मादिति ॥

वेधाद्यर्थभेदात् । देवतामभिचारकर्ता प्रार्थयते । सर्वमिति । हे देवते मद्द्विषः सर्वमङ्गं प्रविध्य विदारय विशेषतस्य हृदयं भिन्धि धमनीः

ऽसि इत्यादिः। कठानां तैत्तिरीयकाणां च 'शन्नो मित्रः शं वरुणः" इत्यादिः। वाजसनेयिनान्तूपनिषदारम्भे प्रवर्ग्यब्राह्मणं पठ्यते 'देवा ह वै सत्रं निषेदुः" इत्यादिः। कौषीतकिनामप्यग्निष्टोमब्राह्मणं 'ब्रह्म वा अग्निष्टोमो ब्रह्मैव तदहर्ब्रह्मणैव ते ब्रह्मोपयन्ति तेऽमृतत्वमाप्नुवन्ति य एतदहरुपसंयन्तीति' किमिमे सर्वे प्रविध्य" इत्यादयो मन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्यासूपसंक्रियेरन् किं वा नोपसंक्रियेरन्निति मीमांसामहे। किं तावत् नः प्रतिभाति उपसंहार एवैषां विद्यास्विति। कुतः, विद्याप्रधानानामुपनिषद्ग्रन्थानां समीपे पाठात्। नन्वेषां विद्यार्थतया विधानं नोपलभामहे। बाढं, अनुपलभ्यमाना अपि त्वनुमास्यामहे सन्निधिसामर्थ्यात्, न हि सन्निधेरर्थवत्त्वे सम्भवत्यकस्मादसावनाश्रयितुं युक्तः। ननु नैषां मन्त्राणां

---

शिराः प्रवृञ्ज्य लोढय शिरश्छिन्नो मापय, एवं लिखा विद्धो निःसृतो नयतु मे गात्रु रित्यर्थः। हे देव सवितः यत्नं तत्करिष्य प्रसुव निर्वर्तयेत्यर्थः। उच्चैःश्रवा श्वेतोऽश्वो यस्येन्द्रस्य स त्वं इन्द्रियतत्परसोऽसीत्यर्थः। योऽस्माकं शं सुखकरो भवत्वित्यर्थः। अग्निष्टोमो ब्रह्मैव स यस्मिन्नहनि क्रियते तदपि ब्रह्म तथाद्यन्य तदहःसाध्यं कर्मोपयन्त्यनुतिष्ठन्ति ते ब्रह्मणैव साधनेन ब्रह्मोपयन्ति ते च क्रमेणामृतत्वमाप्नुवन्तीति योजना।

मन्त्रादिषु सन्नदुपनिषद्विद्याशेषत्वे प्रमाणभावाभावाभ्यां संशयमाह। किमिति। फलं पूर्ववत्। ननु तेषां शेषत्वे मानाभावान्नोपसंहार इति प्राप्तं। नन्विति। मन्त्रादयस्तद्विद्याशेषाः फलवद्विद्यार्थत्वात्। निरीयकगतप्रकरणवदिति समाधत्ते। बाढमिति। तथा च प्रधानप्रकृतिः विद्यान्निधयो। सन्निधिरैवार्थाकल्पकत्वात्। न हीति। अनन्य-

विद्याविषयं किञ्चित्सामर्थ्यं पश्यामः, यथं च प्रवर्ग्यादीनि कर्माणि अन्यार्थत्वेनैव विनियुक्तानि सन्ति विद्यार्थत्वेनापि प्रतिपद्येमहि इति । नैष दोषः, सामर्थ्यं तावन्मन्त्राणां विद्याविषयमपि किञ्चित् शक्यं कल्पयितुं, हृदयादिसङ्कीर्तनात् । हृदयादीनि हि प्रायेणोपासनेष्वायतनादिभावेनोपदिष्टानि तद्द्वारेण च 'हृदयं प्रविध्य' इत्येवंजातीयकानां मन्त्राणां उपपन्नमुपासनाङ्गत्वम् । दृष्टश्चोपासनेष्वपि मन्त्रविनियोगः 'भूः प्रपद्येऽमुनामुनामुना' इत्येवमादिः । तथा प्रवर्ग्यादीनां कर्मणामन्यत्रापि विनियुक्तानां सतामविरुद्धो विद्यासु विनियोगो वाजपेय इव बृहस्पतिसवस्येत्येवं प्राप्ते ब्रूमः, नैषामुपसंहारो विद्यास्विति । कस्मात्? वेधाद्यर्थभेदात् । हृदयं प्रविध्येत्येवंजातीयकानां हि मन्त्राणां

---

मन्त्रादीनां फलवत्कर्मयत्वबोधनं सन्निधेरर्थवत्त्वं तत्सम्भवे सत्यकस्मादर्थ्यत्वे नासौ सन्निधिराश्रयितुं नहि युक्त इत्यर्थः । नञ्पाठे त्वकस्मादेव विनाऽप्यार्थ्यो नाश्रयितुं नहि युक्त इत्यर्थः । ननु मन्त्राणां विद्यासमवेतार्थप्रकाशनसामर्थ्याभावान्न विद्यार्थत्वमिति शङ्कते । नन्विति । इ-क्तादुपसदां प्रवर्ग्येणाप्रचरन्तीति वाक्येन प्रवर्ग्यस्य क्रत्वङ्गत्वं श्रुतं, ज्योतिष्टोमादेश्च तत्तद्वाक्येन स्वर्गाद्यर्थत्वमतो न विद्यार्थत्वमित्याह । यद्यपीति । मन्त्राणां विद्यासमवेतहृदयताडनादिप्रकाशकत्वमस्तीत्याह । नैष इति । उपास्तिषु मन्त्रप्रयोगः क्वापि न दृष्ट इत्यत आह । दृष्टश्चेति । पुत्रस्य दीर्घायुष्यार्थं छान्दोग्ये त्रैलोक्यस्य कोशत्वेनोपासितस्य तत्र [illegible] प्रार्थनामन्त्रः । तत्रामुनेति पुत्रस्य त्रिर्नाम गृह्णाति अमुना पुत्रेण स- भूरित्येतमहं प्रपद्ये न मे पुत्रवियोगः स्यादित्यर्थः । तद्वाक्यान्यत्र विनियुक्तानामपि कर्मणां सन्निधिना विद्यासु विनियोगो न विरुध्यत इत्या

वेऽर्थाः हृदयवेधादयो भिन्नाः, अनभिसम्बद्धास्त उपनिषदुदिताभिर्विद्याभिः न तेषां ताभिः संगन्तुं सामर्थ्यमस्ति। ननु हृदयस्योपासनेष्वप्युपयोगात् तद्द्वारक उपासनसम्बन्ध उपन्यस्तः। नेत्युच्यते, हृदयमात्रसङ्कीर्तनस्यैवमुपयोगः कथञ्चिदुत्प्रेक्ष्येत, न च हृदयमात्रमत्र मन्त्रार्थः। हृदयं प्रविध्य धमनीः प्रवृज्येत्येवंजातीयको हि न सकलो मन्त्रार्थो विद्याभिरभिसम्बध्यते आभिचारिकविषयो ह्येषोऽर्थः। तस्मादाभिचारिकेण कर्मणा सर्वं प्रविध्येत्यस्य मन्त्रस्याभिसम्बन्धः। तथा 'देव सवितः प्रसुव यज्ञं' इत्यस्य यज्ञप्रसवलिङ्ग-

---

दृष्टान्तमाह। वाजपेय इति। ब्रह्मवर्चसकामो बृहस्पतिसवेन यजेतेति वाक्येन ब्रह्मवर्चसफले विनियुक्तस्यापि बृहस्पतिसवस्य वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति वाजपेयप्रकरणस्थवाक्येन वाजपेयोपकारकाङ्गतया विनियोगवदविरोध इत्यर्थः। यद्येकेन वाक्येन प्रकरणान्तरस्थबृहस्पतिसवस्य प्रत्यभिज्ञानमङ्गत्वविधानञ्च कर्तुमयुक्तं वाक्यभेदप्रसङ्गादतो मासाग्निहोत्रवत् कर्मान्तरमेव बृहस्पतिसवाख्यमङ्गतया विधीयत इति विनियुक्तस्य विनियोग इति मन्दयुक्तमुदाहरणमिदं, तथापि यथा नित्याग्निहोत्रस्यान्यत्र प्रकरणे आम्नातस्यैतां रात्रिमग्निहोत्रं जुहोतीति नाम्ना प्रत्यभिज्ञा, यथा वा दर्शपूर्णमासविकृतौ दाक्षायणयागे यजतीत्यस्मिन्नेव वाक्ये प्रकृतिस्थयोराग्नेययोः पदेन प्रत्यभिज्ञाने वाक्येन विधानं तथात्रापि बृहस्पतिसवपदेन प्रत्यभिज्ञानं वाक्येनाङ्गताविधानं किं न स्यात्, न च साध्यभावार्थवाचकाख्यातपरतन्त्रं नाम पदं न सिद्धकर्मप्रत्यभिज्ञापकमिति वाच्यं, सिद्धस्याप्यङ्गतया पुनः साध्यत्वसम्भवेऽन्यथाऽभ्यासाख्यातस्यैव प्रतिपद्यमानामपारतन्त्र्योपपत्तेः। न चैवं सति पुनरुपादीयमानेऽप्यङ्गत्वेन नित्याग्निहोत्रस्यैव विधिः स्यादिति वाच्यं, इष्टत्वात्। न च पूर्वतन्त्रविरोधः उत्तरतन्त्रस्य बलीयस्त्वात्। पूर्वतन्त्रस्य स्वतन्त्रपरतन्त्रभावनाभेदे तात्पर्या-

त्वात् यज्ञेन कर्मणाभिसम्बन्धः, तद्विशेषसम्बन्धस्तु प्रमाणान्तरादनुसर्तव्यः। एवमन्येषामपि मन्त्राणां केषाञ्चिल्लिङ्गेन केषाञ्चिद्वचनेन केषाञ्चित् प्रमाणान्तरेणेत्येवमर्थान्तरेषु विनियुक्तानां रहस्यपठितानामपि सतां न सन्निधिमात्रेण विद्याशेषत्वोपपत्तिः. दुर्बलो हि सन्निधिः श्रुत्यादिभ्य इत्युक्तं

---

प्रथमे तन्त्रे 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये' च. तथादेकस्यैव बृहस्पतिनामकस्य धात्वर्थस्य ब्रह्मवर्चसे विनियुक्तस्यापि वाजपेयाङ्गतया विनियोग इति भगवत्पादतात्पर्यमस्ति। विनियुक्तस्य विनियोगे सर्वसम्मतमुदाहरणं खादिरत्वादिकं तस्य क्रतौ विनियुक्तस्य वीर्यादिफलेऽपि विनियोगात्। तथा मन्त्रकर्मणामन्यत्र विनियुक्तानां विद्याशेषत्वमिति प्राप्ते सिद्धान्तयति। नैषामित्यादिना। विद्ध्या तु हृदयादिसम्बन्धेऽपि वेधाद्यर्थानामसम्बन्धोऽस्पष्टमन्त्रार्थानामभिचारादिसम्बन्धलिङ्गेन च विधेर्बलीयसा अभिचारादावेव मन्त्राणां विनियोग इत्यर्थः। 'देव सवितः प्रसुव' इति पदविषयतोऽग्निं पर्युक्षेदिति वाक्यादग्निपर्युक्षणे 'सावित्रं जुहोति कर्मणः पुरस्तात् सवने जुहोति' इति वाक्याद्वाजपेये कर्मविशेषसम्बन्धोऽस्य मन्त्रस्येत्याह। तद्विशेषेति। उक्तन्यायं श्वेताश्व इत्यादिमन्त्रेष्वतिदिशति। एवमन्येषामिति। प्रमाणान्तरं प्रकरणादिकम्। ननु लिङ्गादिभिरन्यत्र विनियुक्तानामपि सन्निधिना विद्यास्वपि विनियोगस्याविरोधादित्युक्तं तत्राह। दुर्बलो हीति। समवाये समानविषयत्वेन द्वयोर्विरोधे परस्य दौर्बल्यं, कुतः अर्थविप्रकर्षात्, स्वार्थबोधने परस्य पूर्वव्यवधानेन प्रवृत्तेरित्यर्थः। अयमाशयः एकत्र विनियुक्तस्य निराकाङ्क्षत्वादन्यत्र विनियोगाविरुद्ध एव परन्तु विनियोजकप्रमाणयोः समबलत्वेऽन्यतरविनियोगत्यायोगादुभयाकाङ्क्षत्वादनेन विनियुक्तविनियोगः स्वीक्रियते 'यथा खादिरो यूपो भवति खादिरं वीर्यकामस्य यूपं कुर्यात्' इति वाक्याभ्यां क्रतौ विनियुक्तस्य वीर्यफले विनियोगः। यत्र प्रमाणयोर्बलवैषम्यं तत्र न स्वीक्रियते प्रबलप्रमाणेन दुर्बलविनियोगबाधात्। यथा 'कदाचनस्तरीरसि नेन्द्र'

पारदौर्बल्यमर्थविप्रकर्षात्' इत्यत्र। तथा कर्मणामपि प्रवर्ग्यादीनामन्यत्र विनियुक्तानां न विद्याशेषत्वोपपत्तिः, न ह्येषां विद्यादिभिः सहैकार्थ्यं किञ्चिदस्ति। वाजपेये तु बृहस्पतिसवस्य स्पष्टं विनियोगान्तरं 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इत्यपि चैकोऽयं प्रवर्ग्यः सकृदुत्पन्नो बलीयसा प्रमाणेनान्यत्र विनियुक्तो न दुर्बलप्रमाणेनान्यत्रापि

---

स्य यथा' इत्यस्याः ऋचः ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति तृतीयाविभक्तिः श्रुत्यान्यनिरपेक्षया गार्हपत्योपस्थानशेषत्वबोधिका ऐन्द्रप्रकाशनसामर्थ्यरूपलिङ्गप्राप्तमिन्द्रशेषत्वं बाध्यते लिङ्गादिकं न साक्षाच्छेषत्वं बोधयति किन्त्विन्द्रः प्रकाशमात्रं करोति तेन च लिङ्गेनानेन मन्त्रेण इन्द्र उपस्थापयितव्य इति श्रुतिः कल्पनीया, तथा शेषत्वाविरोध इति श्रुतिव्यवधानेन शेषत्वबोधकं लिङ्गं झटिति स्वार्थबोधकश्रुत्या बाध्यं, तथा लिङ्गेन वाक्यं बाध्यं यथा स्योनन्ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इति मन्त्रभागयोः प्रत्येकं सदनकरणे पुरोडाशासादने च तत्प्रकाशनसामर्थ्यलिङ्गेन श्रुतिद्वारा विनियोगे सति प्रतीतमेकवाक्यत्वं बाध्यते, तस्य कृत्स्नोऽपि मन्त्रः सदनकरणप्रकाशनसामर्थ्यं पुरोडाशासादनप्रकाशनसामर्थ्यं च लिङ्गं कल्पयित्वा श्रुतिकल्पनयोभयत्र कृत्स्नमन्त्रविनियोगबोधने द्वाभ्यां लिङ्गश्रुतिभ्यां व्यवधानेन श्रुत्येकव्यवहितक्लृप्तलिङ्गात् दुर्बलत्वात्। न च सामर्थ्यं न कल्प्यमिति वाच्यं, असमर्थस्य विनियोगायोगात्, अत एव गङ्गापदस्य तीरबोधविनियोगे लक्षणारूपं सामर्थ्यं कल्प्यते तथा वाक्येन प्रकरणं बाध्यं यथा साङ्गप्रकरणाम्नातद्वादशोपसदां द्वादशाहीनस्येति वाक्येनाहीनाङ्गत्वबोधकेन प्रकरणप्राप्तस्वाङ्गत्वबाधा-इत्यर्थः। प्रधानस्याङ्गाकाङ्क्षारूपं प्रकरणं तस्याङ्गप्रधानवाक्यैकवाक्यतासामर्थ्यश्रुतिभिः कल्प्यमानाभिः स्वार्थविनियोगप्रकृतौ व्यवधानेनाङ्गसामर्थ्यश्रुत्यो-

विनियोगमर्हति, अगृह्यमाणविशेषत्वे हि प्रमाणयोरितरेतरवत् स्यात्, न तु बलवदबलवतोः प्रमाणयोरगृह्यमाणविशेषता सम्भवति, बलवदबलवत्ताविशेषादेव। तस्मादेवंजातीयकानां मन्त्राणां कर्मणां वा न सन्निधिपाठमात्रेण विद्याशेषत्वमाशङ्कितव्यं, अरण्यानुवचनादिधर्मसामान्यात् तु सन्निधिपाठ इति सन्तोष्टव्यम्॥

---

ङ्गयोः कल्पकवाक्याद्दुर्बलत्वात्। तथा प्रकरणेन सन्निधिर्बाध्यः। यथा राजसूयप्रकरणे तदन्तर्गताभिषेचनीयाख्यसोमयागविशेषसन्निधिपाठे प्राप्तं शुनःशेपाख्यानादेरभिषेचनीयशेषत्वं बाधित्वा कृत्स्नराजसूयशेषत्वमापादितं सन्निधेः प्रकरणादिकल्पकत्वेन क्लृप्तप्रकरणात् दुर्बलत्वात् तथा सन्निधिना समाख्या बाध्यते। तथा हि पौरोडाशिकसमाख्याके काण्डे आग्नेयपुरोडाशादिकर्मणां क्रमेण मन्त्रा आम्नातास्तत्र दधिपयोदोहसान्नाय्य सन्निधौ 'शुन्धध्वं दैव्याय कर्मणे' इति मन्त्र आम्नातस्तत्र समाख्याबलेनास्य मन्त्रस्य पुरोडाशपात्रशुन्धनशेषत्वं प्राप्तं सन्निधिना बाधित्वा सान्नाय्यपात्रशुन्धनशेषत्वमापाद्यते। पुरोडाशसम्बन्धिकाण्डं पौरोडाशिकमिति यौगिकसमाख्यायाः काण्डान्तर्गतमन्त्रस्य पुरोडाशशुन्धनार्थबोधकत्वेऽपि शेषशेषिभावरूपविनियोगबोधकत्वे सन्निध्याद्यपेक्षत्वेन दुर्बलत्वादिति एवं विरोधे सति श्रुतिर्बाधिकैव समाख्या बाध्यैव मध्यस्थानान्तु चतुर्णां पूर्वबाध्यत्वं परबाधकत्वं परबाधत्वञ्चेति श्रुतिसूत्रार्थः। तस्माल्लिङ्गादिनान्यत्र विनियुक्तानां मन्त्राणां दुर्बलसन्निधिना न विद्यासु विनियोग इति सिद्धम्। तथा कर्माण्यपि कर्मणां विद्योपकारत्वे ताभिः सहैकफलत्वे मानं किञ्चिन्नास्ति इत्यर्थः। अपि त्वन्यार्थम्। ननु तर्हि वेधादिवाक्यानामुपनिषद्भिः सह पाठस्य का गतिरित्याह। आरण्येति। तस्माद्वेधादिमन्त्रकर्मणां विद्यास्वनुपसंहार इति सिद्धम्॥

## हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दः-स्तुत्युपगानवत् तदुक्तम् ॥ २६ ॥

अस्ति ताण्डिनां श्रुतिः 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि' इति। तथाथर्वणिकानां 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति। तथा शाट्यायनिनः पठन्ति 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति। तथैव कौषीतकिनः 'तत् सुकृतदुष्कृते विधुनुते तस्य प्रियाः ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्' इति। तदिह क्वचित् सुकृतदुष्कृतयोर्हानं श्रूयते क्वचित्तयोरेव विभागेन प्रियैरप्रियैश्चोपायनं क्वचित्तूभयमपि हानमुपायनञ्च। तत्रोभयं श्रूयते तत्र तावत् न किञ्चिद्वक्तव्यमस्ति यत्राप्युपायनमेव श्रूयते न हानं तत्राप्यर्थादेव हानं सन्निपतत्यन्यैरात्मीययोः सुकृतदुष्कृतयोरुपेयमानयोरावश्यकत्वात् तद्धानस्य। यत्र

---

हानौ त्वक्तम्। यथाऽश्वो रजोयुक्तानि जीर्णरोमाणि त्यक्त्वा निर्मलो भवति तथाऽहमपि पापं विधूय कृतात्मा निर्मलीकृतचित्तः सन् यथा राहुग्रस्तचन्द्रो राहुमुखात् प्रमुच्य स्वच्छो भवति तथा शरीरं धूत्वा त्यक्त्वा देहाभिमानान्मुक्तः सन्नकृतं कूटस्थं ब्रह्मात्मकं लोकं अभि प्रत्यक्त्वेन सम्भवामीत्यर्थः। यथा नद्यः समुद्रं प्राप्य नामरूपे त्यजन्ति तथा विद्वानित्यर्थः। निरञ्जनः शुद्धः, साम्यं ब्रह्म, तस्य मृतस्य 'दायः' दायं धनं, तत्तेन विद्याबलेन सुकृतदुष्कृते त्यजतीत्यर्थः। उपायनं प्राप्तं तस्य त्यागपूर्वकत्वात्, त्यक्तयोरन्यथायोगात्त्यागोऽर्थादायाति। तत्र तु

तु हानमेव श्रूयते न तूपायनं तच्चोपायनं सन्निपतेद्वा वेति विचिकित्सायामश्रवणात् असन्निपातः विद्यान्तरगोचरत्वाच्च शाखान्तरीयस्य श्रवणस्य । अपि चात्मकर्तृकं हा तदुक्तं, तयोर्हानं परकर्तृकं तूपायनं तयोरसत्यावश्य भावे कथं हानेनोपायनमाक्षिप्येत, तस्मादसन्निपा हानावुपायनस्येत्यस्यां प्राप्तौ पठति । हानाविति । हा त्वितस्यां केवलायामपि श्रूयमाणायामुपायनं सन्निपतितु र्हति तच्छेषत्वात्, हानशब्दशेषो ह्युपायनशब्दः समधि कौषीतकिरहस्ये । तस्मादन्यत्र केवलहानशब्दश्रवणे पायनानुवृत्तिः । यदुक्तमश्रवणात् विद्यान्तरगोचरत्वाद वश्यकत्वाच्चासन्निपात इति । तदुच्यते, भवेदेषा व्यव स्थितिर्यद्यनुष्ठेयं किञ्चिदन्यत श्रुतमन्यत्र निनीयेत, न त्वि हानमुपायनं वाऽनुष्ठेयत्वेन सङ्कीर्त्यते, विद्यास्तुत्यर्थं त्वनयोः

---

त्याग एव श्रुतः तत्र हानोपायनयोः सहभावस्यावश्यकत्वा स्त्यां संशयनाच्च । यत्र त्विति । अत्र पूर्वपक्षे स्तुतिप्रकार सिद्धान्ते तत्सिद्धिरिति फलम् । यद्यपि ह्याथर्वणश्रुत्योर्निर्गुणविद्या कर्मत्यागमेव श्रुतं नोपायनं तथापि कौषीतकिश्रुतौ सगुण ब्रह्मविद्यायामुपायनं श्रुतमत्रापसर्तव्यमित्याशङ्क्य विद्याभेदाच्चोप दृश्यात् । विद्यान्तरेति । किञ्च यथा सन्त्रकर्माद्यामनावश्यकत्वादि स्त्वनुपसंहार उक्तः तथा परैरुपादानं विनापि हानस्य स्वेनोपादान वश्यकत्वान्न प्राप्तिरिति दृष्टान्तसङ्गत्या प्राप्ते सिद्धान्तयति । त्वित्यादिना । उपायनशब्दस्य शेषत्वात् हानशब्देनापेक्षितत्वा सूत्रार्थः । अशरीरं हानेन विधूतयोः पुण्यपापयोः परमा सापेक्षत्वात् परैरुपादानं प्राप्तमिति भावः । विद्याभेदे गुणोपसंहार इति व्यवस्थाऽनुपानविषया न स्तुतिविषयेत्याह । तदुच्यते इति,

सङ्कीर्तनं इत्थं महाभागा विद्या यत्तत्सामर्थ्यादस्य विदुषः सुकृतदुष्कृते संसारकारणभूते विधूयेते, ते चास्य सुहृद्द्विषत्सु निविशेते इति। स्तुत्यर्थं चास्मिन् सङ्कीर्तने हानानन्तरभावितत्वेनोपायनस्य क्वचिच्छ्रुतत्वादन्यत्रापि हानश्रुतावुपायनानुवृत्तिं मन्यते स्तुतिप्रकर्षलाभाय। प्रसिद्धा चार्थवादान्तरापेक्षा अर्थवादान्तरप्रवृत्तिः 'एकविंशो वा इतोऽसावादित्यः' इत्येवमादिषु। कथं ह्येकविंशताऽऽदित्यस्याभिधीयेत अनपेक्ष्यमाणेऽर्थवादान्तरे 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' इत्येतस्मिन्। तथा 'त्रिष्टुभौ भवतः सेन्द्रियत्वाय' इत्येवमादिषु

---

सूत्रकारः इत्यर्थः। ननु श्रुतहानार्थवादेनापि स्तुतिसिद्धावश्रुतहानार्थवादेनापि स्तुतिसिद्धौ किमर्थमुपायनपदमानीयते तत्राह। स्तुतिप्रकर्षलाभायेति। नन्वर्थवादस्य विधिना सम्बन्धः प्रसिद्धो नार्थवादान्तरेणेत्यत आह। प्रसिद्धा चेति। इतो भूलोकादित्यर्थः। हेमन्तशिशिरयोरैक्यात् पञ्चर्तवः। यज्ञस्य पुरुषरूपकल्पनया सेन्द्रियत्वाय त्रिष्टुभौ भवत इत्युक्तं पशुब्राह्मणे, तत्र त्रिष्टुप्छन्दोमात्रत्वात् कथमिन्द्रियत्वकल्पनेत्याकाङ्क्षायां यजुर्वाक्यं संवाद्यत इत्यर्थः। नन्वमूर्तयोः पुण्यपापयोः उपादानस्याकल्प्यत्वादनुपसंहार इत्यत आह। विद्यासामर्थ्याच्चेति। विद्वत्कर्मणोरेव तयोः फलं परे प्राप्नुवन्ति विद्यासामर्थ्यादित्युपयन्तिपदेनोच्यत इत्यर्थः। नन्वन्यनिष्ठकर्मणोरन्यत्र फलसञ्चारः कथम्। ननु वचनबलादिति चेत्, न, फलमुपयन्तीति श्रुतेः। न च यथा पुत्रकृतश्राद्धस्य पितृषु फलं तथात्रेति वाच्यं, यस्य फलमुद्दिश्य यत् कर्म विहितं तस्य तत् फलमिति न्यायेन पितॄणां तृप्त्युद्देशेन कृतकर्मणो व्यधिकरणफलत्वेऽपि विदुषः कर्मकालेऽनुद्दिष्टव्यधिकरणफलायोगात्। किञ्च विदुषो देहपाते कर्मणोऽसत्त्वात् यावज्जीवं विद्वत्सेवकस्य तद्द्वेषिणो वा फलं स्यादित्यत आह। नातीवाभिनिवेष्टव्यमिति। विद्वत्सेवाद्वेषाभ्यां विद्वत्सुकृतदुष्कृतापाये तत्रो

वादेष्वपि 'इन्द्रियं वै त्रिष्टुभम्' इत्येवमाद्यर्थवादान्तराणि दृश्यते । विद्यास्तुत्यर्थत्वाच्चास्योपायनवादस्य कथमन्यदी सुकृतदुष्कृते अन्यैरभ्युपेयेते इति नातीवाभिनिवेष्टव्यम् उपायनशब्दशेषत्वादिति च शब्दशब्दं समुच्चारयन् सुक मेव हानावुपायनानुवृत्तिं सूचयति, गुणोपसंहारविवक्षा ह्युपायनार्थस्यैव हानावनुवृत्तिं ब्रूयात् । तस्मात् गुणो संहारविचारप्रसङ्गेन स्तुत्युपसंहारप्रकारदर्शनार्थमिदं त्रम् । कुशाच्छन्दःस्तुत्युपगानवदित्युपमोपादानम् । त था भाल्लविनां 'कुशा वानस्पत्याः स्थ ता मा पात' इत्या न्निगमे कुशानामविशेषेण वनस्पतियोनित्वश्रवणे शाट्या

---

पुण्यपापे सेयबद्धेर्विष्णोर्जायेते जातयोः फलतः स्वीकारः । उपायनं परिहारस्य सुलभत्वादनयोक्त इत्यर्थः। उपायनादेः स्तुतित्वे निश्च उपायनेति । उपायनविवक्षाया उपायनस्यैवोपसंहारं सूत्र ब्रूयादतः शब्दस्य यदनु स्तुतिं सूचयति इत्यर्थः । विद्याविचारात् स्तुतिविचारस्य का सङ्गतिरित्यत आह । तस्मादिति । शाखान्त विशेषः शाखान्तरेऽपि ग्राह्य इत्यत्र दृष्टान्तमाह । कुशेति । कुशा तृणं स्तोत्रगणनार्थाः शलाका दारुमय्यः, भो कुशा यूयं वानस्पत्याः नस्यमहावृक्षो वनस्पतिः तत्प्रभवाः स्थ ता इत्थंभूता यूयं मा पात रक्षतेति यजमानप्रार्थना । स्थ ता इति स्त्रीलिङ्गनिर्देशादौ इति भाष्याच्च शलाकासु कुशाशब्दस्य स्त्रीत्वं मन्तव्यं दर्भे न स्त्रीत्वं, अस्त्री कुशमित्यनुशासनात् । छन्दोदृष्टान्तं व्याचष्टे । चेति । न चाक्षराणि छन्दांसि यासुराण्यन्यानि दैवानि तैः न्दोभिस्तुवत इत्यत्राविशेषप्राप्तौ पैङ्गिशाखायां विशेष इत्यर्थः । विशेषेति । यथेति । अतिरात्रे षोडशिनो ग्रहस्याङ्गभूतं स्तोत्रं छन्दोगादीनामाकाङ्क्षायामुदयसमयाविष्टे यं षोडशिनः स्तोत्रं

निनां 'औदुम्बराः कुशाः' इति विशेषवचनादौदुम्बर्यः कुशा आश्रीयन्ते। यथा च क्वचिद्देवासुरच्छन्दसामविशेषेण पौर्वापर्यप्रसङ्गे 'देवच्छन्दांसि पूर्वाणि' इति पैङ्ग्याम्नायात् प्रतीयते। यथा च षोडशिस्तोत्रे केषाञ्चित् कालाविशेषप्राप्तौ 'समयाध्युषिते सूर्ये' इत्यार्चाभिश्रुतेः कालविशेषप्रतीतिः। यथैव चाविशेषेणोपगानं केचित् समामनन्ति विशेषेण भाल्लविनो यथैतेषु कुशादिषु श्रुत्यन्तरगतविशेषान्वयः। एवं हानावप्युपायनान्वय इत्यर्थः। श्रुत्यन्तरकृतं हि विशेषं श्रुत्यन्तरेऽनभ्युपगच्छतः सर्वत्रैव विकल्पः स्यात् स चान्याय्यः सत्यां गतौ। तदुक्तं द्वादशलक्षण्यां 'अपि तु वा-

---

त्वार्चच्छ्रुतेः कालविशेषप्रत्यय इत्यर्थः। पञ्चोऽधीयत इत्यर्थः। उपगानं विभजते। यथेति। 'ऋत्विज उपगायन्ति' इत्यविशेषश्रुतेः 'नाध्वर्युरुपगायति' इति श्रुत्यन्तरादध्वर्युभिन्ना ऋत्विज उपगायन्ति इत्यर्थः। ननु कुशादिवाक्यानामपि किमिति विशेषश्रुत्यन्तरैकवाक्यताऽभ्युपगम्यते तत्राह। श्रुत्यन्तरकृतं चेति। सामान्यविशेषयोरेकवाक्यरूपायां गतौ सत्यां वाक्यभेदं कृत्वा नाध्वर्युरिति निषेधादविशेषश्रुतेर्वाध्वर्युरुपगायति चेत्येवं सर्वत्र विकल्पो न युक्तः षोडशिवचनवद्वा विकल्प आश्रित इत्यर्थः। विकल्पस्यान्याय्यत्वमष्टदोषदुष्टत्वात्। तथा हि यदि षोडशिवाक्यमाश्रीयते तदा ग्रहणवाक्यस्य प्रमाणस्य त्यागः, अप्रमाणस्य स्वीकारः, कदाचित् ग्रहणवाक्याश्रयणेऽप्रमाणस्य स्वीकारः, स्वीकृतप्रामाण्यत्यागश्चेत्येवं ग्रहणवाक्ये चत्वारो दोषा भवन्ति, एवं षोडशिवाक्येऽपि चत्वारो दोषाः इति, एवं दुर्विकल्पपरिहाराय भिन्नशाखाश्रुत्योरपि एकवाक्यता जैमिनिसम्मतेत्याह। तदुक्तमिति। ज्योतिष्टोमप्रकरणे 'दीक्षितो न जुहोति' इति श्रुतं 'यावज्जीवमग्निहोत्रं जुहुयात्' इति चान्यत्र श्रुतं, तत्र यदि न दीक्षितवाक्यं होमप्रतिषेधकं स्यात् तदा प्राप्यर्थत्वात् निषेधोऽनु-

काम्यशेषत्वादितरपर्युदासः स्यात् प्रतिषेधे विकल्पः स्या
इति । अथवैतास्विव विधूननश्रुतिष्वेतेनैव सूत्रेणैतच्चिन्ति
तव्यं किमनेन विधूननवचनेन सुकृतदुष्कृतयोर्हानमभिधी
यते किं वाऽर्थान्तरमिति । तत्रैवं प्रापयितव्यं न हा
विधूननमभिधीयते, धूञ् कम्पन इति स्मरणात्, दोधूयं
ध्वजाग्राणीति च वायुना चाल्यमानेषु ध्वजाग्रेषु प्रयोगदर्श
नात् । तस्माच्चालनं विधूननमभिधीयते । चालनन्तु सु
तदुष्कृतयोः काञ्चित्कालं फलप्रतिबन्धनादित्येवं प्राप

---

शेयः, यावज्जीवविधिना होमो यानुष्ठेय इति विकल्पः स्यात्, न
न्यायः । अपि तु यावज्जीववाक्यं प्रति न दीक्षितवाक्यस्य शेषत्वा
इतरपर्युदासार्थकः स्याद्दीक्षितान्यविषयकः स्यात् न होमप्रतिषे
तस्माददीक्षितो यावज्जीवं जुहुयादित्येकवाक्यतेति न दीक्षिताधिकार
सिद्धान्तसूत्रार्थः । अत्र भगवत्पादैः सूत्रमेव पठितं, मिश्रैस्तु पर्यु
साधिकरणसिद्धान्तसूत्रं 'अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्
मेकदेशः स्यात्' इति स्थितम् । अत्रार्थतः पठितमित्युक्तं तच्चिन्त्यं। इ
र्थस्तु यजमाने ये यजामहे इति प्रयोक्तव्यमिति श्रुतं, नानूयाजेषु
यजामहं करोतीत्यपि श्रुतं, तत्र नकारस्य निषेधकत्वेऽप्यसिद्धे दोष
प्रकृतावप्यनयोरनूयाजेषु यजत्यविशेषात् प्रयोक्तव्यं निषेधात्
प्रयोक्तव्यमिति । विकल्पः स्यात्, तस्मात् न्याय्यत्वात् ये यजामहे
देव नानूयाजवाक्यमेकदेशः स्यात्, पर्युदासकल्पा विधिवाक्यशेषः
दिति यावत् । तथा चानूयाजभिन्नेषु यागेषु ये यजामहे इति प्र
क्तव्यमित्येकवाक्यतेति वर्णकान्तरमाह । अथ वा इति । पूर्वत्र
मनकर्मणामिति भिन्नसूत्रस्य उपायनोपसंहार उक्तः अत्र
साध्यत इति भेदः । उभयत्र लक्षणाभावात् संशयमाह । किमि
विधूननस्य हि फलद्वयपदरोमादिषु दृष्टं पूर्वस्माभावात् पु

प्रतिपत्तव्यं, हानावेवैष विधूननशब्दोऽनुवर्तितुमर्हति उपायनशब्दशेषत्वात्, न हि परपरिग्रहभूतयोरप्रहीणयोः सुकृतदुष्कृतयोः परैरुपायनं सम्भवति। यद्यपीदं परकीययोः सुकृतदुष्कृतयोः परैरुपायनं नाञ्जसं सम्भाव्यते तथापि तत्सङ्कीर्तनात् तावत् तदानुगुण्येन हानमेव विधूननं नामेति निर्णेतुं शक्यते। क्वचिदपि चेदं विधूननसन्निधावुपायनं श्रूयमाणं कुशाच्छन्दःस्तुत्युपगानवद्विधूननश्रुत्या सर्वत्राप्यपेक्ष्यमाणं सार्वत्रिकं निर्णयकारणं सम्पद्यते। न च चालनं

---

संक्रान्तिश्चेति तत्र संक्रान्तिरूपहानिर्लक्षणीया किंवाच्युतिरिति संशयार्थः। तत्र विधूननशब्दस्य कम्पनं मुख्यार्थ इति तावत्सर्वसम्मतं। यद्यमूर्तयोः पुण्यपापयोर्न सम्भवति अतस्तयोर्यः स्वभावः फलदातृत्वशक्तिस्तच्चालनं विद्यया प्रतिबन्धात् च्युतिः सा लक्षणीया न हानिरमूर्तयोरन्यत्र संक्रान्त्ययोगादन्यसापेक्षत्वाच्चेति पूर्वपक्षार्थः। सिद्धान्तयति। हानावेवेति। यदि धुनोतिमात्रं लक्ष्यं तदोपायनमनन्वितं स्यात्। न च यत्र धुनोतेरुपायनशब्दसान्निध्यं तत्र हानिर्लक्ष्यते न केवलधुनोतेर्हानिश्चान्यत्र विदुषः शरीरादौ तत्कर्मसंक्रान्तिरिति नालम्भ इति वाच्यं, केवलधुनोतेरपि मुख्यार्थासम्भवेनान्यत्र लक्ष्यतया बुद्धिस्थहानिलक्षणाया एव युक्तत्वादिति भावः। उपायनस्याहस्यत्वाच्च क्वापि हानिलक्षणाधीनत्वमिति यद्वत्वा पुण्यपापयोः फलतः स्वीकारात्मकमुपायनं हानिं विनानुपपन्नं पक्षपातिताचक्षमिति परिहरति। यद्यपीत्यादिना। यथान्यत्र श्रुतं शीघ्रस्वरत्वादिकं कुशादिनिर्णायकं तथेदमुपायनं विधूननस्य हानत्वनिर्णायकमित्याह। क्वचिदपीति। विधूननं श्रुतं विनापि भोक्ष्ये तत्राह। न चेति। तथापि हानं कथं लक्ष्यत इत्याशङ्क्य मुख्यसम्बन्धादित्याह। अश्व इति। अनुपपत्तिः सम्बन्धश्च यथासङ्ख्यं तत्र अश्व इत्यत्र पदं निर्दिशति। अश्व इवेति। विधूयेति पदं दृष्टान्ते हानपर्यन्तं न दार्ष्टा-

ध्वजाग्रवत् सुकृतदुष्कृतयोर्मुख्यं सम्भवति अद्रव्यत्वात्। अश्व इव रोमाणि विधुन्वानः त्यजन् रजः सहैव तेन रोमाण्यपि जीर्णानि शातयति। 'अश्व इव रोमाणि विधूय पापम्' इति च ब्राह्मणम्। अनेकार्थत्वाभ्युपगमाच्च धातूनां न स्मरणविरोधः। तदुक्तमिति व्याख्यातम्॥

## साम्पराये तर्तव्याभावात् तथा ह्यन्ये॥२७॥

देवयानेन पथा पर्यङ्कस्थं ब्रह्माभिप्रस्थितस्य अध्वनि सुकृतदुष्कृतवियोगं कौषीतकिनः पर्यङ्कविद्यायामामनन्ति 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति' इत्युपक्रम्य 'स आगच्छति विरजां नदीं तां मनसैवात्येति तत् सुकृतदुष्कृते विधुनुते' इति। तत् किं यथा श्रुतं अध्वनि वियोगवचनं प्रतिपत्तव्यं आहोस्विदादावेव देहादपसर्पणे इति विचारणायां श्रुतिप्रामाण्यात् यथाश्रुतप्रतिपत्तिप्रसक्तौ पठति। साम्पराये' इति। साम्पराये गमन एव देहादपसर्पणे इदंविद्यासामर्थ्यात् सुकृतदुष्कृतहानं भवति इति

---

न्तिकेऽपि हानवाचकमित्यर्थः। यदा हानवाचकमेवास्तु न च दू... कम्पन इति धातुपाठविरोधस्तस्योपलक्षणत्वार्थत्वादित्याह। अनेकेति। शाखान्तरसुपायनं विधूननस्य हानत्वनिश्चायकमित्यत्र जैमिनिसूत्रं तदुक्तमिति सूत्रितपूर्वं व्याख्यातमित्यर्थः। एवं विधूननस्य हानि... त्वसिद्धेः केवलहानानुपायनोपसंहार इति सिद्धम्।

साम्पराये। अन्ये अध्वनि अर्धमार्गे पूर्वोक्तं विधूननस्य हानत्वमुपजीव्य हानस्य नदीतरणानन्तर्यश्रुतेरश्व इव रोमाणि इत्यादौ देहपातानन्तर्यप्रतीतेस्तत्र संशयमाह। तत्किमिति। ब्रह्मलोकमार्गमध्ये वि...

प्रतिजानीते। हेतुं व्याचष्टे, तर्तव्याभावादिति। न हि विदुषः सम्परेतस्य विद्यया ब्रह्म प्रेप्सतोऽन्तराले सुकृतदुष्कृताभ्यां किञ्चित् प्राप्तव्यमस्ति यदर्थं कतिचित् क्षणानक्षीणे ते कल्प्येयातां, विद्याविरुद्धफलत्वात् तु विद्यासामर्थ्येन तयोः क्षयः, स च यदैव विद्याफलाभिमुखो तदैव भवितुमर्हति। तस्मात् प्रागेव सन्नयं सुकृतदुष्कृतक्षयः पश्चात् पठ्यते। तथा ह्यन्येऽपि शाखिनः ताण्डिनः शाट्यायनिनश्च प्रागवस्थायामेव सुकृतदुष्कृतहानिमामनन्ति 'अश्व इव रोमाणि विधूय पापम्' इति 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति च॥

## छन्दत उभयाविरोधात् ॥२८॥

यदि च देहादपसृप्तस्य देवयानेन पथा प्रस्थितस्यार्धपथे सुकृतदुष्कृतक्षयोऽभ्युपगम्येत ततः पतिते देहे यमनि-

---

जानदीमत्येति 'तत् सुकृतदुष्कृते विधुनुतः' इत्यत्र श्रुतेरिति कर्मनाश्रुत्या तेनेत्यर्थः तथा च विरजानदीतरणस्य कर्महानिहेतुत्वोक्तेरर्धपथे कर्मक्षय इति पूर्वपक्षः। तत्र विद्यायाः कर्मक्षयहेतुत्वासिद्धिः पूर्वपक्षे, सिद्धान्ते तत्सिद्धिरिति मत्वा सिद्धान्तयति। साम्पराय इति। मरणात् प्रागित्यर्थः। सम्परेतस्य मृतस्य कञ्चित्कालं कर्मसत्त्वे फलाभावाद् देवयानमार्गप्रवेशायोगादादावेव क्षय इत्यर्थः। क्षयहेतोर्विद्याया मध्ये मार्गे सत्त्वाभावाच्च। विद्याविरुद्धेति। नदीतरणानन्तरपाठस्तु बाध्यः अर्थविरोधादित्याह। तथा हीति। तदिति सर्वनाम्नापि प्रकृतविशेष्यपर इति भावः॥

किञ्च मृतस्य छन्दतो यथाकामं विद्यानुष्ठानानुपपत्तेरुभयोर्विद्याकर्मक्षययोः श्रुतौ हेतुफलभावो विरुध्यते। किञ्च सति सुकृते हेतौ

यमविद्याभ्यासात्मकस्य सुकृतदुष्कृतचयहेतोः पुरुषप्रयत्नेच्छातोऽनुष्ठानानुपपत्तेरनुपपत्तिरेव तद्धेतुकस्य सुकृतदुष्कृतचयस्य स्यात्, तस्मात् पूर्वमेव साधकावस्थायां छन्दतोऽनुष्ठानं तस्य स्यात्, तत्पूर्वकञ्च सुकृतदुष्कृतहानमिति द्रष्टव्यं, एवं निमित्तनैमित्तिकयोरुपपत्तिस्ताण्ड्यशाट्यायनिश्रुत्योश्च सङ्गतिरिति ॥

## गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥२९॥

क्वचित् पुण्यपापहानसन्निधौ देवयानः पन्थाः श्रूयते क्वचित् न । तत्र संशयः किं हानावविशेषेणैव देवयानः पन्थाः सन्निपतेत् उत विभागेन क्वचित् सन्निपतेत् क्वचिन्नेति, यथा तावद्धानावविशेषेणैवोपायनानुवृत्तिरुक्ता एवं देवयानानुवृत्तिरपि भवितुमर्हतीत्यस्यां प्राप्तावाचक्ष्महे । गतेः देवयानस्य पथोऽर्थवत्त्वं उभयथाविभागेन भवितुमर्हति, क्वचिदर्थवती गतिः क्वचिन्नेति नाविशेषेण, अन्यथा ह्यविशेषेणैवतस्याङ्गताङ्गीक्रियमाणायां विरोधः स्यात् 'पुण्यपापे विधूय निरञ्जनः प-

---

न कार्यविलम्ब इति न्यायोपेतताण्ड्यादिश्रुतिविरोधस्य स्याद्यथा पक्षे त्वविरोध इत्याह । छन्दत इति । तस्मात् कर्महानस्य विद्याफलत्वात् केवलहानावुपायनोपसंहारो विद्यान्तरेष्विति सिद्धम् ॥

गतेरर्थवत्त्वं । क्वचित् सगुणविद्यायां मार्गः श्रूयते निर्गुणविद्यायां न श्रूयते । तत्र हानसन्निधौ मार्गस्य श्रुतत्वादनपेक्षितत्वाच्च सर्वत्र मार्गसङ्गत्या पूर्वपक्षमाह । यथा तावदिति । उपायनवत् मार्गस्यापि क्वचित् श्रुतत्वात् सर्वत्रोपसंहार इत्यर्थः । अत्र निर्गुणविद्यायां दोऽपि मुक्त्यर्थं मार्गापेक्षा पूर्वपक्षे, सिद्धान्ते त्वनपेक्षेति फलम् । शेष-

रमं साम्यमुपैति' इत्यस्यां श्रुतौ देशान्तरप्रापणी गतिर्विरुध्येत, कथं हि निरञ्जनोऽगन्ता देशान्तरं गच्छेत् गन्तव्यं च परमं साम्यं न देशान्तरप्राप्त्यायत्तमित्यानर्थक्यमेवात्र गतेर्मन्यामहे ॥

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ३०॥

उपपन्नश्चायमुभयथाभावः क्वचिदर्थवती गतिः क्वचिन्नेति, तल्लक्षणार्थोपलब्धेः । गतिः कारणभूतो ह्यर्थः पर्यङ्कविद्यादिषु सगुणेषूपासनेषूपलभ्यते, तत्र हि पर्याङ्कारोहणं पर्यङ्कस्थेन ब्रह्मणा सह संवदनं विशिष्टगन्धादिप्राप्तिश्चेत्येवमादि बहुदेशान्तरप्राप्त्यायत्तं फलं श्रूयते, तत्रार्थवती गतिः न तु सम्यग्दर्शने तल्लक्षणार्थोपलब्धिरस्ति । न ह्यात्मैकत्वदर्शिनामाप्तकामानामिहैव दग्धाशेषक्लेशबीजानामारब्धभोगकर्माशयक्षपणव्यतिरेकेणापेक्षितव्यं किञ्चिदस्ति तत्रानर्थिका गतिः, लोकवच्चैष विभागो द्रष्टव्यः, यथा लोके ग्रामप्राप्तौ देशान्तरप्रापणः पन्था अपेक्ष्यते नारोग्यप्राप्तावेवमिहापीति । भूयश्चैतं विभागं चतुर्थेऽध्याये निपुणतरमुपपादयिष्यामः ॥

---

दित्यर्थः, तद्वत्तु प्राप्तौ मार्गव्यपेक्षेत्यनन्तरानुक्तश्रुतिविरोधात् नो-पसंहार इति सिद्धान्तः । निरञ्जनोऽसङ्गः साम्यं ब्रह्म ॥

ननु तर्हि सगुणविद्यास्वपि मार्गो व्यर्थं इत्यत आह । उपपन्न इति । सा गतिर्लक्षणं कारणं यस्यार्थस्य स तल्लक्षणार्थः ॥

## अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम्॥३१॥

सगुणासु विद्यासु गतिरर्थवती न निर्गुणायां परमात्मविद्यायामित्युक्तम्। सगुणास्वपि विद्यासु कासुचिद्गतिः श्रूयते 'यथा पर्यङ्कविद्यायां पञ्चाग्निविद्यायामुपकोसलविद्यायां दहरविद्यायाम्' इति नान्यासु 'यथा मधुविद्यायां शाण्डिल्यविद्यायां षोड़शकलविद्यायां वैश्वानरविद्यायाम्' इति, तत्र संशयः किं यास्वेवैषा गतिः श्रूयते तास्वेव नियम्येतोतानियमेन सर्वाभिरेवैवं जातीयकाभिर्विद्याभिः सम्बध्येतेति। किं तावत् प्राप्तं नियम इति। यत्रैव श्रूयते तत्रैव भवितुमर्हति प्रकरणस्य नियामकत्वात्। यद्यन्यत्र श्रूयमाणापि गतिर्विद्यान्तरं गच्छेत् श्रुत्यादीनां प्रामाण्यं हीयेत,

---

अनियमः सर्वासां। अत्रार्चिरादिमार्ग एव विषयस्तत्र विद्याविशेषप्रकरणादविशेषश्रुतेश्च संशये पूर्वपक्षमाह। किं तावदिह। सगुणनिर्गुणविद्यासु मार्गस्य भावाभावव्यवस्थावत् सगुणास्वपि व्यवस्थेति दृष्टान्तेन प्राप्तौ सिद्धान्ते व्यवस्थापवादात् सङ्गतिः नियमोऽनियम उभयत्र फलम्। नियमे प्रकरणमुक्त्वा पुनरुक्तिं लिङ्गमाह। अपि चेह। एकत्रोक्तगतेरन्यत्र प्राप्तौ पुनरुक्तिर्व्यर्था स्यादित्यर्थः। सिद्धान्तयति। सर्वासामिति। अभ्युदयो ब्रह्मलोकः। यदविशेषश्रुत्यादिना प्रकरणबाधे न दोष इत्याह। नैष दोष इति। तत्र पञ्चाग्निविदां मध्ये य इत्थं पञ्चाग्नीन्विदुर्ये चामी अरण्ये श्रद्धातप इत्युपासते श्रद्धातपश्शब्दितं ब्रह्म ध्यायन्ति तेऽर्चिषमभिसम्भवन्तीत्यन्वयः। ननु श्रद्धातपोमात्रनिष्ठानां तेषामप्यर्चिरादिगमने स्यात् न वैश्वानरादिविद्याभिः ... प्रकृते। कथं पुनरिति। अविदुषां गतिनिषेधाच्छ्रद्धातपः शब्दाभ्यां ब्रह्मविद्यालक्षणेति परिहरति। नैष दोष इति। तत्र ब्रह्म

सर्वस्य सर्व्वार्थत्वप्रसङ्गात्। अपि चार्चिरादिकैकैव गतिरुप-कोशलविद्यायां पञ्चाग्निविद्यायां च तुल्यवत् पठ्यते,तत्सर्वार्थत्वेऽनर्थकं पुनर्वचनं स्यात्। तस्मात् नियम इत्येवं प्राप्ते पठति। अनियम इति। सर्वासामेवाभ्युदयप्राप्तिफलानां सगुणानां विद्यानामविशेषेणैव देवयानाख्या गतिर्भवितुमर्हति। नन्वनियमाभ्युपगमे प्रकरणविरोध उक्तः, नैषोऽस्ति विरोधः, शब्दानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः। तथा हि श्रुतिः 'तद्य इत्थं विदुः' इति पञ्चाग्निविद्यावतां देवयानं पन्थानमवतारयन्ती 'ये चेमेऽरण्ये श्रद्धां तप इत्युपासते' इति विद्यान्तरशीलानामपि पञ्चाग्निविद्याविद्भिः समानमार्गतां गमयति, कथं पुनरवगम्यते विद्यान्तरशीलानामियं गतिश्रुतिरिति। ननु श्रद्धातपःपरायणानामेव स्यात् तन्मात्रश्रवणात्। नैष दोषः, न हि केवलाभ्यां श्रद्धातपोभ्यामन्तरेण विद्याबलमेषा गतिर्लभ्यते-

'विद्यया तदारोहन्ति यत्र कामाः परागताः।

न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः"॥ इति-श्रुत्यन्तरात्। तस्मादिह श्रद्धातपोभ्यां विद्यान्तरोपलक्षणम्

---

लोकस्थानं, परागताः पराद्वत्ताः, कामक्रोधदोषा न सन्तीति यावत्। दक्षिणाः केवलकर्मिणस्तपस्विनोऽप्यविद्वांसो न गच्छन्ति इत्यर्थः। यद्यप्यादोषहीनं वाक्यमात्र। वाजसनेयिनस्त्विति। किञ्च विद्याकर्मसमुच्चयमार्गद्वयभ्रष्टानामधोगतिश्रुतेः वैश्वानराद्युपासकानामर्चिरादिमार्गप्राप्तिरित्याह। अथ य एतावित। दन्दशूकः सर्पः। किञ्च 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः' इत्यविशेषेणोपासकानामर्चिरादिगतिरुक्तोपसंहारस्तुतेश्च

वाजसनेयिनस्तु पञ्चाग्निविद्याधिकारेऽधीयते 'य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते' इति, तत्र श्रद्धावन्ये सत्यं ब्रह्मोपासत इति व्याख्येयं, सत्यशब्दस्य ब्रह्मण्यसकृत् प्रयुक्तत्वात् । पञ्चाग्निविद्याविदां चेत्थं वित्तयैवोपात्तत्वात् विद्यान्तरपरायणानामेवेदमुपादानं न्याय्यं । 'अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम्' इति च मार्गद्वयभ्रष्टानां कष्टामधोगतिं गमयन्ती देवयानपितृयाणयोरेवैतामन्तर्भावयति तत्रापि विद्याविशेषाद्देवयानप्रतिपत्तिः । स्मृतिरपि-

"शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्यया वर्तते पुनः" ॥ इति ।

यत्पुनर्देवयानस्य पथोऽर्चिरादेर्द्विराम्नानं उपकोसलविद्यायां पञ्चाग्निविद्यायाञ्च तदुभयत्राप्यनुचिन्तनार्थं, तस्मादनियमः ॥

---

तेषां तत्प्राप्तिरित्याह । स्मृतिरिति । शुक्ला गतिरर्चिरादिका, कृष्णा धूमादिका, जगतो विद्याकर्माधिकृतस्य, शाश्वते ध्रुवे सम्मते, तत्रैकया शुक्लया पुनरावृत्तिवर्जनार्थं ब्रह्म गच्छति, अन्यया स्वर्गं गत्वा पुनरावर्तत इत्यर्थः । पुनरुक्तिदोषं दूषयति । यत्पुनरिति । तत्र तत्र मार्गद्वयं मार्गचिन्तनार्थं, प्रकरणेन मार्गध्यानस्य विद्याङ्गत्वावगमात् । तथा च वक्ष्यति सूत्रकारः 'तच्छेषगत्यनुस्मृतियोगाच्च' इति । तेषां श्रुतो मार्गस्तं मार्गध्यानं विनापि विद्यासामर्थ्यात् मार्गं प्राप्य ज्ञापनार्थो पुनरुक्तिरित्यर्थः । तस्मात् सर्वोपासनात् प्रतीकाभिध्यानं वर्जयित्वा अर्चिरादिमार्गप्राप्तिरिति सिद्धम् ॥

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥३२॥

विदुषो वर्त्तमानदेहपातानन्तरं देहान्तरमुत्पद्यते न वेति चिन्त्यते। ननु विद्यायाः साधनभूतायाः सम्पत्तौ कैवल्यनिर्वृत्तिः स्यान्न वेति नेयं चिन्तोपपद्यते। न हि पाकसाधनसम्पत्तावोदनो भवेत् न वेति चिन्ता सम्भवति, नापि भुञ्जानस्तृप्येत् न वेति चिन्त्यते। उपपन्ना त्वियं चिन्ता, ब्रह्मविदामपि केषाञ्चित् इतिहासपुराणयोर्देहान्तरोत्पत्तिदर्शनात्। तथा ह्यपान्तरतमाः नाम वेदाचार्यः पुराणर्षिर्विष्णुनियोगात् कलिद्वापरयोः सन्धौ कृष्णद्वैपायनः सम्बभूवेति स्मरणं, वसिष्ठश्च ब्रह्मणो मानसः पुत्रः सन्निमिशापादपगतपूर्वदेहः पुनर्ब्रह्मादेशात् मित्रावरुणाभ्यां सम्बभूवेति। भृग्वादीनामपि ब्रह्मण एव मानसानां पुत्राणां वारुणे यज्ञे पुनरुत्पत्तिः स्मर्यते। सनत्कुमारोऽपि ब्रह्मण एव मानसः पुत्रः स्वयं रुद्राय वरप्रदानात् स्कन्दत्वेन प्रादुर्बभूव। एवमेव दक्षनारदप्रभृतीनामपि भूयसी देहान्तरोत्पत्तिकथा तेन तेन निमि-

---

यावदधिकारं। निर्गुणविद्यायां गतिर्व्यर्था मुक्तिफलत्वात्, सगुणविद्यासु सर्वत्रार्थवती ब्रह्मलोकफलत्वादिति व्यवस्था कृता, सा न युक्ता, तत्त्वज्ञानिनामपि इतिहासादौ पुनर्जन्मदर्शनेन ज्ञानस्य मुक्तिफलत्वाभावादित्याक्षेपात् सङ्गतिः, ज्ञानिनां पुनर्जन्मदर्शनं संवदतीति भाष्ये दर्शितं। पूर्वपक्षे ज्ञानान्मुक्तिश्रुतीनां ज्ञानस्तुतिमात्रत्वेन ज्ञानस्य मुक्तिफलत्वाभावे सति ब्रह्मलोकफलत्वाविशेषादर्चिरादिमार्गोपदेशव्यार्थः फलं, सिद्धान्ते तद्व्यवस्थासिद्धिरिति विवेकः। श्रुतावपीति, सेया-

त्तेन भवति स्मृतौ। श्रुतावपि मन्त्रार्थवादयोः प्रायेणोप
भ्यते। ते च केचित् पतिते पूर्वदेहे देहान्तरमाददते केचि
त्तु स्थित एव तस्मिन् योगैश्वर्यवशादनेकदेहादानमाविं
सव चैते समधिगतसकलवेदार्थाः स्मर्यन्ते। तदेतेषां देहा
न्तरोत्पत्तिदर्शनात् प्राप्तं ब्रह्मविद्यायाः पाक्षिकं मोक्ष
हेतुत्वमहेतुत्वं वेत्यत उत्तरमुच्यते। न, तेषामपान्तरतमः
प्रभृतीनां वेदप्रवर्तनादिषु लोकस्थितिहेतुष्वधिकारेषु नि
क्तानां अधिकारतन्त्रत्वात् स्थितेः। यथासौ भगवान् स
ता सहस्रयुगपर्यन्तं जगतोऽधिकारं चरित्वा तदवसा
उदयास्तमयवर्जितं कैवल्यमनुभवति, 'अथ तत ऊर्ध्वं उ
त्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता' इति श्रु
यथा च वर्तमाना ब्रह्मविदः प्रारब्धभोगक्षये कैवल्यमनुभ
न्ति "तस्य तावदेव चिरं यावत् न विमोक्ष्येऽथ सम्पत्स्ये"
इति श्रुतेः। एवमपान्तरतमःप्रभृतयोऽपीश्वराः परमेश्वरे

---

तिर्येमें प्रेतिमन्त्रे इन्द्रस्य मेषजन्मोपलभ्यते। यद्विष्व उर्वशीमुग्धो
इत्येवमर्थो बहु चार्थवाद इत्यर्थः। ध्यानस्य छत्रप्रदेवत्वं नेति विज्ञा
यन्ति। ते चेति। पाक्षिकमित्यापाततः अहेतुत्वमेवेति पूर्वपक्षः।
लोकव्यवस्थाहेतुज्ञानित्वमधिकारः, तत्प्रापकं प्रारब्धं यावदस्ति
कालं जीवन्मुक्तत्वेनाधिकारिकाणामवस्थितिः, प्रारब्धक्षये प्रतिबन्ध
भावात् विदेहकैवल्यमित्यत्र मानमाह। अथेति। अथ प्रारब्ध
नन्तरं। तत ऊर्ध्वः विलक्षणः केवलः ब्रह्मस्वरूपः सन् उदेत्यो
देहं त्यक्त्वेति यावत्। एकल एव अद्वितीयः, मध्ये उदासीन
स्वरूपे तिष्ठतीत्यर्थः। ननु ज्ञानिनामपि जन्मान्तरश्चेत् कथं मुक्ति
रित्यत आह। सकृत्प्रवृत्तमिति। यदि ज्ञानिनां प्रारब्धानि

तेषु तेष्वधिकारेषु नियुक्ताः सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतावक्षीणकर्माणो यावदधिकारमवतिष्ठन्ते तदवसाने चापवृज्यन्त इत्यविरुद्धम्। सकृत्प्रवृत्तमेव हि तेऽधिकारफलदानाय कर्माशयमतिवाहयन्तः स्वातन्त्र्येण गृहादिव गृहान्तरमन्यमन्यं देहं सञ्चरन्तः स्वाधिकारनिर्वर्तनायापरिमुषितस्मृतय एव देहेन्द्रियप्रकृतिवशित्वात् निर्माय देहान् युगपत्क्रमेण वाधितिष्ठन्ति। न चैते जातिस्मरा इत्युच्यन्ते, त एव ते, इति स्मृतिप्रसिद्धेः। यथा 'सुलभा ब्रह्मवादिनी जनकेन विवदितुकामा व्युदस्य स्वं देहं जानकं देहमाविश्य व्युष्य तेन पश्चात्स्वमाविवेश, इति स्मर्यते। यदि ह्युपयुक्ते सकृत्प्रवृत्ते कर्मणि कर्मान्तरं देहान्तरारम्भकारणमाविर्भवेत् ततोऽन्यदप्यदग्धबीजं कर्मान्तरं तद्वदेव प्रसज्येतेति ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वा शङ्क्येत, न त्वियमाशङ्का युक्ता, ज्ञानात् कर्मबीजदाहस्य श्रुतिस्मृतिप्रसिद्धत्वात्। तथा हि श्रुतिः—

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'॥ इति 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष' इति चैवमाद्या। स्मृतिरपि।

---

कर्माधीनं जन्मान्तरं स्यात् तदा ज्ञानान्मुक्त्यभावः स्यात् नैतदस्ति किन्तु बहुजन्मफलाय सकृद्वृत्तं प्रारब्धं ते क्षपयन्ति, जन्मपञ्चकेऽपि ज्ञानयोगबलाच्च शोषयन्ति प्रारब्धसमाप्तौ मुच्यन्त इत्यर्थः। ज्ञानिनां जन्मान्तरस्य पूर्वजन्महेतुप्रारब्धाधीनतायामननुस्मृतित्वं, यो हि जातिस्मरत्वे सति कर्मान्तराधीनजन्मान्तरवान् सोऽननुस्मृतेरिति व्याप्तेः ज्ञानिषु व्यापकाभावात् विशिष्टव्याप्याभावसिद्धिः। ननु तेषां

"यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन!।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा" ॥ इति
बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः।
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुनः॥ इति-

चैवमाद्या। न चाविद्यादिक्लेशदाहे सति क्लेशबीजस्य कर्माशयस्यैकदेशदाह एकदेशप्ररोहश्चेत्युपपद्यते,न ह्यग्निदग्धस्य शालिबीजस्यैकदेशप्ररोहो दृश्यते। प्रवृत्तफलस्य तु कर्माशयस्य मुक्तेषोरिव वेगक्षयात् निवृत्तिः 'तस्य तावदेव चिरम्' इति शरीरपातावधिप्रकरणात्। तस्मादुपपन्ना यावदधिकारमधिकारिकाणामवस्थितिः, न च ज्ञानफलस्यानैकान्तिकता। तथा च श्रुतिरविशेषेणैव सर्वेषां ज्ञानान्मोक्षं दर्शयति 'तद्यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्' इति। ज्ञानान्तरेषु चैश्वर्यादिफलेष्वासक्ताः स्युर्महर्षयः ते पश्चादैश्वर्यक्षयदर्शनेन निर्विण्णाः परमात्मज्ञाने परिनिष्ठाय कैवल्यं ययुरित्युपपद्यते।

..................................................

जातिस्मरत्वादनुमक्तिरित्यन्यथासिद्धमित्यत आह। न चैत इति। तथा च तेषामजातिस्मरत्वरूपविशेषणे सति विशेष्याभावादेव नि[illegible] ष्टाभावसिद्धिरित्यर्थः। पूर्वदेहनामप्रत्यभिज्ञानहीनाः परतन्त्राभिमाना जातिस्मराः, अधिकारिकास्तु पूर्वनामानः स्वतन्त्रा निरभिमाना इति वैषम्यं। तेन जनकेन सह, बुद्धा विवादं शास्त्रेषु विदुषः प्रारब्धातिरिक्तकर्माभावान्मुक्तत्वमिति समर्थमुपपादयति। इती-त्युपयुक्त इत्यादिना। श्रुतिस्तत्युक्तार्थे युक्तिमप्याह। न चाविद्यादिविद्यया क्लेशदाहात् तत्कार्यकर्मक्षयश्चेत् तर्हि प्रारब्धस्य कथं स्थिति[illegible]

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' ॥ इति-
स्मरणात्। प्रत्यक्षफलत्वाच्च ज्ञानस्य फलविरहाशङ्कानुपपत्तिः। कर्मफले हि स्वर्गादावनुभवानारूढे स्यादपि कदाचिदाशङ्का भवेद्वा नवेति, अनुभवारूढन्तु ज्ञानफलं 'यत्साक्षादपरोक्षाद्ब्रह्म' इति श्रुतेः, 'तत्त्वमसि' इति च सिद्धवदुपदेशात्। न हि 'तत्त्वमसि' इत्यस्य वाक्यस्यार्थः तत्त्वं मृतो भविष्यसि इत्येवं शक्यः परिणेतुम्। 'तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' इति सम्यग्दर्शनकालमेव तत्फलं सर्वात्मत्वं दर्शयति। तस्मादैकान्तिकी विदुषः कैवल्यसिद्धिः ॥

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् ॥ ३३ ॥

वाजसनेयके श्रूयते 'तद्वै तदक्षरं गार्गि ब्राह्मणा अभि-

---

माह। अन्तफलत्वेति। विदुषो देहपातावधिस्थितेरनुभवाच्च ज्ञानस्यावरकाज्ञानांशनिवर्तकस्य प्रारब्धविक्षेपस्थित्यङ्कुराज्ञानांशनिवर्तनसामर्थ्याभावसिद्धेर्भोगेनैव प्रारब्धक्षय इति भावः। ज्ञानिनामधिकारित्वं कथमित्याशङ्क्य ज्ञानात् प्राक्तनोपासनादिवशादित्याह। ज्ञानान्तरेषु चेति। प्रतिसञ्चरो महाप्रलयः, परस्य हिरण्यगर्भस्य, अधिकारान्ते साक्षात् कृतात्मानो मुच्यन्त इत्यर्थः। ब्रह्मभावफलस्यापि भावित्वमाशङ्क्य तत्त्वमसीति श्रुतिमाह। न हीति। तस्मात् निर्गुणविद्यायां मार्गानुपसंहार इति सिद्धम्।

अक्षरधियाम्। अत्राक्षरब्रह्मप्रमापका निषेधशब्दा विषयाः, तेषु

वदन्त्यस्थूलमनण्वह्रस्वमदीर्घं इत्यादि। तथाथर्वणे श्रूयते 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णम्' इत्यादि। तथैवान्यत्रापि विशेषनिराकरणद्वारेणाक्षरं परं ब्रह्म श्राव्यते, तत्र क्वचित् केचिदतिरिक्ता विशेषाः प्रतिषिध्यन्ते, तासां विशेषप्रतिषेधबुद्धीनां किं सर्वासां सर्वत्र प्राप्तिरुत व्यवस्थेति संशये श्रुतिविभागात् व्यवस्थाप्राप्तावुच्यते, अक्षरधियस्तु विशेषप्रतिषेधबुद्धयः सर्वाः सर्वत्रावरोद्धव्याः, सामान्यतद्भावाभ्याम्। समानो हि सर्वत्र विशेषनिराकरणरूपो ब्रह्मप्रतिपादनप्रकारः, तदेव च हि सर्वत्र प्रतिपाद्यं ब्रह्माभिन्नं प्रत्यभिज्ञायते, तत्र किमित्यन्यत्र कृता बुद्धयोऽन्यत्र न स्युः। तथा च आनन्दादयः

---

यत्र यावन्तः श्रुतास्तत्र तावतामशेषद्वैतनिषेधकत्वं सम्भवत्यासां संशयमाह। तासामिति। यथा निर्गुणविद्यायां मार्गस्यानपेक्षितत्वादनुपसंहारस्तथा श्रुतनिषेधानामुपलक्षणतया सर्वद्वैतनिषेधस्याच्छाखान्तरीयनिषेधशब्दानामनपेक्षितत्वादनुपसंहार इति दृष्टान्तेन पूर्वपक्षः, तत्र लाघवं फलं सिद्धान्ते तु दोषद्वयाभावः फलम्। तथाहि यदि श्रुतशब्दैरश्रुतनिषेधा लक्ष्यन्ते तदा लक्षणदोषः, यदि न लक्ष्यन्ते तदा सर्वद्वैतनिषेधासिद्धेर्विशेषप्रमित्यभावदोष इति शिवे अक्षरे धर्मिणि द्वैतनिषेधधियोऽक्षरधियस्तद्बोधकाः शब्दा इति यावत् तासामशेष उपसंहार इति सूत्रयोजना। येषिमद्वयः सर्वशाखा भावात् तत्प्रमितेः समानत्वाच्छेषाणामुपसंहार इति चेत् तर्हि ब्रह्म साम्यात् पुनरुक्तितादवस्थ्यमित्यत आह। विशेषप्रपञ्चार्थं इति आनन्दादीनां स्वरूपत्वादनुपसंहारः निषेधानामनात्मत्वादानन्दाद्यु पसंहार इत्यधिकाराशङ्कायां तेषामनात्मत्वेऽपि निर्विशेषब्रह्मधिक त्याद्विद्वात्मकनिषेधत्वेन संनद्ध एव निरपेक्षा स्युः न तु कल

प्रधानस्य इत्यत्र [वे० सू० ३।३।११] व्याख्यातम्। तत्र विधिरूपाणि विशेषणानि चिन्तितानि इह प्रतिषेधरूपाणि इति विशेषप्रपञ्चार्थोऽयं चिन्ताभेदः। औपसदवदिति निदर्शनम्। यथा जामदग्न्येऽहीने पुरोडाशिनीषूपसत्सु चोदितासु पुरोडाशप्रदानमन्त्राणां 'अग्नेर्वेर्होत्रं वेरध्वरम्' इत्येवमादीनामुद्गातृवेदोत्पन्नानामप्यध्वर्युभिरभिसम्बन्धो भवति अध्वर्युकर्तृकत्वात् पुरोडाशप्रदानस्य, प्रधानतन्त्रत्वाच्चाङ्गानां, एवमिहाप्यक्षरतन्त्रत्वात् तद्विशेषणानां यत्र क्वचिदप्युत्पन्नानामक्षरेण सर्वत्राभिसम्बन्ध इत्यर्थः। तदुक्तं प्रथमे काण्डे 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' [जै० सू०] इत्यत्र॥

---

कृत्स्ना निषेधशब्दानामन्यत्र श्रुतनिषेधवाक्यैकवाक्यतयोपसंहार इति चिन्ता युक्तेत्यर्थः। अन्यत्र श्रुतशेषाणां अन्यस्य शेषिसम्बन्धे दृष्टान्तं व्याचष्टे। यथेति। तत्र इति पुष्टिकामश्चतूरात्रेण यजेत इत्युपक्रम्य विहिता जमदग्निना कृता जामदग्न्यः, अहीनश्चतूरात्रः क्रतुस्तस्मिन् पुरोडाशिन्य उपसदो भवन्ति इति पुरोडाशसाध्या इष्टयः तैत्तिरीयके विहिताः, तासामध्वर्युकर्तृकत्वात् सामवेदोत्पन्नमन्त्राणामपि विनियोगादध्वर्युणैव प्रयोगो नोद्गात्रेत्यर्थः। वेर्वेत्वमस्य होत्रं अध्वरं च कर्माग्ने त्वम् एहीत्यन्यामन्त्रणं मन्त्रार्थः। उत्पत्तिविधिर्गुणः फलापेक्षत्वादुत्पन्नस्य फले विनियोगविधिर्मुख्यः सफलत्वात्। तथा च मन्त्राणामुद्गातृत्वे वेदोत्पन्नत्वादुद्गात्रा प्रयोगः विनियोगविधिनाध्वर्युणा प्रयोग इति गुणमुख्ययोर्व्यतिक्रमे विरोधे सति मुख्येन बलीयसा मन्त्रात्मकवेदस्याध्वर्युणा संयोग उक्तो विनियोगार्थत्वादिति जैमिनिसूत्रार्थः।

## इयदामननात् ॥ ३४ ॥

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति'। इत्यध्यात्माधिकारे मन्त्रमाथर्वणिकाः श्वेताश्वतराश्च पठन्ति। तथा कठाः—

'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः' इति। किमत्र विद्यैकत्वमुत विद्यानानात्वमिति संशयः। किं तावत् प्राप्तं विद्यानानात्वमिति। कुतः, विशेषदर्शनात्। द्वा सुपर्णेत्यत्र ह्येकस्य भोक्तृत्वं दृश्यते, एकस्य चाभोक्तृत्वम्। ऋतं पिबन्तावित्यत्र तूभयोरपि भोक्तृत्वं दृश्यते तद्वेद्यं रूपं भिद्यमानं विद्यां भिन्द्यादित्येवं प्राप्ते ब्रवीति, विद्यैकत्वमिति। कुतः, यतः उभयोरप्येतयोर्मन्त्रयोरियत्तापरिच्छिन्नं द्वित्वोपेतं वेद्यरूपमभिन्नमामनन्ति।

---

यद्यपि शबरभाष्ये पारयन्तीयादिसाम्नामृग्वेदोत्पन्नत्वादाधानाङ्गत्वेनोच्चैःस्वरप्रयोगः 'एतद् वै विद्वान्पारयतीयं गायति एतद् यज्ञायज्ञीयं गायति वामदेव्यं गायति' इत्याम्नाने तेषां विनियोगविधेर्यात्प्रेष वाक्यस्योपांशुस्वरस्य प्रयोग इति गुणमुख्ययोर्विरोधे मुख्यस्यापि नियोगार्थत्वान्मुख्यविनियोगबलेन साम्नां यजुर्वेदस्वरसंयोग इति सूत्रं व्याख्यातं, तथापि न्यायमात्स्यादीयसदमन्त्राः सूत्रविषयत्वेनोदाहृता इत्यविरोधः।

इयदामननात्। मन्त्रद्वयेऽपि प्रतिपादनप्रकारभेदात् विद्याभेदमाशङ्क्य संशयमाह। किमत्रेति। ऋतपानवाक्ये 'अजरं अमरम्' इति गुणाः श्रुताः, सुपर्णवाक्ये न ऋतादयस्तेषां विभेदः

ननु दर्शितो रूपभेदः, नेत्युच्यते 'उभावप्येतौ मन्त्रौ जीव-द्वितीयमीश्वरं प्रतिपादयतो नार्थान्तरं, 'द्वासुपर्णा' इत्यत्र तावत् 'अनश्नन्नन्योऽभिचाकशीति' इत्यशनायाद्यतीतः पर-मात्मा प्रतिपाद्यते, वाक्यशेषेऽपि च स एव प्रतिपाद्यमानो दृश्यते 'जुष्टं यदा पश्यत्यन्यमीशम्' इति। 'ऋतं पिबन्तौ' इत्यत्र तु जीवे पिबत्यशनायाद्यतीतः परमात्मापि तत्साह-चर्यात् छत्रिन्यायेन पिबति इत्युपचर्यते। परमात्मप्रकरणं ह्येतत्, 'अन्यत्र धर्मादन्यत्राधर्मात्' इत्युपक्रमात्, तद्विषय एवात्रापि वाक्यशेषो भवति 'यः सेतुरीजानानामक्षरं ब्रह्म यत्परम्' इति 'गुहां प्रविष्टावात्मानौ हि' इत्यत्र चैतत् प्रप-ञ्चितम्। तस्मात् नास्ति वेद्यभेदः तस्माच्च विद्यैकत्वम्। अपि च त्रिष्वप्येतेषु वेदान्तेषु पौर्वापर्यालोचने परमात्म-विद्यैवावगम्यते तादात्म्यविवक्षयैव जीवोपादानं नार्थान्त-रविवक्षया, न च परमात्मविद्यायां भेदाभेदविचारावता-रोऽस्ति इत्युक्तम्। तस्मात् प्रपञ्चार्थ एवैष प्रयोगः, तस्मा-च्चाधिकधर्मोपसंहार इति॥

---

संहार इति पूर्वपक्षफलं, सिद्धान्ते तूपसंहारे ब्रह्मस्वरूपवाक्यार्थैक्या-दुपसंहार इति विवेकः। अस्तु वेद्यविद्यैक्यात् स्वरादिवदुपसंहारः इह तु वेद्यभेदान्नोपसंहार इति मन्त्रोदाहरणेन पूर्वपक्षः। नन्वेवं गुहाधिकरणे निरस्त इति चेत्, सत्यं, किन्तु पिबेत्यस्य तत्पार्थत्वाय स्वतः बहुवचनया च पानकर्त्रन्वययोरङ्गजीवौ पिबन्तौ प्राप्तौ, सुपर्णौ तु जीवेश्वरावप्यधिकारपक्षायां मन्त्रद्वयेऽपि द्विवचनबन्धुसाम्यादौत्पत्तिक-भिन्नविशिष्टतया तन्मन्त्रद्वयं मन्त्रभेदानुमानाभावात् प्रकरणानु-पपत्तेः। जीवानुवादेन,तथा तत्रापि मन्त्रद्वयं तात्पर्यमिति प्रत्यर्थमिदं मूलमिति भावः।

अन्तराभूतग्रामवत् स्वात्मनः ॥ ३५ ॥

'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः' इत्येवं द्वि: उषस्तिकहोलप्रश्नयोर्नैरन्तर्येण वाजसनेयिनः समामनन्ति। तत्र संशयः, विद्यैकत्वं वा स्याद्विद्यानानात्वं वेति । किं तावत् प्राप्तं विद्यानानात्वं इति, कुतः, अभ्याससामर्थ्यात्। अन्यथा ह्यन्यूनातिरिक्तार्थं द्विराम्नानमनर्थकमेव स्यात्। तस्मात् यथाभ्यासात् कर्मभेदः एवमभ्यासात् विद्याभेद इत्येवं प्राप्ते प्रत्याह, अन्तराम्नानाविशेषात् स्वात्मनो विद्यैकत्वमिति । सर्वान्तरो हि स्वात्मोभयत्राप्यविशिष्टः पृच्छ्यते प्रत्युच्यते च । न हि द्वावात्मानावेकस्मिन् देहे सर्वान्तरौ सम्भवतः, तदा ह्येकस्याञ्जसं सर्वान्तरत्वं कल्प्येत, एकस्य तु भूतग्रामवन्नैव सर्वान्तरत्वं स्यात्, यथा पञ्चभूतसमूहे देहे पृथिव्या आपोऽन्तराः अद्भ्यश्च तेजोऽन्तरमिति सत्यप्यापेक्षिके सर्वान्तरत्वे नैव मुख्यं सर्वान्तरत्वं भवति तद्वदिहापि इत्यर्थः । अथवा भूतग्रामवदिति श्रुत्यन्तरं

---

अन्तराभूतग्रामवत् स्वात्मनः । घटादिकं चिद्विषयत्वेनापरोक्षं, ब्रह्म तु साक्षादविषयत्वेनापरोक्षमिति, प्रथमार्थे पञ्चमी । अत्र चु... चात्मधर्मोऽपरोक्षत्वं ब्रह्मण्युक्तं, ब्रह्मधर्मः सर्वान्तरत्वमात्मन्युक्तं, इ... परोक्षं दृढीकृतं मन्तव्यं, तस्मै व्याचक्ष्वेत्युषस्तप्रश्ने याज्ञवल्क्येन अ... न्यादिमेकोऽदृष्ट्यादिसाक्षी प्रतिपादितः । द्वितीये 'यदेव साक्षादपरो- क्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्व' इति कहोलप्रश्नेऽशनाया- द्यतीतः प्रतिपादितः । तत्र ब्राह्मणद्वयेऽपि प्रश्नाद्वयात् सर्वान्तरत्व- व्यभिचाराच्च संशये मन्त्रयोर्वैरूप्यादस्तु विद्याभेदः, इह तु ब्राह्मणयोरैक्ये- क्येऽपि अभ्यासाद्विद्याभेदः, यजत्यभ्यासात् यागभेदवदिति प्रत्युदाहरणं

निदर्शयति यथा 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इत्यस्मिन् मन्त्रे समस्तेषु भूतग्रामेष्वेक एव सर्वान्तर आत्मा आम्नायते, एवमनयोरपि ब्राह्मणयोरित्यर्थः। तस्माद्वेद्यैकत्वाद्विद्यैकत्वम् ॥

## अन्यथाभेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥

अथ यदुक्तमनभ्युपगम्यमाने विद्याभेदे आम्नानभेदानुपपत्तिरिति तत्परिहर्तव्यं, अत्रोच्यते नायं दोषः, उपदेशान्तरवदुपपत्तेः। यथा ताण्डिनामुपनिषदि षष्ठे प्रपाठके 'स आत्मा तत्त्वमसि श्वेतकेतो' इति नवकृत्वोऽप्युपदेशेन विद्याभेदो भवति एवमिहापि भविष्यति। कथञ्च नवकृत्व उपदेशे विद्याभेदो भवति, उपक्रमोपसंहाराभ्यामेकार्थ्यावगमात्, 'भूय एव मा भगवान् विज्ञापयतु' इति चैकस्यैवार्थस्य पुनः पुनः प्रतिपिपादयिषितत्वेनोपक्षेपादाशङ्कान्तरनिराकरणेन चासकृदुपदेशोपपत्तेः, एवमिहापि प्रश्नरूपाभेदात्। 'अतोऽन्यदार्तम्' इति च परिसमाप्तिविशेषादुपक्रमोपसंहारौ तावदेकार्थविषयौ दृश्येते। यदेव 'साक्षादपरोक्षाद्ब्रह्म' इति द्वितीयेऽपि प्रश्ने एवकारं प्रयुञ्जानः पूर्व-

---

पूर्वपक्षः, तत्र भिन्नो भर्मा उपसंहारः फलं, सिद्धान्ते तूपसंहार इति विवेकः। द्वयोः सर्वान्तरत्वानुपपत्त्या तावद्ब्राह्मणयोरेकवस्तुपरत्वं सिद्धम्। तथा च वेद्यैक्यात् निर्गुणविद्यैक्येन विवादः ॥

अन्यथा। ननु विद्यैक्याङ्गीकारे अभ्यासानुपपत्तिरिति चेत्। उच्यते, स व्याभ्यासः कर्मभेदको यो निरर्थकः, इह तूर्णिमाङ्गणोताऽऽत्मन

प्रश्नगतमेवार्थमुत्तरवाक्यस्थमाख्यं दर्शयति । पूर्वस्मिंश्च ब्राह्म
कार्यकारणव्यतिरिक्तस्यात्मनः सद्भावः कथ्यते, उत्तरस्मिं
तस्यैवाशनायादिसंसारधर्मातीतत्वं विशेषः कथ्यते इत्येक
यतोपपत्तिः । तस्मादेका विद्येति ॥

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥

'तद्योऽहं योऽसौ सोऽसौ सोऽहम्' इत्यैतरेयिणः आदित्यपु
प्रकृत्य समामनन्ति, तथा जाबालाः 'त्वं वा अहमस्मि भग
देवते अहं वै त्वमसि' इति । तत्र संशयः किमिह व्यति
रेणोभयरूपा मतिः उत कर्तव्या एकरूपा वेति । एकरूपै
ति तावदाह, न ह्यत्रात्मन ईश्वरेणैकत्वं मुक्त्वाऽन्यत् किंचि
चिन्तयितव्यमस्ति, यदि चैवं चिन्तयितव्यमविशेषः परिक
ल्पेत संसारिण ईश्वरात्मत्वमीश्वरस्य च संसार्यात्म
मिति तत्र संसारिणस्तावदीश्वरात्मत्वे उत्कर्षो भवे
ईश्वरस्य तु संसार्यात्मत्वे निकर्षः कृतः स्यात्, तस्मा
दैकरूप्यमेव मतेः, व्यतिहाराम्नायस्तावदेकत्वदृढीकरणा

---

एवाशनायाद्युत्पन्नरूपविशेषकथनार्थत्वादभ्यासोऽन्यथासिद्धो न वि
भेदक इति समुदायार्थः ॥

व्यतिहारः । जीवेशयोर्मिथो विशेषणविशेष्यभावो व्यतिहारः,
श्रुतत्वात्, उत्कृष्टदृष्टिर्निकृष्टे कृता फलवतीति न्यायाच्च संशये
ईश्वरत्वमतिरेव कार्या उक्तन्यायात्, व्यतिहारश्रुतिस्तु तथा
दृढीकरणार्थत्वेनाभ्यासवदन्यथासिद्धेति दृष्टान्तेन पूर्वपक्षः ।
लाघवं फलं सिद्धान्ते तु श्रुत्यर्थवत्त्वमिति विवेकः । एकैव
मनुष्यो द्वारपालेनेत्यतः कतमोऽहं त्वमसि इति यथा सादृश्यं

इत्येवं प्राप्ते प्रत्याह, व्यतिहारः। अयमाध्यानायाम्नायते इतरवत्, यथेतरे गुणाः सर्वात्मत्वप्रभृतय आध्यानायाम्नायन्ते तद्वत्। तथा हि विशिंषन्ति समाम्नातार उभयोच्चारणेन 'त्वमहमस्म्यहञ्च त्वमसि' इति। तच्चोभयरूपायां मतौ कर्तव्यायामर्थवद्भवति, अन्यथा हीदं विशेषेणोभयाम्नानमनर्थकं स्यात्, एकेनैव कृतत्वात्। ननूभयाम्नानस्यार्थविशेषे परिकल्प्यमाने देवतायाः संसार्यात्मत्वापत्तेर्निकर्षः प्रसज्येतेत्युक्तम्। नैष दोषः, ऐकात्म्यस्यैवानेन प्रकारेणानुचिन्त्यमानत्वात्। नन्वेवं सति स एवैकत्वदृढीकारः आपद्येत न वयमेकत्वदृढीकारं वारयामः किं तर्हि व्यतिहारेणेव द्विरूपा मतिः कर्तव्या वचनप्रामाण्यात्, नैकरूपेत्येतावदुपपादयामः, फलतस्त्वेकत्वमपि दृढीभवति। यथा ध्यानार्थेऽपि सत्यकामत्वादिगुणोपदेशे तद्गुण ईश्वरः प्रसिध्यति तद्वत्। तस्मादयमाध्यातव्यो व्यतिहारः समाने च विषये उपसंहर्तव्य इति॥

---

उक्तदोषं स्मारयति। नन्विति। सन्दिग्धेऽर्थे न्यायः सावकाशः, इह तु श्रुतत्वादन्योन्यात्मत्वं ध्येयं, ब्रह्मणि च मनोमयत्वादिवत् जीवात्मत्वस्य ध्यानार्थं आरोपेऽपि निकर्षप्रसक्त्यभावादिति परिहरति। नैष दोष इति। ब्रह्मणि निकर्षं कृत्वा जीवतादात्म्यध्याने मदुक्तमेवागतमिति शङ्कते। नन्वेवमिति। मतेर्द्विरूपत्वं त्वदुक्तमस्माभिरिष्यते ध्यानपरं वाक्यमिदमेकत्वन्तु मानान्तराविरोधात् सिध्यति। समाधत्ते। न वयमिति। अहंग्रहोपास्तिमयं व्यतिहार उपसंहर्तव्य इत्याह। तस्मादिति।

## सैव हि सत्यादयः ॥ ८ ॥

'स यो हैतत् महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म' इत्यादि
वाजसनेयके सत्यविद्यां सनामाक्षरोपासनां विधायानन्तर
माम्नायते 'तद्यत् तत्सत्यमसौ स आदित्यो य एष एतस्मि
मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः" इत्यादि । त
संशयः, किं द्वे एते सत्यविद्ये किं वैकैवेति । द्वे इ
तावत् प्राप्तं, भेदेन हि फलसम्बन्धो भवति "जयतीमांल्ल
कान्" इति पुरस्तात्, "हन्ति पाप्मानं जहाति च" इत्यु
परिष्टात्, प्रकृताकर्षणं तूपास्यैकत्वादितिएवं प्राप्ते ब्रूमः
एकैवेयं सत्यविद्येति । कुतः, "तद्यत् तत्सत्यम्" इति
कृताकर्षणात् । ननु विद्याभेदेऽपि प्रकृताकर्षणमुपास्यैकत्वा

...................................................................

सैव हि सत्यादयः । स यः कश्चिदधिकारी महद्व्यापकं यक्षं पू
भौतिकेषु प्रथमजमेतत् सच्च तच्चेति सत्यं ब्रह्म हिरण्यगर्भा
वेदोपास्ते तस्य लोकजयः फलमित्यर्थः । सत्यमिति नामाक्षरं
त्यमिति, तत्र प्रथमोक्तमक्षरं सत्यं, मध्यस्थमक्षरमनृतं,
यतः सत्येन संपुटितत्वात् सत्यप्रायमेव भवतीति नामाक्षरो
सना सत्यविद्याङ्गत्वेनोक्ता । यत् पूर्वं प्रकृतं हृदयाख्यं तत् संप्रकृ
यक्षेत्यादिगुणकं, सोऽसावादित्यमण्डलेऽक्षिणि च पुरुषत्वाकार
त्यहमिति च नामद्वयज्ञानात् पापक्षयः फलमित्यर्थः । अत्र पूर्वो
त्तरवाक्ययोः फलभेदश्रुतेः प्रकृताकर्षणाच्च संशयमाह । तदेति ।
पूर्वपक्षे गुणानां व्यवस्थयानुष्ठानं, सिद्धान्ते त्वनुष्ठानैक्यमिति मत्वा
यथा जीवेशयोरन्योऽन्यात्मत्वं प्रतिश्रुतिभेदात् वैरूप्यश्रुतं,
फलश्रुतिभेदात् विद्याभेद इति दृष्टान्तेन पूर्वपक्षयति । द्वे इति ।
विशेष्यब्रह्ममात्राकर्षणमयुक्तं, तद्यत्तदिति सर्वनामभिः पूर्वोक्तगुण
शिष्टं ब्रह्म व्याकृष्यादित्याक्षिस्थानादिगुणविधानात्, तथा च
क्यादेव विद्यैक्यसिद्धिरिति सिद्धान्तयति । एकैवेति । यथा दहरा

दुपपद्यत इत्युक्तं, नैतदेवं यत्र हि विस्पष्टात् कारणान्तरा-द्विद्याभेदः प्रतीयते तत्रैतदेवं स्यात्, अत्र तूभयथासम्भवे तद्यत् तत्सत्यमिति प्रकृताकर्षणात् पूर्वविद्यासम्बन्धमेव सत्याद्यु-त्तरवाक्यं कथ्यत इत्येकविद्यात्वनिश्चयः। यत्पुनरुक्तं फला-न्तरश्रवणात् विद्यान्तरमिति। अत्रोच्यते, तस्योपनिषद-हरहमिति चाङ्गान्तरोपदेशस्य स्तावकत्वमिदं फलान्तर-श्रवणमित्यदोषः। अपि चार्थवादादेव फले कल्पयितव्ये सति विद्यैकत्वे चावयवेषु श्रूयमाणानि बहून्यपि फलान्यवयवि-न्यामेव विद्यायामुपसंहर्तव्यानि भवन्ति, तस्मात् सैवेयमेका सत्यविद्या तेन तेन विशेषेणोपेताऽऽम्नायत इत्यतः सर्व एव सत्यादयो गुणा एकस्मिन् प्रयोगे उपसंहर्तव्याः। केचि-त् पुनरस्मिन् सूत्रे इदं वाजसनेयकमक्ष्यादित्यपुरुषविषयं वाक्यं, छान्दोग्ये च 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' 'अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते'

---

शाण्डिल्यविद्ययोर्मनोमयत्वाद्यभिज्ञानबालं तथात्र नेत्याह। नैतदिति। कारणान्तरं प्रकरणभेदादिकम्। एवं विद्याभेदेऽप्येतद्रूपाकर्षणं स्यात् यत्र तूभयथासम्भवे विद्यैक्यनानात्वसंशये तत्र किम्, प्राक्प्रत्यैक्यमानात् विद्यैक्यनिश्चय इत्यक्षरार्थः। अत्रत्यपदार्थस्य रूपैक्यात् विद्यैक्यात् वर्गसिद्धिश्च फलभेदापवादः। अङ्गे फलश्रुतेः श्रुतिमात्रतया फल-भेदानिश्चिरित्याह। यत्पुनरित्यादिना। किञ्च यत्र प्रधानविद्यायै-काम इति फलं श्रुतं, तत्र प्रधानफलेनैवाङ्गानां फलाकाङ्क्षानिवृत्तेरङ्गे फलश्रुतेः स्तुतिमात्रत्वं, इह तु प्रथमजं ब्रह्म वेदेति प्रधान-विद्यायां विभिन्नत्वं लोकजयफलसाध्यत्वेनाप्यभिन्नरूपस्याङ्गस्य फलश्रुतेः स्तुतित्वमुक्तम्। वस्तुतस्तु प्रधानविद्यायामेव कामपदाभावादा निष्फल-त्वादेव फले कल्पनीये सति प्रधाने तदङ्गे वा यत्किञ्चित् फलं श्रुतं

इत्युदाहृत्य सैवेयमध्यादित्यपुरुषविषया विद्योभयत्रै-केति कृत्वा सत्यादिगुणान् वाजसनेयिभ्यः छन्दोगा-नामुपसंहार्यान्मन्यन्ते, तन्न साधु लक्ष्यते। छान्दोग्ये हि कर्मसम्बन्धिनीयमुद्गीथव्यपाश्रया विद्या विज्ञायते,तत्र आ-दिमध्यावसानेषु कर्मसम्बन्धिचिह्नानि भवन्ति 'इयमेवर्ग-ग्निः साम' इत्युपक्रमे 'तस्य ऋक् च साम च गेष्णौ तस्माद् उद्गीथः' इति मध्ये 'य एवं विद्वान् साम गायति' इत्यु-पसंहारे,नैवं वाजसनेयके किञ्चित् कर्मसम्बन्धि चिह्नमस्ति। तत्र प्रक्रमभेदात् विद्याभेदे सति गुणव्यवस्थैव युक्तेति।

## कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥

'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरो-ऽस्मिन्नन्तराकाशः' इति प्रस्तुत्य छन्दोगा अधीयते 'एष आत्मा-ऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः स-त्यकामः सत्यसङ्कल्पः' इत्यादि,तथा वाजसनेयिनः 'स वा एष

तस्य सर्वस्यापि श्रुतत्वाविशेषात् ज्ञातेष्टिफलन्यायेन सर्वविद्यैकवाक्य-त्वसङ्गमात् फलभेदोऽस्तीति इत्याह। अपि चेति। सूत्रं योजयति। तस्मादिति। एकदेशिव्याख्यामुद्भाव्य दूषयति। केचिदित्यादिना। छान्दोग्ये कर्माङ्गोद्गीथे हिरण्मयपुरुषदृष्टिरित्यत्र लिङ्गमाह। तत्रेति। पृथिव्यग्न्यात्मना दृष्टे ऋक्सामे गेष्णौ, तस्मादृक्सामगेष्णत्वात् पुरुष उद्गीथ इत्येवं विद्वानुद्गाता कर्मफलसमृद्धिसमर्थ इति श्रुत्यर्थः। बृह-द्विद्या तु न कर्माङ्गमित्याह। नैवमिति। अक्ष्यादित्यगतः सत्य-हिरण्यगर्भविद्ययोरभेदोऽस्य गुणोपसंहार इत्यर्थः।

कामादीतरत्र। सगुणनिर्गुणविद्ययोः श्रुताः सत्यकामादयो धर्मास्त-यो मिथ उपसंहर्तव्या न वेत्युपसंहारस्य फलभावाभावाभ्यां सं-

महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी' इत्यादि, तत्र विद्यैकत्वं परस्परगुणोपयोगश्च किं वा नेति संशये विद्यैकत्वमिति, तत्रेदमुच्यते। कामादीति। सत्यकामादीत्यर्थः। यथा देवदत्तो दत्तः सत्यभामा भामेति। यदेतच्छान्दोग्ये हृदयाकाशस्य सत्यकामत्वादिगुणजातमुपलभ्यते तदितरत्र वाजसनेयके'स वा एष महानज आत्मा'इत्यत्र सम्बध्येत। यच्च वाजसनेयके वशित्वाद्युपलभ्यते तदपीतरत्र छान्दोग्ये'एष आत्माऽपहतपाप्मा' इत्यत्र सम्बध्येत, कुतः आयतनादिसामान्यात्। समानं ह्युभयत्राऽपि हृदयमायतनं समानश्च वेद्य ईश्वरः समानश्च तस्य सेतुत्वं लोकासम्भेदप्रयोजनमित्येवमादि बहुतरं सामान्यं दृश्यते। ननु विशेषोऽपि दृश्यते छान्दोग्ये हृदयाकाशस्य गुणयोगो वाजसनेयके त्वाकाशस्थस्य ब्रह्मणः, इति। न, 'दहर उत्तरेभ्यः' इत्यत्र [ब्र०सू० १।३।१४] छान्दोग्येऽप्याकाशशब्दं ब्रह्मैवेति प्रतिष्ठापितत्वात्। अयन्त्वत्र विद्यते विशेषः, सगुणा हि ब्रह्मविद्या छान्दोग्ये उपदिश्यते "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्" इत्यात्मवत् कामानामपि वेद्यत्वश्र-

---

ते सत्यविद्यायाः एकत्वाद्गुणसाङ्कर्येऽप्यत्र विद्ययोः सगुणनिर्गुणरूपभेदेन भेदात् निर्गुणविद्यायां गुणोपसंहारस्य फलाभावान्नानुपसंहार इति पक्षिरेव प्राप्ते सिद्धान्तयति। तदेवमित्यादिना। एवं विद्याभेदे स्फुटे कथं गुणोपसंहारजल्पनाह। गुणवत्स्विति। भिन्नविद्यास्थानामपि गुणानामायतनादिसाम्येन निर्गुणस्तुत्यै बुद्धिस्थानां स्तुत्यर्थमुपसंहारो युक्तः, ध्यानस्तुतिप्रकरणयोः साकाङ्क्षितत्वात्, यत्र क्वचित् दृष्टगुणैः स्तुतेः कर्तुं

वणात्, वाजसनेयके तु निर्गुणमेव परं ब्रह्मोपदिश्यमा
दृश्यते "अत ऊर्ध्वं विमोक्षायैव ब्रूह्यसङ्गो ह्ययं पुरुषः" इ
त्यादिप्रश्नप्रतिवचनसमन्वयात्, वशित्वादि तु तत्स्तुत्यर्थ
मेव गुणजातं वाजसनेयके सङ्कीर्त्यते। तथा चोपरिष्टा
'स एष नेति नेत्यात्मा' इत्यादिना निर्गुणमेव ब्रह्मोपसं
रति। गुणवतस्तु ब्रह्मण एकत्वादिविभूतिप्रदर्शनायायं गुणो
पसंहारः सूचितो नोपासनायेति द्रष्टव्यम् ॥

## आदरादलोपः ॥ ४० ॥

छान्दोग्ये वैश्वानरविद्यां प्रकृत्य श्रूयते 'तद्यद्भक्तं प्र
समागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात् तां जुहु
यात् प्राणाय स्वाहा' इति। तत्र पञ्च प्राणाहुतयो विहि
ताः, तासु च परस्तादग्निहोत्रशब्दः प्रयुक्तः 'य एतदेवं वि
द्वानग्निहोत्रं जुहोति' इति,

"यथेह क्षुधिता बाला मातरं पर्युपासते।
एवं सर्वाणि भूतान्यग्निहोत्रमुपासते"॥ इति च।

तत्रेदं विचार्यते किं भोजनलोपे लोपः प्राणाग्निहोत्र

---

योऽश्रवणात्। यद्यपि सगुणब्रह्मप्रकरणादिषु निर्गुणस्य गुणा अनुवृ
एव तथापि नोपसंहारोऽत्रैवार्थ्यं निर्गुणज्ञापकत्वेन श्रुतगुणानाम
प्यध्येयत्वमिति शङ्कानिरासेनान्यपदार्थत्वादित्यनवद्यम् ॥

आदरादलोपः। अत्र यज्ञाग्निहोत्रशब्दाभ्यां संशयमाह। तत्रेदं
विचार्यत इति। वैश्वानरोपासकेनातिथिभोजनात् प्राक् कार्यं
सिद्धाग्निहोत्रं प्राणाग्निहोत्रमिति विचारात् पादसङ्गतिः। पूर्वपक्षे भोजनलोपेऽपि

स्योतालोपः इति, 'तद्यद्भक्तं' इति भक्तागमनसंयोगात्, भक्तागमनस्य च भोजनार्थत्वात् भोजनलोपे लोपः प्राणाग्निहोत्रस्येति, एवं प्राप्ते न लुप्येत इति तावदाह, कस्मात् आदरात्। तथा हि वैश्वानरविद्यायामेव जाबालानां श्रुतिः "पूर्वोऽतिथिभ्योऽश्नीयात् यथा वै स्वयमहुत्वाऽग्निहोत्रं परस्य जुहुयादेवं तत्" इत्यतिथिभोजनस्य प्राथम्यं निन्दित्वा स्वामिभोजनं प्रथमं प्रापयन्ती प्राणाग्निहोत्रे आदरं करोति। या हि न प्राथम्यलोपं सहते नतरां सा प्राथम्यवतोऽग्निहोत्रस्य लोपं सहेतेति मन्यते। ननु भोजनार्थभक्तागमनसंयोगात् भोजनलोपे लोपः प्रापितः। न, तस्य द्रव्यविशेषविधानार्थत्वात्। प्राकृतेऽग्निहोत्रे पयःप्रभृतीनां द्रव्याणां नियतत्वादिहाप्यग्निहोत्रशब्दात् कौण्डपायिनामयनवत् तद्धर्मप्राप्तौ सत्यां भक्तद्रव्यकतागुणविशेषविधानार्थमिदं वाक्यं तद्यद्भक्तमिति, अतो गुणलोपे च न मुख्यस्येत्येवं प्राप्ते भोजनलोपेऽप्यद्भिरन्येन वा द्रव्येणाविरुद्धेन प्रतिनिधानन्यायेन प्राणाग्निहोत्रस्यानुष्ठानमित्यत उत्तरं पठति॥

---

द्रव्यान्तरेण प्राणाग्निहोत्रानुष्ठानं, सिद्धान्ते तल्लोप इति भेदः। ननु यद्भक्तमिति यच्छब्देन भोजनार्थमभक्तमनूद्य तद्धोमीयमिति होमसंयोगविधानादालेपभोजनलोपे तदा भक्ताग्निहोत्रलोप इति सिद्धान्ती शङ्कते। तदर्थादिति। निर्गुणस्योपात्तलोपेऽपि स्तुत्यर्थगुणस्य दीन भोजनलोपेऽपि प्राणाग्निहोत्रस्यादरेण स्तुतिनिर्वाहार्थमलोप इति दृष्टान्तेन पूर्वपक्षसूत्रेण परिहरति। एवं प्राप्त इति। एवं तदिति स्वयं प्राणाग्निहोत्रभक्तस्यातिथीनां तत्करणमित्यर्थः।

## उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥

उपस्थिते भोजने अतस्तस्मादेव भोजनद्रव्यात् प्रथमो-पनिपतितात् प्राणाग्निहोत्रं निर्वर्तयितव्यं, कस्मात् तद्व-नात् । तथा हि "तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयं" इति सिद्धवद्भक्तोपनिपातपरामर्शेन परार्थद्रव्यसाध्या प्राणाहुतीनां विदधाति, ता अप्रयोजकलक्षणापन्नाः स कथं भोजनलोपे द्रव्यान्तरं प्रतिनिधापयेयुः । न चात्र प्रा-कृताग्निहोत्रधर्मप्राप्तिरस्ति, कुण्डपायिनामयने हि 'मास-मग्निहोत्रं जुह्वति' इति विध्युद्देशगतोऽग्निहोत्रशब्दस्त-द्भावं विधापयेदिति युक्ता तद्धर्मप्राप्तिः, इह पुनरर्थवादग-तोऽग्निहोत्रशब्दो न तद्भावं विधापयितुमर्हति । तद्धर्म-प्राप्तौ चाभ्युपगम्यमानायामग्न्युद्धरणादयोऽपि प्राप्येरन्

---

उक्तं स्मारयित्वा परिहरति । न चेत्यादिना । यथा कुण्डपायि-नामयने मासाग्निहोत्रे अग्निहोत्रशब्दाद्गौणमित्यग्निहोत्रधर्माणां तत् द्रव्यादीनां प्राप्तिस्तथेहापि प्राणाहुतीष्वग्निहोत्रशब्दात् पयोद्र-व्यादीनामुत्सर्गतः प्राप्तौ सत्यां भोजनार्थभक्तद्रव्यविधिनापवादः अतः, भक्तविधेरपवादार्थत्वात् भोजनलोपे भक्ताख्यगुणस्याङ्गस्य लोपेऽपि स्याग्निहोत्रस्य लोपः, अपवादाभावे उत्सर्गप्राप्तपयआदिना तस्य त्तिसम्भवादिति प्राप्तमित्यर्थः । 'गुणलोपेन मुख्यस्य' इति त्वम् । आधाने सति यजमानेष्टयस्याग्नये पवमानाय पुरोडाश कपालं निर्वपेदिति विधिः तत्तद्रूपेणाग्निहोत्रहवन्या निर्वपेदिति दर्शपूर्णमासाङ्गत्वेन विहिताग्निहोत्रहवन्या प्राप्तया आधानकाले चाग्निहोत्राभावात् तस्या गुणभूताया लोपे मुख्यस्य निर्वापस्य न लोप इत्यर्थः । आरब्धनित्यादिकर्मणोऽप्य हे यत्नाच्छ्रुतद्रव्यालाभे प्रतिनिहितद्रव्येणापि कर्म कर्तव्यमिति ।

चास्ति सम्भवः अभ्युद्धरणं तावद्धोमाधिकरणभावाय, न चायमग्नौ होमः भोजनार्थताव्याघातप्रसङ्गात्, भोजनार्थोपनीतद्रव्यसम्बन्धाच्चास्य एवैष होमः। तथा च जाबालश्रुतिः 'पूर्वोऽतिथिभ्योऽश्नीयात्' इति आस्याधारामेवेमां होमनिर्वृत्तिं दर्शयति। अत एव चेहापि साम्पादिकान्येवाग्निहोत्राङ्गानि दर्शयति 'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' इति। वेदिश्रुतिश्चात्र स्थण्डिलमात्रोपलक्षणार्था द्रष्टव्या, मुख्याग्निहोत्रे वेद्यभावात् तदङ्गानामिह सम्पिपादयिषितत्वात्। भोजनेनैव च कृतकालेन संयोगान्नाग्निहोत्रकालावरोधसम्भवः, एवमन्येऽप्युपस्थानादयो धर्माः केचित् कथञ्चिद्-

---

निमित्तन्यायः। सिद्धान्तयति। उपस्थित इति। तद्वचनादिति, तद्धोमीयमिति तच्छब्देन भोजनार्थं सिद्धभक्तमाश्रित्य होमविधानादित्यर्थः। सिद्धवद्भक्तोपनिपातः प्रकृतभक्तागमनं, तस्य तच्छब्देन परामर्शो नेत्यर्थः। आश्रित्य विहिताङ्गानामाश्रयलोपे लोप एव न द्रव्यान्तराक्षेपकत्वं, यथा क्रतुप्रयुक्तापप्रणयनाश्रितस्य गोदोहनस्य क्रतुलोपे लोपो न स्वाश्रयान्तरप्रयोजकत्वं तद्वदिति फलितमाह। ना इति यदुक्तमग्निहोत्रवद् द्रव्यान्तरप्राप्तिरिति तत्राह। न चास्मिन्निति। तद्भावो नित्याग्निहोमसादृश्यं अर्थवादस्य शब्दस्य स्तुतित्वेनोपपत्तेरित्यर्थः। धर्मप्रापकत्वे दोषमाह। तद्धर्मप्राप्तौ चेति। अत एवेति तद्धर्माप्रभावादेवेत्यर्थः। प्राप्तौ सम्पादनं वृथा स्यादिति भावः। यद्यग्निहोत्राङ्गानि सम्पाद्यन्ते चेत् कथं तदनङ्गं वेदिरत्र सम्पाद्यते तत्राह। वेदिश्रुतिरिति। मुख्याग्निहोत्रस्याप्युद्धरणवत् सायंप्रातःकालद्वयस्यापि न प्राप्तिरित्याह।

रुध्यन्ते। तस्मात् भोजनपक्ष एवैते मन्त्रद्रव्यदेवतासंयो-गात् पञ्च होमा निर्वर्तयितव्याः। यस्त्वादरदर्शनवचनं तत् भोजनपक्षे प्राथम्यविधानार्थं, न ह्यस्ति वचनस्यातिभारः, न त्वनेनास्य नित्यता शक्यते दर्शयितुं, तस्मात् भोजनलोपे लोप एव प्राणाग्निहोत्रस्येति ॥

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् ॥ ४२ ॥

सन्ति कर्माङ्गव्यपाश्रयाणि विज्ञानानि 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्येवमादीनि, किन्तानि नित्यान्येव कर्मसु पर्णमयीत्वादिवत् उतानित्यानि गोदोहनादिवदिति विचारयामः। किं तावत् प्राप्तं नित्यानीति। कुतः प्रयोगवचनपरिग्रहात्, अनारभ्याधीतान्यपि ह्येतान्युद्गीथादि...

........................................

भोजनेनेति। उपस्थानपरिसंख्यादयोऽग्न्यभावात् न प्राप्नुवन्ति इत्याह। एवमिति। यस्मात् तद्धर्मप्राप्तप्रभावस्तस्मात् भोजनद्रव्येणैव होमः इत्युपसंहारे प्राणाय स्वाहा इत्यादयो मताः। ननु स्वामिभोजनोत्तरकालत्वं श्रुत्यादिविहितं कथं पूर्वोऽतिथिभ्योऽश्नीयादिति ... याच्यते तत्राह। न ह्यस्तीति। उपासकान्यस्वामिविषयस्तत्कालविज्ञानमित्यर्थः। न त्विति प्राथम्यमात्रेऽर्थः। प्राणोपासकस्य भोजनप्राथम्यार्थतयादरस्यान्यथासिद्धौ फलितमाह। तस्मादिति ॥

तन्निर्धारणा। उभयथा दृष्टान्तदर्शनात् संशयमाह। किमानीति। यथाऽनारभ्याधीतपर्णमयीत्वं जुह्वद्वारा क्रत्वङ्गतया कर्मसु नित्यं प्राप्यते, तथाङ्गाश्रितोपासनान्युद्गीथादिद्वाराऽङ्गतया नित्यानि उत ... फलार्थत्वादनित्यानि ... प्रयुज्यते यथा वा पञ्चरूपाश्रयं ...

रेण क्रतुसम्बन्धात् क्रतुप्रयोगवचनेनाङ्गान्तरवत् संस्पृश्यन्ते। यत्त्वेषां स्ववाक्येषु फलश्रवणं "आपयिता ह वै कामानां भवति" इत्यादि, तद्वर्तमानापदेशरूपत्वादर्थवादमात्रं अपापश्लोकश्रवणादिवत् न फलप्रधानं, तस्मात् 'यथा यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इत्येवमादीनामप्रकरणपठितानामपि जुह्वादिद्वारेण क्रतुप्रवेशात् स्वप्रकरणपठितवन्नित्यता, एवमुद्गीथाद्युपासनानामपीत्येवं प्राप्ते ब्रूमः। तन्निर्धारणानियम इति। यान्येतान्युद्गीथादिकर्मगुणयाथात्म्यनिर्धारणानि "रसतम आप्तिः समृद्धिर्मुख्यः प्राण आदित्यः" इत्येवमादीनि नैतानि नित्यवत् कर्मसु नियम्येरन्, कुतः, तद्दृष्टेः। तथा ह्यनियतत्वमेवैवंजातीय-

---

कर्मसमृद्ध्यादिफलकत्वादुपासनान्यनङ्गत्वेनानित्यानीति संशयार्थः, पूर्वपक्षे उपासनानां प्रयोगनित्यत्वं, सिद्धान्ते त्वनित्यत्वमिति फलभेदः। अनित्यभोजनाश्रयप्राणाग्निहोत्रस्यानित्यत्वं निरस्य कर्माङ्गोपास्तीनां नित्यत्वमिति प्रत्युदाहरणदृष्टान्तेन पूर्वपक्षमाह। किं तावदिति। उपासनानि कर्माङ्गानि अफलत्वे सति कर्माङ्गाश्रितत्वात् पर्णत्वादिवत्, तथा चाङ्गतया प्रयोगविधिना नित्येन प्रयुज्येरन् इति प्राप्ते सिद्धान्तसूत्रं व्याचष्टे। यानीत्यादिना। उद्गीथादयः कर्मणां गुणाः अङ्गानि तेषां याथात्म्यं रसतमत्वादिकं तन्निर्धारणान्युपासनानि यानि तानि कर्मसु नित्यपर्णमयीत्वादिवन्न नियम्येरन्नित्यर्थः। एषां कर्माङ्गत्वे तद्धीनस्याविदुषः कर्म न स्यादङ्गलोपात्, तथा चाविदुषोऽपि कर्मकर्तृत्वश्रुतिलिङ्गैरङ्गत्वानुमानबाध इत्याह। तद्दृष्टेरिति। तस्यानियमस्य दर्शनादित्यर्थः। तां चेदविद्वान् प्रस्तोष्यसि प्रधानत्वं पतिष्यतीति चाक्रायणेनार्त्विज्ये आगतानामविद्वत्त्वादनुपासकानामपि कर्मप्रयोगोऽस्तीत्याह। प्रस्तावादीति। उपास्तीनां कर्मफलात् पृथक् फलवत्त्वेन कर्माङ्गत्वाभि-भावमाह। अपि चेति। तेनोभावित्यत्र यश्चैतदक्षरमेवं रसतमत्वादि-

कानां दर्शयति श्रुतिः "तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद" इत्यविदुषोऽपि क्रियाभ्यनुज्ञानात् प्रस्तावादिदेवतानविज्ञानविहीनानामपि प्रस्तोत्रादीनां याजनाध्यवसायदर्शनात् प्रस्तोतुर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि तां चेदविद्वानुद्गास्यसि तां चेदविद्वान् प्रतिहरिष्यसि' इति। अपि चैवंजातीयकस्य कर्मव्यपाश्रयस्य विज्ञानस्य पृथगेव कर्मणः फलमुपलभ्यते, कर्मफलसिद्धप्रतिबन्धतत्समृद्धिरतिशयविशेषः कश्चित् "तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति। तत्र नाना त्विति विद्वदविद्वत्प्रयोगयोः पृथक्करणात् वीर्यवत्

---

रूपेण वेदोपास्ते यश्च न वेद तावुभौ कर्म कुरुत एव यद्यपि तथापि विद्याविद्ययोर्नानात्वं भिन्नफलत्वम्। दृष्टं हि मणिविक्रये ज्ञानाज्ञानवणिग्व्यापारयोः फलवैषम्यं, तस्माद्यदेव कर्म विद्ययोद्गीथादृश्रद्धयाऽऽत्मनुष्ठोपनिषदा रहस्यदेवताध्यानेन करोति तदेव फलातिशयवदित्यर्थः। कर्मणो वीर्यवत्त्वं नाम फलवत्त्वं विद्यायास्तदपि गम्यमानं विद्याया अनङ्गत्वे लिङ्गमिति भावः। नास्ति ...कादिदृष्ट्युपासनेषु कर्मसमृद्ध्यतिरिक्तलोकादिफलश्रुतेश्च ...त्याह। तथेति। अस्मै विदुषे कल्पन्ते भोगाय समर्थाभूमिकर्तारो लोकाः आवृता अभस्तनार्थेत्यर्थः। तथा हि गुणवाद ...फलश्रुतेरर्थवादमात्रत्वे स्तुतिलक्षणा स्यात्, सा न युक्ता, ...फलपरत्वसम्भवात्। प्रयाजानुयाजकर्मणान्तु प्रकरणादुपकारलाभात् आश्रव्याभिभूतफलश्रुतेरगत्या स्तुतिलक्षणत्वं यद्यपि ...मयीत्यादीनामङ्गत्वबोधकं प्रकरणं नास्ति तथापि तेषु फलश्रुतेः ...

रमिति च तरप्प्रत्ययप्रयोगात् विद्याविहीनमपि कर्म वीर्यवदिति गम्यते, तच्चानित्यत्वे विद्याया उपपद्यते, नित्यत्वे तु कथं तद्विहीनं कर्म वीर्यवदभ्यनुज्ञायेत, सर्वाङ्गोपसंहारे हि वीर्यवत् कर्मेति स्थितिः। तथा लोकसामान्यादिषु प्रतिनियतानि प्रत्युपासनं फलानि शिष्यन्ते "कल्पन्ते ह्यस्मै लोका ऊर्ध्वाश्चावृत्ताश्च" इत्येवमादीनि। न चेदं फलश्रवणमर्थवादमात्रं युक्तं प्रतिपत्तुं, तथा हि गुणवाद आपद्येत, फलोपदेशे तु मुख्यवादोपपत्तिः, प्रयाजादिषु त्वितिकर्तव्यताकाङ्क्षस्य क्रतोः प्रकृतत्वात्तादर्थ्ये सति युक्तं फलश्रुतेरर्थवादत्वं, तथाऽनारभ्याधीतेष्वपि पर्णमयीत्वादिषु, नहि पर्णमयीत्वादीनामक्रियात्मकानामाश्रयमन्तरेण फलसम्बन्धोऽवकल्पते, गोदोहनादीनां हि प्रकृताप्प्रणयनाद्याश्रयलाभादुपपन्नः फलविधिः। तथा वैल्वादीनामपि प्रकृत-

तेषामक्रियात्वे क्रियासम्बन्धं विना फलहेतुत्वानुपपत्तेरतत्तेषां फलार्थक्रियापेक्षितत्वात् क्रतोश्च जुहूप्रकृतिद्रव्याकाङ्क्षितत्वात् पर्णमयी जुहूरित्यादिवाक्येनैव प्रकृतिद्रव्यार्पकेण जुहूद्वारा सन्निहितक्रत्वङ्गत्वविधेर्युक्तं फलश्रुतेरर्थवादत्वमिति भावः। अक्रियात्मकगोदोहनादेरपि फलश्रुतिरर्थवादः स्यादत आह। गोदोहनादीनां हीति। यदाऽपःप्रणयनेन पशुकामस्य सतो गोदोहनेन प्रणयनं कुर्यात्तस्येति फलार्थविधिरेव नार्थवादः, गोदोहनादेः प्रणयनाकाङ्क्षितत्वेनाङ्गत्वाभावात्, चमसेन निराकाङ्क्षक्रियासम्बन्धितया स्वफलसाधकत्वसम्भवात्। तथा खादिरत्वेन निराकाङ्क्षमङ्गं यूपमाश्रित्य वैल्वमब्राह्मकामस्य खादिरं वीर्यकामस्येति फलार्थविधिरेवायं। पर्णमयीत्वादिषु फलविधिः कं न स्यादत आह। न त्विति। एवंविधो यूपादिसन्निधिराकाङ्क्ष इत्यर्थः। जुह्वादेराश्रय इत्यत आह। वाक्येनेति। जुह्वाः प्रकृतिः इत्या-

यूपाद्याश्रयलाभादुपपन्नः फलविधिः, न तु पर्णमयीत्वादि-
ष्वेवंविधः कश्चिदाश्रयः प्रकृतोऽस्ति, वाक्येनैव तु जुह्वाद्या-
श्रयतां विवक्षित्वा फले च विधिं विवक्षितो वाक्यभेदः स्यात्।
उपासनानान्तु क्रियात्मकत्वात् विशिष्टविधानोपपत्तेरुद्गी-
थाद्याश्रयाणां फलविधानं न विरुध्यते, तस्मात् यथा क्रत्वा-
श्रयाण्यपि गोदोहनादीनि फलसंयोगादनित्यान्येवमुद्गी-
थाद्युपासनान्यपि इति द्रष्टव्यम्। अत एव च कल्पसूत्र-
कारा नैवंजातीयकान्युपासनानि क्रतुषु कल्पयाञ्चक्रुः।

## प्रदानवदेव तदुक्तम् ॥ ४३ ॥

वाजसनेयके "वदिष्याम्येवाहमिति वाग्दध्रे" इत्यत्राध्यात्मं
वागादीनां प्राणः श्रेष्ठोऽवधारितोऽधिदैवमग्न्यादीनां वायुः
तथा छान्दोग्ये 'वायुर्वाव संवर्गः" इत्यत्राधिदैवमग्न्यादीनां
वायुः संवर्गोऽवधारितः 'प्राणो वाव संवर्गः' इत्यत्राध्यात्मं
वागादीनां प्राणः। तत्र संशयः, किं पृथगिमौ वायुप्राणा-

मेक्षितत्वादनेनैव वाक्येन क्रत्वङ्गतया जुहूप्रकृतिद्रव्यसम्बन्धो वि-
पर्याचिराकाङ्क्षं जुहूमाश्रित्य तस्यैव प्रकृतिः इत्यस्य फलसंयोगो वि-
इति वाक्यभेद इत्यर्थः। पर्णतादिवैलक्षण्यमुपासनानामाह। उ-
सनानां त्विति। स्वयं क्रियात्वादिकर्यविशिष्टत्वेन विधानोपपत्तिरित्य-
तस्मादिति अङ्गत्वापेदकमानाभावादित्यर्थः। अत एवेति अनङ्ग-
टेपेत्यर्थः। तस्मादङ्गोपास्त्यभावेऽपि कर्माधिकार इति सिद्धम्।

प्रदानवदेव तदुक्तम्। वायुप्राणयोर्भेदाभेदवाक्याभ्यां संशया-
नर्वेति। अस्तु कर्माङ्गानां तत्सम्बन्धोपास्तीनाञ्च फलभेदाद्भिन्न-
त्वात्पृथक्प्रयोगभेदः, इह तु वायुप्राणयोः स्वरूपभेदात् तद् ध्यान-

वुपगन्तव्यौ स्यातामुतापृथग्वेति । अपृथगिति तावत् प्राप्तं, तत्त्वाभेदात्, न ह्यभिन्ने तत्त्वे पृथगनुचिन्तनं न्याय्यम् । दर्शयति च श्रुतिरध्यात्ममधिदैवतञ्च तत्त्वाभेदं 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्यारभ्य । तथा "अत एते सर्व एव समाः सर्वेऽनन्ताः" इत्याध्यात्मिकानां प्राणानामाधिदैविकीं विभूतिमात्मभूतां दर्शयति । तथान्यत्रापि तत्र तत्राध्यात्ममधिदैवञ्च बहुधा तत्त्वाभेददर्शनं भवति । क्वचिच्च 'यः प्राणः स वायुः' इति विस्पष्टमेव वायुं प्राणञ्चैकीकरोति । तथोदाहृतेऽपि वाजसनेयिब्राह्मणे "यतश्चोदेति सूर्यः" इत्यस्मिन्नुपसंहारश्लोके 'प्राणाद्वा एष उदेति प्राणेऽस्तमेति' इति प्राणेनैवोपसंहरन्नेकत्वं दर्शयति । "तस्मादेकमेव व्रतञ्चरेत् प्राणञ्चैवापानञ्च" इति च प्राणव्रतेनैवैकेनोपसंह-

---

प्राप्तिलक्षणफलैक्याच्च ध्यानप्रयोगैक्यमिति पूर्वपक्षयति । अपृथगिति । 'अग्निर्वाग् भूत्वा' इत्यारभ्य 'वायुः प्राणो भूत्वा नासिके प्राविशत्' इत्यभेदं दर्शयतीत्यर्थः । 'यतश्चोदेति सूर्य्योऽस्तं यत्र' इति मन्त्रे सूत्रात्मकवायुर्वाच्यः वायुस्थाने प्राणः । प्रदेशैकत्वं तयोर्दर्शयतीत्याह । तथेति । किञ्च यदि वायुप्राणयोः पृथक् विधानं स्यात् तर्हि ध्यानाङ्गव्रतभेदोऽपि स्यात् इह तु प्राणापाननिरोधात्मकव्रतैक्यश्रुतेर्ध्यानैक्यमित्याह । तस्मादिति, व्रतैक्यस्य प्रशस्तत्वादित्यर्थः । किञ्च वायुप्राणौ संवर्गौ भेदेनोपक्रम्य परस्तादात्मशेषे संवर्गभेदैक्यश्रुतेः प्रयोगैक्यमित्याह । तथेति । महात्मनः इति द्वितीयाबहुवचनम् । चतुरश्चतुःसंख्याकान् अग्निसूर्योदकचन्द्रानपरांश्च वाक्चक्षुःश्रोत्रमनोरूपानेको देवः, कः प्रजापतिः, जगार जीर्णवानुपसंहृतवानित्यर्थः । न भवति भेदमिति शेषः । यथा 'अग्निहोत्रं जुहोति' इत्युक्ताग्निहोत्रस्यैव दधितण्डुलादिगुणभेदेन सायं प्रातःकालभेदेन प्रयोगभेदस्तथा 'अन्नादो भवति य एवं वेद' इत्यु-

रन्ने तदेव द्रढयति । तथा छान्दोग्येऽपि "परस्तान्महात्मनश्चतुरो देव एकः कः सो जगार" इत्येकमेव संवर्गं गमयति न ब्रवीत्येक एवैषाञ्चतुर्णां संवर्गोऽपरोऽपरेषां, तस्मादपृथक्त्वमुपगमनस्येत्येवं प्राप्ते ब्रूमः । पृथगेव वायुप्राणावुपगन्तव्याविति, कस्मात् पृथगुपदेशात् । ध्यानार्थो ह्ययमध्यात्माधिदैवविभागोपदेशः सोऽसत्याध्यानपृथक्त्वेऽनर्थक एव स्यात् । नन्वुक्तमपृथगनुचिन्तनं तत्त्वाभेदादिति, नैष दोषः, तत्त्वाभेदेऽप्यवस्थाभेदादुपदेशभेदवशेनानुचिन्तनभेदोपपत्तेः । श्लोकोपन्यासस्य च तत्त्वाभेदाभिप्रायेणाप्युपपद्यमानस्य पूर्वोदितध्येयभेदनिराकरणसामर्थ्याभावात् । "स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुः" इति चोपमानोपमेयकरणात् । एतेन व्रतोपन्यासो व्याख्यातः । एकमेव व्रतमिति चैवकारो वागादिव्रतनिवर्तनेन प्राणव्रतप्रतिपत्त्यर्थः, भग्नव्रतानि हि वागादीन्युक्तानि 'तानि मृत्युः श्रमो भूत्वोपयेमे" इति श्रुतेः न वायुव्रतनि-

---

त्वज्ञायाः संसर्गविद्याया एकत्वेऽप्युक्तविशिष्टवायुप्राणानाम्गुणभेदात् प्रयोगभेद इत्युत्सूत्रं सिद्धान्तयति । पृथगेवेति । 'तौ वा एतौ द्वौ संवर्गौ' इत्युपास्यभेदवाक्यस्य प्रयोगभेदपरत्वाद्वाक्यादेव भेदसिद्धिरित्यर्थः । पूर्वपक्षयुक्तमनूद्य प्रत्याह । नन्वक्तमित्यादिना । उपास्यतया प्रधानभूतसंसर्गगुणविशिष्टोपास्यभेदवाक्यविरोधादनुपास्यवायुतत्त्वैक्यवचनं प्रयोगैक्यप्रापकमिति भावः । स्तुत्यैक्याद्यात्मयोर्ध्यानभेदाभिप्रायेण प्राणावुक्तौ । ततोऽध्यात्माधिदैवावस्थाभेदेनोक्तस्य ध्येयभेदस्य निरासे 'यतश्चोदेति' इति श्लोकस्य न शक्तिरित्याह । श्लोकेति । कस्मादर्थे लिङ्गमाह । सामर्थ्येति । श्लोकोपन्यासवद्व्रतैक्योपन्यासोऽपि तत्त्वाभेदाभिप्रायेणेत्याह । एतेनेति । नन्वेवकाराद्वायुव्रतनिवृत्तेः प्राण-

त्यर्थः। 'अथातो व्रतमीमांसा' इति प्रस्तुत्य तुल्यवद्वायुप्राणयोरभग्नव्रतत्वस्य निर्धारितत्वात्। "एकमेव व्रतञ्चरेत्" इति चोक्त्वा 'तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' इति वायुप्राप्तिं फलं ब्रुवन् वायुव्रतमनिवर्तितं दर्शयति, देवता ह्यत्र वायुः स्यात् अपरिच्छिन्नात्मत्वस्य प्रेप्सितत्वात् पुरस्तात् प्रयोगाच्च, "सैषानस्तमिता देवता यद्वायुः" इति। तथा "तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु" इति भेदेन व्यपदिशति "ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम्" इति च भेदेनैवोपसंहरति, तस्मात् पृथगेवोपगमनं, प्रदानवत् यथा "इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रियाधिराजायेन्द्राय स्वराज्ञे" इत्यस्यां

---

एवैको ध्येयो भातीत्यत आह। एकमेवेति। वदनदर्शनादीनि वाक्चक्षुरादीनां व्रतानि श्रमरूपमृत्युना भग्नानीत्युक्त्वा प्राणस्याभग्नव्रतत्वं निर्धारितं, तथा ज्वलनतापादीन्यग्न्यादित्यादीनां व्रतानि भग्नानीत्युक्त्वा वायोरभग्नव्रतत्वं निर्धारितं, "स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुर्म्लोचन्ति ह्यन्या देवता न वायुः सैषानस्तमिता देवता यद्वायुः" इति श्रुतेः, अतो भग्नव्रतनिरासार्थ एवकारो न वायुव्रतनिवृत्त्यर्थ इत्यर्थः। व्रतैक्यार्थे लिङ्गमाह। एकमिति। उकारस्त्वर्थः तेन व्रतेन वायोः सायुज्यं समानदेहत्वं सलोकताञ्च जयतीत्यर्थः। अन्यत्र वायुप्राप्तिर्न श्रुतेत्यत आह। देवतेति। तस्मात् तत्त्वाभेददृष्ट्या व्रतैक्यमिति स्थितं, सम्प्रति पूर्वोक्तं पृथगुपदेशं विवृणोति। तथा तौ वा इति। सौत्रं दृष्टान्तं व्याचष्टे। प्रदानवदिति। त्रयः पुरोडाशा अस्याः सन्तीति त्रिपुरोडाशिन्येष्टिस्तस्यां किं सह प्रदानमुत भेदेनेति सन्देहे पूर्वपक्षमाह। सर्वेभ्य इति। सर्वेषां देवानामाभिमुख्येन प्रापयन् आवर्तयति वषट्करोति, अन्यं वषट्कारं वषट्कारात् पृथग्देवभागमित्यर्थः। यदा सर्वदेवार्थं युगपत्प्रदानं कार्यमिति तदा छेत्तृत्वं वषट्कारमिति। अध्यर्धं त्वावृत्तं हि एकार्थमवदानं

त्रिपुरोडाशिन्यामिष्ट्यां "सर्वेषामभिगमयन्नवद्यत्यच्छंबट्‌का-रम्" इत्यतो वचनादिन्द्राभेदाच्च सहप्रदानाशङ्कायां राजा-दिगुणभेदात् याज्यानुवाक्याव्यत्यासविधानाच्च यथान्यास-मेव देवतापृथक्त्वात् प्रदानपृथक्त्वं भवति, एवं तत्त्वभेदेऽपि आध्येयांशपृथक्त्वादाध्यानपृथक्त्वमित्यर्थः । तदुक्तं सूत्रे "नाना वा देवता पृथग्ज्ञानात्" इति [जै० सू०] । तत्र द्रव्यदेवताभेदात् यागभेदोऽपि विद्यते नैवमिह विद्याभेदोऽस्ति उपक्रमोपसंहाराभ्यामध्यात्माधिदैवोपदिष्टैकविद्या-विधानप्रतीतेः, विद्यैक्येऽपि त्वध्यात्माधिदैवभेदात् प्रवृत्ति-भेदो भवति, अग्निहोत्र इव सायंप्रातःकालभेदादित्यभि-प्रेत्य प्रदानवदित्युक्तम् ॥

---

र्हविषि शेषो योगानर्हस्तया यथा स्यादिति भावः । एवं सहप्रदान-श्रुतेरैक्याच्च पुरोडाशानां सहप्रक्षेपे प्राप्ते पृथक्प्रक्षेप इति सि-द्धान्तमाह । राजेति । राजाधिराजस्वराजगुणभेदेन विशिष्टदेवता-भेदादित्यर्थः । किञ्चाध्वर्युणा यजेति प्रैषानन्तरं होतीयो मन्त्रः स-सा याज्या, अनुब्रूहि इति प्रैषानन्तरमन्त्रः पुरोऽनुवाक्येति भेदोऽस्ति, तत्रास्यामिष्टौ प्रथमपुरोडाशप्रदाने या क्लृप्ता याज्या सा द्वितीयप्रदाने पुरोऽनुवाक्या, या च पूर्वमनुवाक्या सा पश्चात् याज्येति व्यत्यासमन्-त्रेति श्रुत्या विधानात्, यथास्थितं प्रक्षेपपृथक्त्वमित्याह । याज्येति । सङ्कर्षो देवताकाण्डम् । या शब्दोऽवधारणे, नानैव देवता राजादिगुण-भेदेन भेदागमादिति सूत्रार्थः । दृष्टान्ते देवताभेदात् कर्मभेदवत् विद्या-भेदः स्यात् इत्यत आह । तत्र त्विति । कर्मोत्पत्तिवाक्यस्थदेवताभेदः कर्मभेदे हेतुः, इह त्वन्नादो भवति य एवं वेदेत्युत्पत्तावेकत्वेन प्राप्त-विद्यायाः पश्चात् स्वतनायुप्राणभेदो न भेदकः, अग्निहोत्रस्येव द्रव्या-दिद्रव्यभेद इत्यर्थः । तर्हि केनांशेन प्रदानस्य दृष्टान्तत्वमित्यत आह । विद्यैक्येऽपीति । अवस्थाभेदो देवताभेदः प्रयोगभेदश्चेत्यंशेनायं दृष्टा-न्त इत्यर्थः ॥

## लिङ्गभूयस्त्वात्, तद्धि बलीयस्तदपि ॥४४॥

वाजसनेयिनोऽग्निरहस्ये 'नैव वा इदमग्रे सदासीत्' इत्यस्मिन् ब्राह्मणे मनोऽधिकृत्याधीयते 'षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान् मनोमयान्मनश्चितः' इत्यादि, तथैव 'वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः' कर्मचितोऽग्निचितः इति पृथगग्नीनामनन्ति साम्पादिकान्, तेषु संशयः किमेते मनश्चिदादयः क्रियानुप्रवेशिनः तच्छेषभूता उत स्वतन्त्राः केवलविद्यात्मका इति। तत्र प्रकरणात् क्रियानुप्रवेशे प्राप्ते स्वातन्त्र्यं तावत् प्रतिजानीते, लिङ्गभूयस्त्वादिति। भूयांसि हि लिङ्गान्यस्मिन् ब्राह्मणे केवलविद्यात्मकत्वमेषामुपो-

---

लिङ्गभूयस्त्वात्। उत्पत्तेः प्राक् 'इदं सर्वं नैव सदासीन्नासदासीदित्युपक्रम्य मनःसृष्टिमुक्त्वा' मन आत्मानमैक्षत तेनैक्षणपूर्वकमग्नीनपश्यत्' इति मनोऽधिकृत्य पठन्ति इत्यर्थः। पुरुषायुषः क्रतुमयत्वपर्यन्तर्गतैः षट्त्रिंशत्सहस्रैरहोरात्रैरवच्छिन्नतया मनोवृत्तीनामसङ्ख्येयानामपि षट्त्रिंशत्सहस्रत्वं। याभिरिष्टकात्वेन कल्पिताभिर्मनसैव सम्पादिता अग्नयो मनश्चितस्तानर्कान् पूज्यान्मनोमयान्मनोवृत्तिषु सम्पादितानात्मनः स्वस्य सर्वात्मत्वेन मनोऽपश्यत्, तथा वाक्प्राणादयोऽपि स्ववृत्तिरूपानग्नीनपश्यन्नित्याह। तथैवेति। प्राणो घ्राणं, कर्मेन्द्रियेण हस्तादिना चितः कर्मचितः, अग्निचितस्तु कृतपूर्वका अपि चयनप्रकरणात् क्रतुप्राः तेऽग्नयः क्रत्वर्था उत प्राधान्यज्ञापकलिङ्गादिभूयस्त्वात् पुरुषार्था वेति संशयमाह। तेष्विति। केवलविद्यात्मकाः क्रियादिकं विना भावनामया इत्यर्थः। एकप्रयोगासम्भवाद्वाक्प्राणयोरपि प्रयोगभेदोऽस्तु, इह तु मनश्चिदाद्यग्नीनां प्रकरणात् कर्माङ्गत्वेनैकप्रयोगत्वमिति प्राप्तस्य सिद्धान्तमुपक्रमते। तत्रेत्यादिना। पूर्वपक्षे भावनाग्नीनां क्रत्वङ्गत्वमिष्टं तेषां

द्व लयन्ति दृश्यन्ते 'तद्यत् किञ्चेमानि भूतानि मनसा सङ्कल्पयन्ति तेषामेव सा कृतिरिति तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति चैवं जातीयकानि। तद्धि लिङ्गं प्रकरणाद्बलीयः, तदप्युक्तं पूर्वस्मिन् काण्डे 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति [जै०सू०] ॥

## पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥४५॥

नैतद्युक्तं स्वतन्त्रा एतेऽग्नयोऽनन्यशेषभूता इति पूर्वस्य क्रियामयस्याग्नेः प्रकरणात् तद्विषय एवायं विकल्पविशेषोपदेशः स्यान्न स्वतन्त्रः। ननु प्रकरणाल्लिङ्गं बलीयः सत्यमेव तत्, लिङ्गमपि त्वेवं जातीयकं न प्रकरणात् बलीयः

क्रियाग्निना विकल्पः समुच्चयो वास्तु विद्वान्ते पुरुषार्थत्वमिति ... तत्र सर्वप्राणिमनोवृत्तिभिर्मया सदाग्नयः चीयन्त इति ध्यानदार्ढ्यं ... सर्वभूतानि यत्किञ्चित् मनसा सङ्कल्पयन्ति तेषामेवाग्नीनां सा कृतिः करणमित्येकं लिङ्गं, क्रियाङ्गस्य यत्किञ्चित्करणेन विद्यदर्शनादित्यर्थः। तद्यदिति। एवंविदे स्वपते जाग्रतेऽपि तदीयाग्नीन् भूतानि सर्वदा चिन्वन्ति इति लिङ्गान्तरं, क्रियाङ्गस्य चोदितकालादन्यस्य सर्वैरनुष्ठीयमानत्वायोगादित्यर्थः। ... लिङ्गं एवंजातीयकपदेनोक्तम् ॥

एवं सिद्धान्तमुपक्रम्य पूर्वपक्षयति। पूर्वेति। पूर्वस्येष्टकाभिश्चितस्य इत्युक्तस्य स एष लिष्टकाग्निरिति सन्निहितस्याय विकल्पविशेषोपदेशः सङ्कल्पमयत्वाख्यप्रकारभेदोपदेशः क्रियाग्निवत् ... काग्न्योऽप्यङ्गमिति यावत्, किं विप्रियायस्य लिङ्गं प्रकरणाद्बलीयः

भवति, अन्यार्थदर्शनं ह्येतत् साम्पादिकाग्निप्रशंसारूपत्वात्। अन्यार्थदर्शनञ्चासत्यामन्यस्यां प्राप्तौ गुणवादेनाप्युपपद्यमानं न प्रकरणं बाधितुमुत्सहते। तस्मात् साम्पादिका अप्येतेऽग्नयः प्रकरणात् क्रियानुप्रवेशिन एव स्युः, मानसवत्, यथा द्वादशरात्रस्य दशमेऽहन्यविवाक्ये पृथिव्या पात्रेण समुद्रस्य सोमस्य प्रजापतये देवतायै गृह्यमाणस्य ग्रहणासादनहवनाहरणोपह्वानभक्षणानि मानसान्येव आम्नायन्ते, स च मानसोऽपि ग्रहकल्पः क्रियाप्रकरणात् क्रियाशेष एव भवति, एवमयमप्यग्निकल्प इत्यर्थः।

---

अर्थवादस्य बाध्यत्वमङ्गीकरोति। सत्यमिति। न द्वितीय इत्याह। लिङ्गमिति। मानसाग्निविध्यर्थवादस्थलिङ्गानां स्वार्थप्रापकाणामभावात् दौर्बल्यमित्यर्थः। सूत्रस्थक्रियापदं व्याचष्टे। तस्मादिति। ननु अक्रियारूपाग्नीनां ध्यानमयानां कथं क्रियाङ्गत्वं तत्राह। मानसवदिति। द्वादशाहस्याद्यन्त्याहर्द्वयं त्यक्त्वा मध्यस्थदशरात्रस्यैव रात्रादिषु प्रसक्तत्वं, तत्कर्माणामेव तेष्वतिदेशात्तस्य मध्यन्दिनानुष्ठेयस्य सदोन्तैरनुष्ठीयमानत्वात्, दशरात्रस्य दशमेऽहन्यविवाक्याख्येऽहनि मानसग्रहः श्रूयते, अनया त्वा पात्रेण समुद्रं रसया प्राजापत्यं मनोग्रहं गृह्णाति इति अनया रसया पृथिव्या पात्रेण समुद्रं त्वा प्रजापतिदेवताकं मनोग्रहं गृह्णते इति ग्रहः सोमरसः, मनसा रसत्वेन भावितमध्वर्युर्गृह्णाति इत्यर्थः। अत एवर्त्विजां ध्यायितया विधिवाक्योच्चारणाभावादविवाक्यसंज्ञा। [illegible] ग्रहणं नाम सोमपात्रस्योपादानं, गृहीतस्य स्वस्थाने स्थापनमासादनं, सोमस्य होमो हवनं हुतशेषादानं, आहरणं शेषभक्षणार्थमृत्विजां मिथोऽनुज्ञाकरणमुपह्वानं, ततो भक्षणमित्येतानि मानसान्येवेत्यर्थः। स च मानसो ग्रहो द्वादशाहादन्तरे [illegible] द्वादशाहसन्निधिपाठात् नाङ्गान्तरं किन्तु प्रकरणादविवाक्यस्याङ्गमिति सिद्धान्तमाह। स चेति। कल्पः कल्पनाप्रकारः॥

अतिदेशाच्च ॥ ४६ ॥

अतिदेशश्चैषामग्नीनां क्रियानुप्रवेशमुपोद्बलयति 'षट्त्रिंशत सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान् यावानसौ पूर्वः' इति। सति हि सामान्येऽतिदेशः प्रवर्तते तत्र पूर्वेणेष्टकाचितेन क्रियानुप्रवेशिनाऽग्निना साम्पादिकानग्नीनतिदिशन् क्रियानुप्रवेशमेवैषां द्योतयति।

विद्यैव तु निर्धारणात् ॥ ४७ ॥

तुशब्दः पक्षं व्यावर्तति। विद्यात्मका एवैते स्वतन्त्रा मनश्चिदादयोऽग्नयः स्युः न क्रियाशेषभूताः, तथा हि निर्धारयति 'ते हैते विद्याचित एव' इति 'विद्यया हैवैत एवंविदश्चिता भवन्ति' इति च।

दर्शनाच्च ॥ ४८ ॥

दृश्यते चैषां स्वातन्त्र्ये लिङ्गं तत्पुरस्तादृर्शितं 'लिङ्गभूयस्त्वात्" इत्यत्र [वि० सू० ३।३।४४]। ननु लिङ्गमप्यसत्यामन्यस्यां प्राप्तावसाधकं कस्यचिदर्थस्येत्यपास्य तत्प्रकरणसामर्थ्यात् क्रियाशेषत्वमध्यवसितमिति, अत उत्तरं पठति।

---

केचित्त्वत्र भाष्ये दशरात्रशब्दो विज्ञानिपरः, तत्रापि दशमेऽहनि ... विवाक्यसंस्के मानसपक्षातिदेशप्राप्ततथाङ्गत्वादित्याहुः। ... दादीनां क्रियाङ्गत्वे प्रकरणमुक्त्वा लिङ्गमाह। अतिदेशश्चेति। क्रियाङ्गत्वसाधकसादृश्यादतिदेश इत्यर्थः॥

सिद्धान्तमाह। विद्येति॥

श्रुतिलिङ्गवाक्यैः प्रकरणं बाध्यमिति सूत्रतात्पर्यार्थः॥

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥

नैवं प्रकरणसामर्थ्यात् क्रियाशेषत्वमध्यवसाय स्वातन्त्र्यपक्षो बाधितव्यः, श्रुत्यादिबलीयस्त्वात् । बलीयांसि हि प्रकरणात् श्रुतिलिङ्गवाक्यानीति स्थितं श्रुतिलिङ्गसूत्रे, तानि चेह स्वातन्त्र्यपक्षं साधयन्ति दृश्यन्ते, कथं, श्रुतिस्तावत् 'ते हैते विद्याचित एव' इति, तथा लिङ्गं 'सर्व्वदा सर्व्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति, तथा वाक्यमपि 'हैवैत एवंविदश्चिता भवन्ति' इति, 'विद्याचित एव' इति हि सावधारणेयं श्रुतिः क्रियानुप्रवेशेऽमीषामभ्युपगम्यमाने बाधिता स्यात् । नन्वबाह्यसाधनत्वाभिप्रायमिदमवधारणं भविष्यति । नेत्युच्यते, तदभिप्रायतायां हि विद्याचित इतीयता विद्यास्वरूपसङ्कीर्तनेनैव लब्धत्वादनर्थकमिदमवधारणं भवेत्, स्वरूपमेव ह्येषामबाह्यसाधनत्वमिति । अबाह्यसाधनत्वेऽपि मानसग्रहवत् क्रियानुप्रवेशशङ्कायां तन्निवृत्तिफलमवधारणमर्थवत् भविष्यति । तथा 'स्वपते जाग्रते चैवंविदे सर्व्वदा सर्व्वाणि भूतान्येतानग्नीन् चिन्वन्ति' इति सातत्यदर्शनमेतेषां स्वातन्त्र्ये एव कल्पते । यथा साम्पादिके वाक्प्राणमये अग्निहोत्रे 'प्राणं तदा वाचि जुहोति वाचं तदा प्राणे जुहोति'

---

तत्रावधारणश्रुतेरन्यथासिद्धिं शङ्कते । नन्वबाह्येति । विद्याचित इतिपदेनैवाबाह्यसाधनत्वस्य लब्धत्वादवधारणं व्यर्थमित्याह । नेति । तर्हि कथमस्यार्थवत्त्वं तत्राह । अबाह्येति । लिङ्गं व्यनक्ति । तथेति । अग्नीनां सर्वकालव्याप्तत्वमानसत्वे दृष्टान्तमाह । यथेति । तदा ध्यानकाल इत्यर्थः । होमे यथा सातत्यमुच्यते तद्दर्शनं सातत्यदर्शनमित्यन्वयः । यदुक्तमयं मादस्यार्थाद्वयं दर्शयति तत्र सर्वदा

इत्युक्त्वा उच्यते ‘एते अनन्ते अमृते आहुती जाग्रच्च स्वपं
सततं जुहोति” इति। तद्वत् क्रियानुप्रवेशे तु क्रियाप्र
स्याऽल्पकालत्वात् न सातत्येनैषां प्रयोगः कल्प्येत। न चे
मर्थवादमात्रमिति न्याय्यं, यत्र हि विस्पष्टो विधायको लि
ङ्गादिरुपलभ्यते युक्तं तत्र सङ्कीर्तनमात्रस्यार्थवादत्वं, इह
विस्पष्टविध्यन्तरानुपलब्धेः सङ्कीर्तनादेवैषां विज्ञानानां वि
धानं कल्पनीयं, तच्च यथासङ्कीर्तनमेव कल्पयितुं शक्य
इति सातत्यदर्शनात् तथाभूतमेव कल्प्यते, ततश्च साम
देषां स्वातन्त्र्यसिद्धिः। एतेन “तद्यत् किञ्चेमानि भूतानि
मनसा सङ्कल्पयन्ति तेषामेव सा कृतिः” इत्यादि व्याख्या
तथा वाक्यमपि “एवंविदे” इति पुरुषविशेषसम्बन्धमेवैषा
चक्षाणं न क्रतुसम्बन्धं कृष्यते। तस्मात् स्वातन्त्र्यपक्ष ए
ज्यायानिति॥

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत्
## दृष्टश्च तदुक्तम्॥ ५०॥

इतश्च प्रकरणमुपमृद्य स्वातन्त्र्यं मनश्चिदादीनां प्रति
त्तव्यं यत्क्रियावयवान्मनआदिव्यापारेष्वनुबध्नाति “ते मन
वाधीयन्त मनसैवाचीयन्त मनसैव ग्रहा अगृह्यन्त मनसा

---

सर्वभूतानि यदयं मनोभिश्चिन्वन्ति इति व्याख्येदमपूर्वार्थं तथा वि
कल्पनात्, तथा विधिवाक्यस्थत्वाल्लिङ्गं प्रकरणाद्बलवदित्याह। न चे
मित्यादिना। एतेनेति विधित्वेनेत्यर्थः। वाक्यं विवृणोति। तथैव
सम्पदुपास्त्यै मनोवृत्तिषु क्रियाङ्गानां योजनमनुबन्धः श्रुता
तदन्यथानुपपत्त्याग्नीनां पुरुषार्थत्वं क्रत्वर्थत्वेऽङ्गानां सिद्धत्वेन

ऽस्तुवन् मनसाऽशंसन् यत्किञ्चित् यज्ञे कर्म क्रियते यत्कि-ञ्चित् यज्ञीयं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु, मनोमयमक्रियत इत्यादिना । सम्पत्फलो ह्ययमनुबन्धः, न च प्रत्यक्षाः क्रियावयवाः सन्तः सम्पदा लिप्सितव्याः । न चात्रोद्गीथाद्युपासनवत् क्रियाङ्गसम्बन्धात् तदनुप्रवेशित्वमाशङ्कितव्यं श्रुतिवैरूप्यात्, न ह्यत्र क्रियाङ्गं किञ्चिदादाय तस्मिन्नदो नामाध्यसितव्यमिति वदति, षट्त्रिंशतन्तु सहस्राणि मनोवृत्तिभेदानादाय तेष्वग्नित्वं ग्रहादींश्च कल्पयति पुरुषयज्ञादिवत् । सङ्ख्या चेयं पुरुषायुषस्याहःसु दृष्टा सती तत्सम्बन्धिनीषु मनोवृत्तिष्वारोप्यत इति द्रष्टव्यं, एवमनुबन्धात् स्वातन्त्र्यं मनश्चिदादीनां । आदिशब्दादतिदेशाद्यपि यथासम्भवं योजयितव्यं, तथा हि 'तेषामेकैक एव तावान्

---

दनानुपपत्तेरित्याह । इतरथेत्यादिना । ते अग्नयः, आधीयन्त तेषामाधानं मनसैव कुर्यादित्यर्थः । कालस्यावच्छेदस्य नियमादचीयन्त इष्टकावत्तद्वा इत्यर्थः। ग्रहाः पात्राणि, अस्तुवन् उद्गातारः स्तुवन्ति अशंसन् होतारः शंसन्ति, किं बहुना यत्किञ्चित् यज्ञे कर्मोपादुपकारकं यज्ञीयं यज्ञस्वरूपोत्पादकञ्च तत्सर्वं मनोमयं कुर्यादिति त्वर्थः । वृत्तित्वाग्निध्यानस्य क्रियानङ्गत्वेऽप्युद्गीथध्यानक्रियाङ्गाश्रितत्वं स्यादित्याह । न चात्रोद्गीथेति । अङ्गावबद्धश्रुतितोऽस्याः श्रुतेर्वैरूप्यं स्फुटयति । न ह्यत्रेति । अनङ्गवृत्तिषु साङ्गमात्रसम्पादनं पुरुषस्य यज्ञावयवत्वं स्वतन्त्रमित्यर्थः ; अनादरार्थोऽतिदेशो न भवति किन्तु विकल्पार्थं इत्यत आह । न चेति । एकस्मिन् आत्मनि परोक्षसाधनयोर्विकल्पो भवति यथा व्रीहियवयोरत्र तु क्रियाग्निध्यानाग्नीनां साध्यभेदान् न विकल्प इत्यर्थः । अत एव समुच्चयोऽपि निरस्तः । यदुक्तं क्रियाङ्गसामान्येनातिदेश इति तत्रेत्याह । यत्तु इति । सूत्रे बहुवचनार्थमाह । भुव्यादीनि चेति ।

यावानसौ पूर्व्वः' इति क्रियामयस्यागेर्माहात्म्यं ज्ञानमय
नामिकैकस्यातिदिशन् क्रियायामनादरं दर्शयति। न च
त्वेव क्रियासम्बन्धे विकल्पः पूर्वेषोत्तरेषामिति शक्यते वक्तु
न हि येन व्यापारेणाहवनीयधारणादिना पूर्व्वः क्रिया
उपकरोति तेनोत्तरे उपकर्तुं शक्नुवन्ति। यत्तु पूर्व्वपक्षे
तिदेश उपोद्बलक इत्युक्तं सति हि सामान्येऽतिदेशः प्र
र्तेत इति, तदसत्पक्षेऽप्यग्नित्वसामान्येनातिदेशसम्भव
मित्युक्तं। अस्ति हि साम्पादिकानामप्यग्नीनामग्नित्वमि
श्रुत्यादीनि च कारणानि दर्शितानि। एवमनुबन्धादि
कारणेभ्यः स्वातन्त्र्यं मनश्चिदादीनां प्रज्ञान्तरपृथक्त्ववत्
था प्रज्ञान्तराणि शाण्डिल्यविद्याप्रभृतीनि स्वेन स्वेनानुब

· · · · · · · · · · · · · · · · · · · · · · · · · · · · · · · · · · · · · · · · · · · · · · ·

अनुबन्धातिदेशश्रुतिलिङ्गवाक्येभ्य इत्यर्थः। एवमित्यर्थः इति हे
मनश्चिदादीनां स्वातन्त्र्ये क्रियाप्रकरणादुत्कर्षः स्यादित्याशङ्क्य
इत्याह। इष्यत इति। एकादशे चिन्तितं [मा० वै० न्याय
११। ४। २] 'राजा स्वाराज्यकामो राजसूयेन यजेत' इति प्र
त्यावेष्टिनाम काचिदिष्टिराम्नाता। 'आग्नेयोऽष्टाकपालो हिरण्यं
दक्षिणा, बार्हस्पत्यश्चरुरिति पृष्ठी दक्षिणा, ऐन्द्रमेकादशकपालं
वृषभो दक्षिणा' इति, तस्यां वर्णभेदेन प्रयोगभेदः श्रूयते
ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाभिघार
येत् यदि वैश्यो वैश्वदेवं चरुं मध्ये निदध्यात् यदि राजन्यस्तदैन्द्र
म्याग्नेयैन्द्रं पुरो डाशयोर्मध्ये बार्हस्पत्यं चरुं निदध्यादित्यर्थः। तत्र
अन्येयादिचरुषु अङ्गानां तन्त्रेण प्रयोगो भाति मध्ये निधानविधा
प्रयोगभेदमध्ये निधानायोगादेतयाचाद्यकाम याजयेदित्य
च तन्त्रप्रयोगो राजसूयक्रतुगताध्यायामध्यादप्रकामवर्णत्रयकर्त्तृकाय
देशो भेदः न तु क्रत्वन्तर्गतायां। ननु किमत्र नियामकं प्रक

नानुबध्यमानानि पृथगेव कर्मभ्यः प्रकरणान्तरेभ्यश्च स्वतन्त्राणि भवन्तीर्यमिति। दृष्टयावेष्टेः राजसूयप्रकरणपठितायाः प्रकरणादुत्कर्षः, वर्णत्रयानुबन्धाद्राजयज्ञत्वाच्च राजसूयस्य। तदुक्तं प्रथमे काण्डे 'क्रत्वर्थायामिति चेत् न वर्णत्रयसंयोगात्' इति [जै॰ सू॰]॥

## न सामान्यादप्युपलब्धेर्मृत्युवत्, न हि लोकापत्तिः॥ ५१॥

यदुक्तं मानसवदिति तत्प्रत्युच्यते, न मानसग्रहसामान्यादपि मनश्चिदादीनां क्रियाशेषत्वं कल्प्यं, पूर्वोक्तेभ्यः श्रुत्यादिभ्यो हेतुभ्यः केवलपुरुषार्थत्वोपलब्धेः, न हि किञ्चित् कस्यचित् केनचित् सामान्यं न सम्भवति, न च तावता यथा स्वं वैषम्यं निवर्तते मृत्युवत्, यथा 'स वा एष एव मृत्युर्य एष एतस्मिन् मण्डले पुरुषः' इति 'अग्निर्वै मृत्युः' इति चाग्न्यादित्यपुरुषयोः समानेऽपि मृत्युशब्दप्रयोगे नात्यन्तसा-

मध्यवेष्टौ तत्र प्रयोगः किं न स्यादिति चेत्। न, वर्णत्रयसंयुक्तायां काम्यायामेव अङ्गतन्त्रैक्यसाधकस्य मध्ये निधानादिलिङ्गस्य सत्त्वात्तो लिङ्गैकवचनाभ्यां तन्त्रैक्ये सति हिरण्यादिका मिलितैव दक्षिणा देया, अन्यथा प्रयोगैक्यायोगात्। राजमात्रकर्तृकक्रत्वन्तर्गतेष्टौ तु वर्णत्रयसंयोगाभावात् मध्ये निधानादिलिङ्गं नास्ति, ततश्च तन्त्रैक्यसाधकाभावाद्दक्षिणाभेदेन तन्त्रभेदे कृत्स्नाङ्गानामावृत्तिरेव [illegible] सूत्रार्थः॥

अत्र चोक्तप्रयोगभेदस्य ज्ञात्यर्थं दायसम्भवं काम्येष्टौ च तदभावं वदताऽनेन सूत्रेण काम्येष्टेः क्रत्वर्थेष्टिविलक्षणत्वात् क्रतुप्रकरणादुत्कर्ष इति सूचितम्। स चोत्कर्षो युक्त एव, राजमात्रकर्तृकक्रतौ सूक्तौ वर्णत्रयकर्तृकेष्टेरनुष्ठानायोगादिति स्थितम्, तथा मनश्चिदादीनामुत्कर्ष इति भावः। एवं दृष्टान्तं विघटयति। न सामान्यादिति।

स्यापत्तिः, यथा च 'असौ वाव लोकोऽग्निर्गौतमाऽऽदित्य एव समित्' इत्यत्र न समिदादिसामान्याल्लोकस्याऽग्निवापत्तिस्तद्वत् ॥

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥५२॥

परस्तादपि 'अयं वाव लोक एषोऽग्निश्चितः' इत्येतस्मिन्ननन्तरे ब्राह्मणे ताद्विध्यं केवलविद्याविधित्वं शब्दस्य प्रयोजनं लभ्यते न शुद्धकर्माङ्गविधित्वं, तत्र हि—

'विद्यया तदारोहन्ति यत्र कामाः परागताः।
न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः' ॥

इत्यनेन श्लोकेन केवलं कर्म निन्दन् विद्यां च प्रशंसंस्तद्दर्शयति, तथा पुरस्तादपि 'यदेतन्मण्डलं तपति' इत्यस्मिन् ब्राह्मणे विद्याप्रधानत्वमेव लक्ष्यते 'सोऽमृतो भवति मृत्युर्यस्यात्मा भवति' इति विद्याफलेनैवोपसंहारात्, कर्मप्रधानता, तत्सामान्यादिहापि तथात्वं। भूयांसस्त्वग्न्यवयवाः सम्पादयितव्या विद्यायामित्येतस्मात् च कारणादग्निनानुबध्यते विद्या न कर्माङ्गत्वात्। तस्मात् मनश्चिदादीनां केवलविद्यात्मकत्वसिद्धिः ॥

---

क्रत्वर्थत्वपुरुषार्थत्वभेदेऽपि मानसत्वसामान्यं न विरुध्यते लिङ्गैरपि साम्यदर्शनादित्यर्थः ॥

किञ्च पूर्वोत्तरब्राह्मणयोः स्वतन्त्रविद्याविधानात् तन्मध्यस्थब्राह्मणस्य स्वतन्त्रविद्याविधिपरत्वमित्याह। परेण चेति। लिङ्गलोकदृष्टिविधानं स्वतन्त्रमुत्तरत्र गम्यते पूर्वत्र मण्डलपुरुषोपास्तनुसन्निधानमध्येऽपि मानसाग्नयः स्वतन्त्रा इत्यर्थः। तर्हि क्रियासह पाठः किमर्थमित्यत आह। भूयांसस्त्विति ॥

## एक आत्मनः शरीरे भावात् ॥ ५३ ॥

इह देहव्यतिरिक्तस्यात्मनः सद्भावः समर्थ्यते बन्धमोक्षाधिकारसिद्धये । न ह्यसति देहव्यतिरिक्ते आत्मनि परलोकफलाश्चोदना उपपद्येरन् कस्य वा ब्रह्मात्मत्वमुपदिश्येत । ननु शास्त्रप्रमुख एव प्रथमे पादे शास्त्रफलोपभोगयोग्यस्य देहव्यतिरिक्तस्यात्मनोऽस्तित्वमुक्तम् । सत्यमुक्तं भाष्यकृता न तु तत्रात्माऽस्तित्वे सूत्रमस्ति इह तु स्वयमेव सूत्रकृता तदस्तित्वमाक्षेपपुरःसरं प्रतिष्ठापितम् । इत एवाकृष्याचार्येण शबरस्वामिना प्रमाणलक्षणे वर्णितम् । अत एव च भगवतोपवर्षेण प्रथमे तन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्याम इत्युद्धारः कृतः । इह चेदं चोदनालक्षणेषूपासनेषु विचार्यमाणेष्वात्मास्तित्वं विचार्यते कृत्स्नशास्त्रशेषत्वप्रदर्शनाय । अपि च पूर्वस्मिन्नधिकरणे प्रक-

---

मन्त्रविद्यादीनां पुरुषार्थत्वमुक्तं तदयुक्तं देहातिरिक्तपुरुषाभावादित्याक्षिपति । एक आत्मनः शरीरे भावात् । सिद्धान्तफलमाह । बन्धेति । पूर्वपक्षे तु परलोकार्थकर्मसु मोक्षार्थविद्यायां च अप्रवृत्तिरिति व्यतिरेकमुखेन फलमाह । न ह्यसतीति । व्यतिरिक्तात्मविचारस्य पूर्वतन्त्रे कृतत्वात् पौनरुक्त्यमित्याशङ्क्य तत्रत्यविचारस्यापि इदमेव सूत्रं मूलं जैमिनिसूत्राभावादतः न पुनरुक्तिरित्याह । ननु शास्त्रेत्यादिना । 'यज्ञायुधी यजमानः स्वर्गं लोकमेति' इत्यादिवाक्यस्य भोक्तुरभावादप्रामाण्यप्राप्तावित्यादेकस्य भोक्तुर्विचारः कृत इत्यत्र वृत्तिकारवचनं लिङ्गमाह । अत एवेति । तत्र सूत्राभावादेवेत्यर्थः । उद्धार उपक्रमः । अस्याधिकरणस्यास्मिन् पादे प्रसङ्गसङ्गतिरित्याह । इह चेति । आत्माश्रितफलोपासनानिर्णयप्रसङ्गेन तदर्थं देहातिरिक्तात्मास्तित्वमुच्यते इत्यर्थः । एतत् सिद्धवत्कृत्य प्रथमसूत्रेऽथशब्देनाधि-

रणोत्कर्षाभ्युपगमेन मनश्चिदादीनां पुरुषार्थत्वं वर्णि-
कोऽसौ पुरुषो यदर्था एते मनश्चिदादय इत्यस्यां प्रसक्तौ
विद' देहव्यतिरिक्तस्यात्मनोऽस्तित्वमुच्यते तदस्तित्वाक्षेपार्थं
चेदमाद्यं सूत्रं, आक्षेपपूर्विका हि परिहारोक्तिर्विवक्षितेऽर्थे
स्थूणानिखननन्यायेन दृढां बुद्धिमुत्पादयेदिति । अत्रैके
देहमात्रात्मदर्शिनो लोकायतिका देहव्यतिरिक्तस्यात्मनोऽ-
भावं मन्यमानाः समस्तव्यस्तेषु बाह्येषु पृथिव्यादिष्वदृष्ट-
मपि चैतन्यं शरीराकारपरिणतेषु भूतेषु स्यादिति सम्भा-
वयन्तः तेभ्यश्चैतन्यं मदशक्तिवद्विज्ञानं चैतन्यविशिष्टः कायः
पुरुष इति चाहुः, न स्वर्गगमनायापवर्गगमनाय वा समर्थो
देहव्यतिरिक्त आत्माऽस्ति यत्कृतं चैतन्यं देहे स्यात् देह एव
तु चेतनश्चात्मा चेति प्रतिजानते हेतुं चाचक्षते, शरीरे भावा-
दिति । यद्धि यस्मिन् सति भवत्यसति च न भवति तत्तद्धर्म-
त्वेनाध्यवसीयते यथाग्निधर्मावौष्ण्यप्रकाशौ; प्राणचेष्टाचैतन्य-
स्मृत्यादयश्चात्मधर्मत्वेनाभिमता आत्मवादिनां, तेऽप्यन्तरेव
देहे उपलभ्यमाना बहिश्चानुपलभ्यमाना असिद्धे देहव्यति-

---

कारी चिन्तितस्तस्मादिदमधिकरणं सर्वशास्त्राङ्गमिति शास्त्रसङ्गति-
माह । अत्रेति । आक्षेपलक्षणामवान्तरसङ्गतिमाह । अपि चेति ।
देहातिरिक्त आत्माऽस्ति न वेति वादिविप्रतिपत्तेः संशये पूर्वप-
क्षमाह । अत्रैक इति । यद्यपि समस्तेषु मिलितेषु भूतेषु चैतन्यं न
दृष्टं तथोदकुम्भस्य ज्ञानाभावाद्व्यस्तेषु तु नास्त्येव इत्यर्थः । विशेषा-
त्मकभूतेषु स्यादिति तेभ्यो भूतेभ्यश्चैतन्यं सम्भावयन्तो मदशक्तिवि-
ज्ञानं सङ्घातजं तद्विशिष्टसङ्घात आत्मेत्याहुरित्यन्वयः । यथा मादक-
द्रव्येषु ताम्बूलपत्रादिषु प्रत्येकमदृष्टापि मदशक्तिस्तत्सङ्घाते [illegible]
तद्वदित्यर्थः । ननु देहः स्वयं न चेतनः घटवद्भौतिकत्वात् कि-

रिक्ते धर्मिणि देहधर्मा एव भवितुमर्हन्ति। तस्मादव्यतिरेको देहादात्मन इत्येवं प्राप्ते ब्रूमः॥

## व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत्॥५४॥

न त्वेतदस्ति यदुक्तमव्यतिरेको देहादात्मन इति व्यतिरेक एवास्य देहाद्भवितुमर्हति तद्भावाभावित्वात्, यदि हि देहभावे भावात् देहधर्मत्वमात्मधर्माणां मन्येत ततो देहभावेऽप्यभावादतद्धर्मत्वमेषां किं न मन्येत देहधर्मवैलक्षण्यात्, ये हि देहधर्मा रूपादयस्ते यावद्देहं भवन्ति प्राणचेष्टादयस्तु सत्यपि देहे मृतावस्थायां न भवन्ति, देहधर्माश्च रूपादयः परैरुपलभ्यन्ते न त्वात्मधर्माश्चैतन्यस्मृत्यादयः। अपि च सति तावद्देहे जीवदवस्थायामेषां भावः शक्यते निश्चेतुं न त्वसत्यभावः, पतितेऽपि कदाचिदस्मिन् देहे देहान्तरसञ्चारेणात्मधर्मा अनुवर्तेरन्, संशयमात्रेणापि परपक्षः प्रतिषि-

---

चेतनः कश्चित् स्वर्गादिभोक्ताऽस्ति तस्यासिद्ध्यात् देहस्य चैतन्यविभ्रम इत्यत आह। न स्वर्गेति॥

मनुष्योऽहं जानामीति देहस्य ज्ञातृतायाः प्रत्यक्षत्वादात्मधर्मत्वेन प्रसिद्धानां धर्माणां देहान्वयव्यतिरेकानुभवात् तदन्यात्मनि प्रत्यक्षाभावादप्रत्यक्षस्य अप्रामाणिकत्वाद्देह एवात्मेति प्राप्ते सूत्रस्थनत्विति-पदेन सिद्धान्तं प्रतिजानीते। न त्वेतदिति। अनुमानस्य तावत् प्रामाण्यमनिच्छताप्यास्थेयमन्यथा व्यवहारासिद्धेः। न ह्यनागतपाकादाविष्टसाधनतानुमितिं विना न प्रवृत्तिः सम्भवति। तथा च प्राणादयो देहधर्म्यतिरिक्ताश्रयाः देहधर्मत्वेऽयुक्तत्वात् व्यतिरेकेण देहरूपादिवदित्याह। व्यतिरेक एवास्येति। न चादौ प्रागभावे देहस्य पश्चात् रूपान्तरे व्यभिचारः, गुणसत्ताव्याप्यजातिसम्बन्धेन भावस्य विवक्षितत्वात्,

ध्यते। किमात्मकञ्च पुनरिदं चैतन्यं मन्यते यस्य भूतेभ्य उत्पत्तिमिच्छन्ति इति परः पर्यनुयोक्तव्यः, न हि भूतव्यतिरेकेण लोकायतिकाः किञ्चित् तत्त्वं प्रतियन्ति। यदनुभवनं भूतभौतिकानां तच्चैतन्यमिति चेत्, तर्हि विषयत्वात् तेषां न तद्धर्मत्वमश्नुवीत स्वात्मनि क्रियाविरोधात्; न ह्यग्निरुष्णः सन् स्वात्मानं दहति, न हि नटः शिक्षितः स्वस्कन्धमधिरोक्ष्यति, न हि भूतभौतिकधर्मेण सता चैतन्येन भूतभौतिकानि विषयीक्रियेरन्; न हि रूपादिभिः स्वरूपं पररूपं वा विषयीक्रियते, विषयीक्रियन्ते तु बाह्याध्यात्मिकानि भूतभौतिकानि चैतन्येन। अतश्च यथैवास्या भूतभौतिकविषयाया उपलब्धेर्भावोऽभ्युपगम्यते एवं व्यतिरे

---

देहेऽवस्थिते सदा रूपत्वावच्छिन्नमस्त्येव, ज्ञानत्वावच्छिन्नं तु न। अतो न ज्ञानं देहधर्मः। किञ्च एतेन देहगुणाः परैर्दृश्यत्वादित्याह। तेषां धर्मास्त्वेति। किञ्च देहव्यतिरेके तेषामभावस्य सन्दिग्धत्वात् न देहधर्मत्वनिश्चय इत्याह। अपि चेति। न चानुपलम्भात् तेषामभावनिश्चयस्तथानुपलब्धेरमानत्वात्, तद्धर्मात्मनो देहान्तरप्राप्त्युपलम्भोपपत्तेश्चेति भावः। उपलब्धिवदिति सूत्रस्थं पदं व्याख्यातुमुपक्रमते। किमात्मकमिति। तत् किं भूतातिरिक्तं तत्त्वमुत भूतधर्मः, नाद्यः, अपसिद्धान्तादित्युक्त्वा द्वितीयमाशङ्क्य निषेधति यदनुभवनमित्यादिना। देहात्मकभूतानां चैतन्यं प्रति विषयत्वात् कर्तृकर्मविरोधेन विषयस्य कर्तृत्वायोगात् न भूतकर्तृकत्वं चैतन्यस्येत्यर्थः। किञ्च ज्ञानस्य भूतधर्मत्वे रूपादिवज्ज्ञानाश्रयत्वेन तद्धर्मविषयत्वं न स्यादिति। फलितं सूत्रपदार्थमाह। अतश्चेति। या देहातिरिक्ता अनुभवरूपोपलब्धिः स एवात्मा चेदनित्यः स्यादुपलब्धेरनित्यत्वादित्यत आह। नित्यत्वं चेति। घटः स्फुरति पटः स्फुरतीति सर्वत्र स्फुर्तेरभेदात्

ऽपरस्यास्तिश्चोऽभ्युपगन्तव्यः, 'उपलब्धिस्वरूप एव च नः आत्मा' इत्यात्मनो देहव्यतिरिक्तत्वं नित्यत्वञ्च उपलब्धेरैकरूप्यात्, 'अहमिदमद्राक्षम्' इति चावस्थान्तरयोगेऽपि उपलब्धृत्वेन प्रत्यभिज्ञानात् स्मृत्याद्युपपत्तेश्च। यत्तूक्तं शरीरे भावाच्छरीरधर्म उपलब्धिरिति तद्वर्णितेन प्रकारेण प्रत्युक्तम्। अपि च सत्सु प्रदीपादिषूपकरणेषूपलब्धिर्भवति असत्सु न भवति, न चैतावता प्रदीपादिधर्म एवोपलब्धिर्भवति, एवञ्च सति देहभावे उपलब्धिर्भवति असति च न भवति इति न देहधर्मो भवितुमर्हति, उपकरणत्वमात्रेणापि प्रदीपादिवत् देहोपयोगोपपत्तेः। न चात्यन्तं देहस्योपलब्धावुपयोगो दृश्यते, निश्चेष्टेऽपि ह्यस्मिन् देहे स्वप्ने नानाविधोपलब्धिदर्शनात्। तस्मादनवद्यं देहव्यतिरिक्तस्यात्मनोऽस्तित्वम्।

..............................................................

विषयोपरागनाशे तु नाशभ्रम इत्यर्थः। एवमात्मा देहाद्भिन्न उपलब्धिरूपत्वादुपलब्धिवदित्युक्तं, किञ्च जाग्रत्स्वप्नयोर्देहभेदेऽप्यात्मैकत्वप्रत्यभिज्ञानादात्मभेदे च अन्यानुभूते अन्यस्य स्मृतेश्चानुपपत्तेः। स्मृत्यादिमानात्मा देहाद्भिन्न इत्याह। अहमिति। निरस्तमप्यधिकाभिधित्सयानुवदति। यत्तूक्तमिति। उपलब्धेर्देहान्वयव्यतिरेकौ न देहधर्मत्वसाधकौ तन्निमित्तत्वेन अन्यथासिद्धेरित्यभिप्रायेणाह। अपि चेति। उपलब्धिमात्रे देहस्य निमित्तत्वमप्यसिद्धमित्याह। न चात्यन्तमिति। स्वप्नोपलब्धिर्न देहजन्या देहव्यापारं विनापि भावाद् स्वप्नदृष्ट एव तदभावेऽपि स्वप्नयोगिनां भोगं स्वप्नकल्पयति। जाग्रदुपलब्धेर्देहजन्यत्वमनवगीतमित्युक्तं, तस्मादुपलब्धिमानात्मा देहातिरिक्तः शरीरमिति भेदानुपपादकं मनुष्य इत्यभेदज्ञानं भ्रम इत्युपसंहरति। तस्मादिति॥

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥५५॥

समाप्ता प्रासङ्गिकीयं कथा, सम्प्रति प्रकृतामेवानुवर्तामः 'ओमित्येतदक्षरमुद्गीथमुपासीत लोकेषु पञ्चविधं सामोपासीत उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवी अयं वाव लोक एषोऽग्निश्चितः' इत्येवमाद्या उद्गीथादिकर्माङ्गावबद्धाः प्रत्ययाः प्रतिवेदं शाखाभेदेषु विहिताः ते तच्छाखागतेष्वेवोद्गीथादिषु भवेयुः अथवा सर्वशाखागतेष्विति विशयः प्रतिशाखञ्च स्वरादिभेदादुद्गीथादिभेदमादायायमुपन्यासः । किं तावत् प्राप्तं स्वशाखागतेष्वेवोद्गीथादिषु विधीयेरन्निति । कुतः, सन्निधानात् 'उद्गीथमुपासीत' इति हि सामान्यविहितानां विशेषाकाङ्क्षायां सन्निकृष्टेनैव स्वशाखागतेन विशेषेणाकाङ्क्षानिवृत्तेः तदतिलङ्घनेन शाखान्तरविहितविशेषोपादाने कारणं नास्ति, तस्मात् प्रतिशाखं व्य...

---

अङ्गावबद्धाः । उद्गीथावयवोङ्कारे प्राणदृष्टिः 'पृथिवी हिङ्कारोऽग्निः प्रस्तावोऽन्तरीक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनम्' इति हिङ्कारादिपञ्चविधे साम्नि पृथिव्यादिलोकदृष्टिः उक्थाख्यशस्त्रे पृथिवीदृष्टिः इष्टकाचिताग्नौ लोकदृष्टिरित्येवं कर्माङ्गाश्रितोपासनेषु शास्त्रोद्गीथादिसाधारण्यात् विशेषसन्निधिना च संशयः । सर्वशाखादीनां सर्वशाखास्वेकत्वादुपास्त्रयः सर्वत्रेति विद्यैक्यात् सिद्धे अपि संशयः इत्यत आह । प्रतिशाखमेति । यथा देहात्मनोभेदादात्मनो देहे न सम्भवन्ति तथा प्रतिवेदमुद्गीथादीनां भिन्नत्वादेकशाखाविहितोद्गीथाद्युपास्तयो वेदान्तरस्योद्गीथादिषु न सम्भवन्ति इति दृष्टान्तेन पूर्वपक्षयति । स्वशाखेति । उद्गीथमुपासीतेति विशे...

स्येति, एवं प्राप्ते ब्रवीति 'अङ्गावबद्धास्तु' इति। तुशब्दः पूर्वपक्षं व्यावर्त्तयति, नैते प्रतिवेदं स्वशाखास्वेव व्यवतिष्ठेरन् अपि तु सर्व्वशाखास्वनुवर्तेरन्, कुतः, उद्गीथादिश्रुत्यविशेषात्, स्वशाखाव्यवस्थायां ह्युद्गीथमुपासीतेति सामान्यश्रुतिरविशेषप्रवृत्ता सती सन्निधानवशेन विशेषे व्यवस्थाप्यमाना पीड़िता स्यात्, न चैतत् न्याय्यं, सन्निधानाद्धि श्रुतिर्बलीयसी, न च सामान्याश्रयः प्रत्ययो नोपपद्यते। तस्मात् स्वरादिभेदे सत्यप्युद्गीथत्वाद्यविशेषात् सर्व्वशाखागतेष्वेवोद्गीथादिष्वेवं जातीयकाः प्रत्ययाः स्युः॥

मन्त्रादिवद्वाऽविरोधः॥ ५६॥

अथवा नैवात्र विरोध आशङ्कितव्यः कथमन्यशाखागतेषूद्गीथादिष्वन्यशाखाविहिताः प्रत्यया भवेयुरिति, मन्त्रादिवदविरोधोपपत्तेः। तथा हि मन्त्राणां कर्मणां गुणानाञ्च शाखान्तरोत्पन्नानामपि शाखान्तर उपसङ्ग्रहो दृश्यते, येषामपि हि शाखिनां 'कुटरुरसि' इत्यश्मादानमन्त्रो नाम्नातः, तेषामप्यसौ

---

कस्योद्गीथस्य सामान्यस्य व्यक्त्यपेक्षत्वात् स्वशाखाविच्छिन्नव्यक्तिपर इत्यर्थः। सामान्यश्रुतेः सन्निहितव्यक्तिपरत्वसङ्कोचस्तत्र कर्तव्यः यत्र व्यक्तिमात्रपरो नोपपद्यते, यथा शुक्लां गामानयेत्यत्र गोश्रुतेः सन्निहितशुक्लव्यक्तिपरतया सङ्कोचः, अत्र त्वनुपपत्त्यभावात् व्यक्तिमात्रस-मान्यस्योपास्यत्वमिति सिद्धान्तयति। सर्वमित्यादिना॥

एवं शाखान्तरविहितोपासनानां शाखान्तरस्थाङ्गसम्बन्धे यः प्रतीतो विरोधस्तमङ्गीकृत्य समाधिरुक्तः सम्प्रति विरोध एव नास्ति, शाखान्तरविहिताङ्गानां शाखान्तरस्थाङ्गिसम्बन्धवदङ्गसम्बन्धोपपत्तेः। यद्यपि यजुर्वेदिनां कुक्कुटोऽसीति मन्त्रोऽस्ति, कुटरुरसीति नास्ति, तथापि स्वकर्म-

विनियोगो दृश्यते 'कुक्कुटोऽसि' इत्यश्मानमादत्ते 'कुटरुरसि' इति वेति। येषामपि च समिदादयः प्रयाजा नामाम्नातास्तेषामपि तेषु गुणविधिराम्नायते 'ऋतवो वै प्रयाजाः समानत्र होतव्याः' इति। तथा येषामपि 'अजोऽग्नीषोमीयः' इति जातिविशेषोपदेशो नास्ति तेषामपि तद्विशेषविषयो मन्त्रवर्ण उपलभ्यते 'छागस्य वपाया मेदसोऽनुब्रूहि' इति। तथा वेदान्तरोत्पन्नानामपि 'अग्नेर्वेर्होत्रं वेरध्वरम्' इत्यादिमन्त्राणां वेदान्तरे परिग्रहो दृष्टः। तथा बह्वृचपठितस्य सूक्तस्य 'यो जात एव प्रथमो मनस्वान्' इत्यस्य 'अध्वर्यवे सजनीयं शस्यम्' इत्यत्र परिग्रहो दृष्टः। तस्मात् यथाश्रयाणां कर्माङ्गानां सर्वत्रानुवृत्तिरेवमाश्रितानामपि प्रत्ययानामित्यविरोधः॥

---

अश्मादाने मन्त्रद्वयस्य विकल्पेन विनियोगात् सोऽपि प्राप्नोतीत्यर्थः। शाखान्तरस्थादिपदोपात्तकर्मण उदाहरणमाह। येषामिति। मैत्रायणीयानामित्यर्थः। हेमन्तशिशिरयोरैक्यादृतवः पञ्च तद्वत् पञ्चसंख्याकाः प्रयाजाः, समानत्र तुल्यकर्मस्थले, होतव्या इति पञ्चत्वगुणविधानात् गुणिनः शाखान्तरविहिताः सम्बध्यन्त इति भावः। गुणमुदाहृत्य तथा येषामिति। यजुर्वेदिनामग्नीषोमीयः पशुः श्रुतो नाज इति जातिविशेषस्तथापि प्रैषमन्त्रलिङ्गाज्जातिविशेषसङ्ग्रह इत्यर्थः। मन्त्राणामुदाहरणान्तरमाह। तथेति। सामवेदस्थानां यजुर्वेदे परिग्रह इत्यर्थः। तथेति 'स जनास इन्द्रः' इत्यनेनोपलक्षितं सूक्तं सजनीयं तस्य यजुष्यध्वर्युकर्तृकप्रयोगे शंसनं दृष्टमित्यर्थः। यो जातो जात एव प्रथमो मुख्यः श्रेष्ठो मनस्वान् विवेकवान् स इन्द्रः एवंविधो हे जनासो जना इति मन्त्रार्थः॥

## भूम्नः क्रतुवत् ज्यायस्त्वं तथा हि दर्शयति ॥५७॥

'प्राचीनशाल औपमन्यवः' इत्यस्यामाख्यायिकायां व्यस्तस्य समस्तस्य च वैश्वानरस्योपासनं श्रूयते। व्यस्तोपासनं तावत् 'औपमन्यव कं त्वमात्मानमुपास्से' इति, 'दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से' इत्यादि, तथा समस्तोपासनमपि 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो वस्तिरेव रयिः पृथिव्येव पादौ' इत्यादि. तत्र संशयः किमिहोभयथाप्युपासनं स्यात् व्यस्तस्य समस्तस्य चोत समस्तस्यैवेति, किं तावत्प्राप्तं प्रत्यवयवं, सुतेजःप्रभृतिषु उपास्स इति क्रियापदश्रवणात्, तस्मात् 'तव सुतं प्रसुतमासुतं कुले दृश्यते' इत्यादिफलभेदश्रवणाच्च व्यस्तान्यप्युपासनानि स्युरिति प्राप्तं, ततोऽभिधीयते, भूम्नः पदार्थोपचयात्मकस्य समस्तस्य वैश्वानरोपासनस्य ज्यायस्त्वं प्राधान्येन अस्मिन्वाक्ये विव-

---

भूम्नः क्रतुवत्। द्युलोकादिषु प्रत्येकं वैश्वानरस्य व्यस्तोपास्तिः इह यत्र कृत्स्नोपास्तिः समस्तोपास्तिरिति भेदः, आख्यायिका पूर्वमेव व्याख्याता। अत्रोभयत्र विधिफलयोः श्रवणादेकवाक्यत्वानुपपत्तेश्च संशयमाह। तत्रेति। 'सैव हि सत्यादयः' इत्यत्र [ब्र०सू०३।३।३८] तद्यत् सत्यमिति प्रक- रणाद्विद्यैकत्वमुक्तं तद्वदत्रैक्यहेत्वभावात्पृथक्त्वं मत्वा पूर्वपक्षमाह। आदि- मुख्यां भक्तिविबाधेनाष्टानां व्यस्तोपास्तीनां सर्वेषामाख्यानपरत्वाद्व्यस्तोपा- स्तीनां विधिश्रुतेः फलश्रवणस्य च समस्तोपास्तिविधिपरत्वम् स्तुत्यर्थत्वं

च्चितं भवितुमर्हति न प्रत्येकमवयवोपासनानामपि, क्रतुवत्। यथा क्रतुषु दर्शपूर्णमासप्रभृतिषु सामस्त्येन साङ्गप्रधानप्रयोग एवैको विवक्ष्यते न व्यस्तानामपि प्रयोगः प्रयाजादीनां नाप्येकदेशाङ्गयुक्तस्य प्रधानस्य तद्वत्। कुत एतद्भूमैव ज्यायानिति, तथा हि श्रुतिर्भूम्नो ज्यायस्त्वं दर्शयति एकवाक्यत्वावगमात्, एकं हीदं वाक्यं वैश्वानरविद्याविषयं पौर्वापर्य्यालोचनात्प्रतीयते, तथा हि प्राचीनशालप्रभृतय उद्दालकावसानाः षड् ऋषयो वैश्वानरविद्यायां परिनिष्ठामप्रतिपद्यमाना 'अश्वपतिं कैकेयं राजानमभ्याजग्मुः' इत्युपक्रम्यैकैकस्यर्षेरुपास्यं द्युप्रभृतीनामेकैकं श्रावयित्वा 'मूर्द्धा त्वेष आत्मन इति होवाच' इत्यादिना मूर्द्धादिभावं तेषां विदधाति। 'मूर्द्धा ते व्यपतिष्यद्यन्मां नागमिष्यः' इत्यादिना च व्यस्तोपासनमपवदति। पुनश्च व्यस्तोपासनं व्यावर्त्य समस्तोपासनमेवानुवर्त्य 'स सर्व्वेषु लोकेषु सर्व्वेषु भूतेषु सर्व्वेष्वात्मस्वन्नमत्ति' इति भूमाश्रयमेव फलं दर्शयति। यत्तु प्रत्येकं सुतेजःप्रभृतिषु फलभेदश्रवणं, तदेवं सत्यङ्गफलानि प्रधान एवाभ्युच्चिनोति इति द्रष्टव्यम्। तथोपास्य

---

वाधित्वा नद्विधेयत्वमिति पूर्वपक्षमाह। प्रत्यवयवमिति। फलानुसा पूर्वोत्तरपक्षसिद्धिरेव फलं मन्तव्यं। सुतं खण्डितं, सोमद्रव्यमेव प्रसुतत्वमासमन्तात् सुतत्वमवस्थाभेदः सोमयागसम्पत्तिरत्र कुले दृश्यत इति यावत्, आत्मनो वैश्वानरस्य मूर्द्धैव सुतेजा इति वाक्यप्रकरणाभ्यां व्यस्तोपास्तीनां समस्तोपास्त्यन्तर्भावेन प्रयाजदर्शवदेकप्रयोगत्वे सिद्धे प्रधानवदङ्गफलानां अर्थवादगतानामेकप्रधानफलत्वोपसंहारात् वाक्यभेदो न दुष्ट इति सिद्धान्त्याशयः। एकदेशिव्याख्यामनूद्य दूषयति। केचिदिति।

इत्यपि प्रत्यवयवसमाख्यातवचनं पराभिप्रायानुवादार्थं न व्यस्तोपासनविधानार्थं, तस्मात्समस्तोपासनपक्ष एव श्रेयानिति । केचित्त्वत्र समस्तोपासनपक्षं ज्यायांसम्प्रतिष्ठाप्य ज्यायस्त्ववचनादेव किल व्यस्तोपासनपक्षमपि सूत्रकारोऽनुमन्यत इति कल्पयन्ति, तदयुक्तं, एकवाक्यतावगतौ सत्यां वाक्यभेदकल्पनस्यान्याय्यत्वात् 'मूर्द्धा ते व्यपतिष्यत्' इति चैवमादिनिन्दावचनविरोधात्, स्पष्टे चोपसंहारे समस्तोपासनावगमे तदभावस्य पूर्वपक्षे वक्तुमशक्यत्वात्, सौत्रस्य च ज्यायस्त्ववचनस्य प्रमाणवत्त्वाभिप्रायेणाप्युपपद्यमानत्वात् ॥

## नाना शब्दादिभेदात् ॥ ५८ ॥

पूर्वस्मिन्नधिकरणे सत्यामपि सुतेजःप्रभृतीनां फलभेदश्रुतौ समस्तोपासनं ज्याय इत्युक्तम्, अतः प्राप्ता बुद्धिरन्यान्यपि च भिन्नश्रुतीन्युपासनानि समस्योपासिष्यन्त इति । अपि च नैव वेद्याभेदे विद्याभेदो विज्ञातुं शक्यते, वेद्यं हि रूपं विद्यायाः द्रव्यदैवतमिव यागस्य, वेद्यश्चैक एवेश्वरः श्रुतिनानात्वेऽप्यव-

---

यद्युभयथोपासनं सिद्धान्तस्तर्हि व्यस्तोपासनमेवेति पूर्वपक्षो वक्तव्यः, न च न सम्भवतीत्याह । स्पष्टे चेति । कथं तर्हि सूत्रे ज्यायस्त्वोक्तिरत आह । सौत्रस्येति । व्यस्तोपास्तीनामप्रामाणिकत्वद्योतनार्थं तदुक्तिरिति भावः ॥

नानाशब्दादिभेदात् । शाण्डिल्यविद्यादिसद्विद्यादयो नाना च, तथा दहरविद्यादिप्राणविद्यादयो नाना चेति रूपैकभावाभावाभ्यां संशये दृष्टान्तसङ्गत्या पूर्वपक्षमाह । पूर्वस्मिन्निति । रूपैक्यात् विद्यैक्यमित्याह ।

गम्यते 'मनोमयः प्राणशरीरः कं ब्रह्म खं ब्रह्म सत्यकामः सत्य-सङ्कल्पः' इत्येवमादिषु, तथा 'एक एव प्राणः प्राणो वाव संवर्गः प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च प्राणो ह पिता प्राणो माता' इत्येवमादिषु वेद्यैकत्वाच्च विद्यैकत्वं श्रुतं श्रुतिनानात्वमप्यस्मिन् पक्षे गुणान्तरपरत्वात् नानर्थकं, तस्मात् स्वपरशाखाविहित-मेकवेद्यव्यपाश्रयं गुणजातमुपसंहर्त्तव्यं विद्याकार्त्स्न्यायेत्येवं प्राप्ते प्रतिपद्यते, नानेति। वेद्याभेदेऽप्येवंजातीयका विद्या भिन्ना भवितुमर्हन्ति, कुतः शब्दादिभेदात्, भवति हि शब्द-भेदो 'वेदोपासीत स क्रतुं कुर्व्वीत' इत्येवमादिः, शब्दभेदश्च कर्म्मभेदहेतुः समधिगतः पुरस्तात् शब्दान्तरे कर्मभेदः कृतानु

---

अपि चेति। विद्यैक्ये चेदेकस्यामुक्तविद्यायाः श्रुत्यन्तरेऽप्युक्तिर्वैयर्थ्यमित्याह। श्रुतिनानात्वमपीति। पूर्वपक्षफलमाह। तस्मादिति। सिद्धान्ते तु गुणानुपसंहार इति मत्वा सूत्रं योजयति। वेद्याभेदेऽपीति। ननु भिन्नभावार्थवाचकशब्दः शब्दान्तरं यथा यजति ददाति जुहोतीति तस्मिन् शब्दभेदे कर्मशब्दितविधेयभावनाया भेदो युक्तस्तत्र धात्वर्थ-त्वाद्भेदेन स्वीकृतविषयत्वाद्भावार्थभेदादिति यथा तु। प्रकृते तु वेदोपा-सीतेत्यादिशब्दार्थोपास्तेर्यागदानहोमवत् स्वतो भेदाभावात् विद्यागुण-ब्रह्मण एकत्वेन विषयतोऽपि भेदाभावात् कथमुपास्तिभेद इति प्रकृतं नन्विति। अत्र सूत्रे शब्दभेदोऽप्युपलक्षणमात्रतयोक्तः, विद्यान्तरत्वे समस्त-ज्ञेयत्वादिपदोपात्तगुणादय एव, तथा हि सिद्धस्यापि गुणस्य साधन-यिततया कार्यत्वमस्ति। यथा तारुण्यादिगुणानां क्रयणभावनान्वयित्वात् कार्यत्वं तयोश्चितत्वप्रकृतरूपत्वमिश्रितैरुपास्तिभावनान्वयितया कार्य-त्वात्र गुणैर्विशिष्टतयोपास्यरूपभेदादुपासनाभेदः। यथा अश्वामरादि-गुणभेदेन राजोपास्तिभेदः यथा वाऽऽमिक्षावाजिनगुणभेदेन दानभेद-

वन्त्वादिति। आदिग्रहणात् गुणादयोऽपि यथासम्भवं भेद-
हेतवो योजयितव्याः। ननु वेदेत्यादिषु शब्दभेद एवावगम्यते
न यजति इत्यादिवदर्थभेदः सर्वेषामेवैषां मनोवृत्त्यर्थत्वाभेदा-
दर्थान्तरासम्भवाच्च तत्कथं शब्दभेदात् विद्याभेद इति। नैष
दोषः, मनोवृत्त्यर्थत्वाभेदेऽप्यनुबन्धभेदात् विद्याभेदोपपत्तेः।
एकस्यापि ह्यीश्वरस्योपास्यस्य प्रति प्रकरणं व्यावृत्ता गुणाः
शिष्यन्ते तथैकस्यापि प्राणस्य तत्र तत्रोपास्यस्याभेदेऽप्यन्या-
दृक् गुणोऽन्यत्रोपासितव्योऽन्यादृक् गुणश्चान्यत्रेत्येवमनुबन्ध-
भेदात् विधिभेदे सति विद्याभेदो विज्ञायते। न चात्रैको
विद्याविधिरितरे गुणविधय इति शक्यं वक्तुं, विनिगमनहेत्व-
भावात् अनेकत्वाच्च प्रति प्रकरणं गुणानां प्राप्तविद्यानुवादेन
गुणविधानानुपपत्तेः। न चास्मिन् पक्षे समानाः सन्तः सत्य-
कामत्वादयो गुणा असकृच्छ्रावयितव्याः। प्रतिप्रकरणं चेदङ्का-
मेनेदमुपासितव्यमिदङ्कामेन चेदमिति नैराकाङ्क्ष्यावगमात्
नैकवाक्यतापत्तिः। न चात्र वैश्वानरविद्यायामिव समस्तचो-

---

स्त्वात्, तथा प्रतिविद्यं फलसंयोगभेदाद्रूपस्य विद्यादिसमाख्याभेदा-
द्भेद इति समाधत्ते। नैष दोष इत्यादिना। यदुक्तम् श्रुतिनानात्वं
गुणान्तरविध्यर्थमिति तत्राह। न चात्रैक इति। किं प्राप्तविद्या-
नुवादेनाप्राप्तानेकगुणविधाने वाक्यभेदः स्यादित्याह। अनेकत्वाच्चेति।
किञ्च विद्यैक्यपक्षे गुणानां पुनरुक्तिर्वा न च प्रत्यभिज्ञानाद्यां प्रकृतैका-
र्थ तत्सिद्धे, विद्याभेदपक्षे तु गुणानामप्राप्तेः सा प्राप्तार्थेत्याह। न
चास्मिन् पक्ष इति। फलभेदश्चोदनैक्याभावात् सर्वगुणोपसंहारासम्भ-

दनाऽपरामृष्टं यद्गुणवत्त्वेन प्रतिप्रकरणं कर्त्रन्त्यवयवोपासनाभि-भूत्वैकवाक्यतां ययुः। वेद्यैकत्वनिमित्ते च वेद्यैकत्वे सर्वं निरङ्कुशे प्रतिज्ञायमाने समस्तगुणोपसंहारोऽशक्यः प्रतिज्ञायेत, तस्मात् सुष्ठूच्यते, नानाशब्दादिभेदादिति। स्थिते चैतस्मिन्नधिकरणे सर्ववेदान्तप्रत्ययमित्यादि द्रष्टव्यम्॥

## विकल्पोऽविशिष्टफलत्वात्॥ ५९॥

स्थिते विद्याभेदे विचार्यते, किमासामिच्छया समुच्चयो विकल्पो वा स्यादथवा विकल्प एव नियमेनेति. तत्र स्थितत्वात् तावत् विद्याभेदस्य न समुच्चयनियमे किञ्चित्कारणमस्ति। ननु भिन्नानामप्यग्निहोत्रदर्शपूर्णमासादीनां समुच्चयनियमो दृश्यते। नैष दोषः, नित्यताश्रुतिर्हि तत्र कारणं, नैवं विद्यानां काचित् नित्यताश्रुतिरस्ति, तस्मात् न समुच्चयनियमः, नापि

---

त्वाच्च विद्या नानेत्याह। प्रतिप्रकरणञ्चेत्यादिना। दहराध्यायः सर्वेषु लोकेषु कामचारो भवति वैश्वानरध्याता सर्वत्रान्नभक्षीत्यादिफलभेद-द्रष्टव्यः। ननु विद्यानानात्वे सिद्धे पञ्चाहुत्यादिविद्या प्रतिवेदान्तमेका-ऽनेका वेति चिन्तोचिता तत्कथमादौ सा कृतेत्यत आह। स्थिते चेति। विद्यानानात्वाधिकरणं पादादावेव सङ्गतं यत्र प्रासङ्गिकमिति भावः।

विकल्पः। विद्यानां स्वरूपसङ्ख्याऽनुष्ठानप्रकारोऽत्र निरूप्यत इत्युप-जीव्यत्वसङ्गतिमाह। स्थित इति। विद्याश्चिविधाः अहंग्रहाश्च प्रतीकाश्च अङ्गाश्रिताश्चेति। तत्राहंग्रहविद्यासु यथाकाम्यविकल्पयोर्विद्यानाना-त्वसाम्यात् संशयमाह। किमिति। पूर्वपक्षे यथेच्छमनुष्ठानमित्यनियमः सिद्धान्ते विकल्पेनानुष्ठानमिति नियम इति फलभेदः। तत्रानियमं प्राप्-

विकल्पनियमः विद्यान्तराधिकृतस्य विद्यान्तराप्रतिषेधात्। पारिशेष्यात् याथाकाम्यमापद्यते। नन्वविशिष्टफलत्वादासां विकल्पो न्याय्यः, तथा हि 'मनोमयः प्राणशरीरः कं ब्रह्म खं ब्रह्म सत्यकामः सत्यसङ्कल्पः' इत्येवमाद्यास्तुल्यवदीश्वरत्वप्राप्तिफला लक्ष्यन्ते। नैष दोषः, समानफलेष्वपि स्वर्गादिसाधनेषु कर्मसु याथाकाम्यदर्शनात्। तस्मात् याथाकाम्यप्राप्तावुच्यते विकल्प एवासां भवितुमर्हति न समुच्चयः। कस्मात् अविशिष्टफलत्वात्। अविशिष्टं ह्यासां फलमुपास्यविषयसाक्षात्करणम्, एकेन चोपासनेन साक्षात्कृते उपास्यविषये ईश्वरादौ द्वितीयमनर्थकम्। अपि चासम्भव एव साक्षात्करणस्य, समुच्चयपक्षे चित्तविक्षेपहेतुत्वात्। साक्षात्करणसाध्यञ्च विद्याफलं दर्शयन्ति श्रुतयः 'यस्य स्यादद्धा न विचिकित्सास्ति' इति 'देवो भूत्वा देवानप्येति' इत्येवमाद्याः। स्मृतयश्च 'सदा तद्भावभाविताः' इत्येवमाद्याः। तस्मादविशिष्टफलानां विद्यानामन्य-

---

यति। तत्र स्थितत्वादित्यादिना। एकपुरोडाशफलत्वाद्यथा व्रीहियवयोर्विकल्पस्तथा विकल्पनियम एवासां विद्यानां न्याय्यः, तुल्यफलत्वात्। न च फलभूयस्त्वार्थिनः काम्यकर्मसमुच्चयेऽपि दृष्ट इति वाच्यम्, ईश्वरसाक्षात्कारात् परं फलभेदस्य सामर्थ्यपक्षोपासीनां साक्षात्कारात्मकफलस्य तुल्यत्वात्, तस्य चैकप्रासत्त्वे अन्यस्याः तत्त्वभावाश्चित्तविक्षेपकतया तदविद्याफलत्वाद्द्वेति सिद्धान्तभाष्यार्थः। सा तु साक्षात्कार इत्यत आह। साक्षात्करणसाध्यञ्चेति। यस्य पुंसः, अद्धा ईश्वरोऽहमिति साक्षात्कारः स्यात्तद्विचिकित्सा च नास्ति अहमीश्वरो न वेति सईश्वरप्राप्तिरित्यर्थः। जीवश्चैव भावनया देवत्वं साक्षात्कृत्य देहपातोत्तरकालं देवत्वमाप्नोति

तस्मामादाय तत्परः स्यात् यावदुपास्तिविषयसाक्षात्कारमेव तत्फलप्राप्तिरिति ॥

**काम्यास्तु यथाकामं समुच्चियेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥**

'अविशिष्टफलत्वात्' इत्यस्य प्रत्युदाहरणं, यासु पुनः काम्यासु विद्यासु 'स य एतमेव वायुं दिशां वत्सं वेद न पुत्ररोदं रोदिति स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य कामचारी भवति' इति चैवमाद्यासु क्रियावदृष्टेनात्मनात्मीयं तत्तत्फलं साधयन्तीषु साक्षात्कारापेक्षा नास्ति ता यथाकामं समुच्चीयेरन्न वा समुच्चीयेरन् पूर्वहेत्वभावात्, पूर्वस्याविशिष्टफलत्वात् इत्यस्य विकल्पहेतोरभावात् ॥

**अङ्गेषु यथाश्रयभावः ॥ ६१ ॥**

कर्माङ्गेषु उद्गीथादिषु ये आश्रिताः प्रत्ययाः वेदत्रयविहिताः किं ते समुच्चीयेरन् किं वा यथाकामं स्युरिति संशये

---

इति श्रुत्यन्तरार्थः। अहंग्रहाणामनुष्ठानप्रकारमुपसंहरति। यथा-दिति ॥

काम्यास्तु। तटस्थोपास्तयोऽत्र विषयस्तासु किं विकल्प उत यथाकाममनुष्ठानमिति पूर्ववत् संशये सत्युपास्तित्वाविशेषादहंग्रहवद्विकल्प इति प्राप्ते यथाकामं सिद्धान्तयति। अविशिष्टेति। स यः कश्चिदेतं वायुमेवंगुणेन कल्पितानां दिशां वत्सं वेदोपास्ते नासौ पुत्रमरणनिमित्तं रोदं रोदिति लभते नित्यमेव जीवत्पुत्रो भवतीत्यर्थः। अहंग्रहदृष्टान्ते साक्षात्कारद्वारत्वमुपाधिरिति भावः ॥

सम्प्रत्यङ्गावबद्धोपास्तीनामनुष्ठानक्रमं वक्तुं पूर्वपक्षयति। अङ्गेषु इति।

यथाश्रयभाव इत्याह । यथैषामाश्रया: स्तोत्रादय: सम्भूय भवन्त्येवं प्रत्यया अपि, आश्रयतन्त्रत्वात्प्रत्ययानाम् ॥

## शिष्टेश्च ॥ ६२ ॥

यथा आश्रया: स्तोत्रादयस्त्रिषु वेदेषु शिष्यन्ते एवमाश्रिता अपि प्रत्यया: नोपदेशकृतोऽपि कश्चिद्विशेषोऽङ्गानां तदाश्रयाणां च प्रत्ययानामित्यर्थ: ॥

## समाहारात् ॥ ६३ ॥

'होतृषदनाद्धैवापि दुरुद्गीतमनुसमाहरति' इति च प्रणवोद्गीथैकत्वविज्ञानमाहात्म्यादुद्गाता स्वकर्मण्युत्पन्नं क्षतं हौत्रात्कर्मण: प्रतिसमादधाति इति ब्रुवन् वेदान्तरोदितस्य प्रत्य-

---

अङ्गाश्रितत्वात् सफलत्वाच्च समुच्चयमाह । किमिति । यथा क्रत्वनुष्ठाने तदाश्रिताङ्गानां समुच्चित्यानुष्ठाननियमस्तथाङ्गानुष्ठाने तदाश्रितोपास्तीनां तन्नियम इति सूत्रार्थः । ननु तन्निर्धारणानियम इत्यत्राङ्गाश्रितानां गोदोहनवदनङ्गत्वमुक्तं तत् कथमनङ्गानामङ्गवत्समुच्चयं घटेतेत्युच्यते । अङ्गान्यनुष्ठापयन् प्रयोगविधिर्ह्युपासनानि नानुष्ठापयेत् तर्हि तेषां तदाश्रितत्वं व्यर्थमिति मन्यानस्य शङ्केति भावः ॥

तर्हि गोदोहनस्यापि समुच्चयः स्यादित्यत आह । शिष्टेश्चेति । शिष्टिः शासनं विधानमिति यावत् । शिष्टत्वाविशेषात् समुच्चयोऽङ्गवदित्यर्थः । गोदोहनस्य तु नानुष्ठाननियमः, चमसस्थाने विहितत्वात् तद्विधेश्चमसविधिर्बाध्यत्वात्, उपासनानां तु न कस्यचिदङ्गस्य स्थाने विहितत्वमिति समुच्चयनियमेन विरुध्यत इति भावः ॥

समुच्चये लिङ्गम्, समाहारादिति । 'य उद्गीथ: स प्रणवो य: प्रणव: स उद्गीथ:' इति छान्दोग्ये प्रणवोद्गीथयोरैक्यध्यानविधिरस्ति, तस्य

यस्य वेदान्तरोदितपदार्थसम्बन्धसामान्यात् सर्ववेदोदितप्रत्ययोपसंहारं सूचयतीति लिङ्गदर्शनम् ॥

## गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥

विद्यागुणञ्च विद्याश्रयं सन्तमोङ्कारं वेदत्रयसाधारणं श्रावयति, तेनेयं त्रयीविद्या वर्त्तते 'ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति' इति। ततश्चाश्रयसाधारण्यादाश्रितसाधारण्यमिति लिङ्गदर्शनमेव। अथ वा गुणसाधारण्यश्रुतेश्चेति। यदीमे कर्मगुणा उद्गीथादयः सर्वे सर्वप्रयोगसाधारणा न स्युः स्यात् ततस्तदाश्रयाणां प्रत्ययानां सहभावः, ते तूद्गीथादयः सर्वाङ्गग्राहिणा प्रयोगवचनेन सर्वे सर्वप्रयोगसाधारणाः श्राव्यन्ते, ततश्चाश्रयसहभावात् प्रत्ययसहभाव इति ॥

---

फलार्थवादो होतृषदनादित्यादिः। होतुः शंसनस्थानवादिना होतृषदनशब्देन शंसनं लक्ष्यते, उद्गाता स्वरादिप्रमादात् भ्रष्टमप्युद्गीथं समनुक्षतात् होतृशंसनादनुसमाहरत्येव निर्दोषं करोत्येव किल, प्रणवैक्यज्ञानप्रभावेण स्वीयोद्गीथस्यैक्यध्यानफलादित्यर्थः। ततः किं तत्राह। इति सूत्रस्थमिति। सामवेदस्योद्गीथध्यानस्य ऋग्वेदोक्तप्रणवसम्बन्धो यो दृष्टः स एवाङ्गानां सर्ववेदान्तविहितोपास्तिसमुच्चये लिङ्गं प्रणवरूपपदार्थसामान्यात् वेदान्तरोक्तत्वसादृश्यस्य तु वेदान्तरोक्ताङ्गसम्बन्धस्यापि समानत्वादित्यर्थः ॥

ओंकारस्य ध्येयस्य साधारण्यादपि तदाश्रितध्यानानां सर्वाङ्गत्वानुष्ठानं गम्यत इति लिङ्गान्तरमाह। गुणेति। तेनोङ्कारेण, वेदत्रयोक्तं कर्म प्रवर्तत इत्यर्थः। अन्वयमुखेनोक्तमर्थं व्यतिरेकतोऽपि व्याचष्टे। यदीति ॥

## न वा तत्सहभावाश्रुतेः॥ ६५॥

न वेति पक्षव्यावर्त्तनम्। न यथाश्रयभाव आश्रितानामुपासनानां भवितुमर्हति। कुतः, तत्सहभावाश्रुतेः। यथा हि त्रिवेदीविहितानामङ्गानां स्तोत्रादीनां सहभावः श्रूयते 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति स्तुतमनुशंसति प्रस्तोतः सामगाय होतरेतत् यज' इत्यादिना, नैवमुपासनानां सहभावश्रुतिरस्ति। ननु प्रयोगवचन एवासां सहभावं प्रापयति। नेति ब्रूमः, पुरुषार्थत्वादुपासनानां, प्रयोगवचनो हि क्रत्वर्थानामुद्गीथादीनां सहभावं प्रापयति, उद्गीथाद्युपासनानि तु क्रत्वङ्गाश्रयाण्यपि गोदोहनादिवत् पुरुषार्थानीत्यवोचाम 'पृथग्ध्यप्रतिबन्धः फलम्' इत्यत्र [वे० सूत्रांशः ३।३।४२]। अयमेव चोपदेशाश्रयो विशेषोऽङ्गानां तदालम्बनानां चोपासनानां यदेकेषां क्रत्वर्थत्वमेकेषां पुरुषार्थत्वमिति। परञ्च लिङ्गद्वयमकारणमुपासनसहभावस्य श्रुतिन्यायाभावात्। न च प्रतिप्रयोगमाश्रयकार्त्स्न्योपसंहारादाश्रितानामपि तथात्वं विज्ञातुं शक्यते,

---

कर्तृच्छाया अनियमादुपास्तिनियम एवयुक्तः, अङ्गवत् समुच्चयनियमे मानाभावादिति सिद्धान्तयति। न वेति। प्रयोगविधिः खल्वङ्गप्रधानानुष्ठाननियामकः न त्वनङ्गानां संयोगस्य इत्याह। नेति ब्रूम इति। विमतोपास्तयः क्रतौ न समुच्चित्यानुष्ठेया भिन्नफलत्वाद्गोदोहनवदिति न्यायः। लिङ्गद्वयं निरस्यति। अयमेवेति। समाहारादुपस्थाधार-[illegible] लिङ्गद्वयमपि भागान्तरामासस्य द्योतकं न सह बाधकं [illegible]। परश्चेति। गुणधारणाय [illegible]

अतत्प्रयुक्तत्वादुपासनानाम्, आश्रयतन्त्राण्यपि ह्युपासनानि काममाश्रयाभावे माभूवन्न त्वाश्रयसद्भावे सद्भावनियममर्हन्ति तत्सहभावाश्रुतेरेव। तस्मात् यथाकाममेवोपासनान्यनुष्ठीयेरन्॥

## दर्शनाच्च ॥ ६६ ॥

दर्शयति च श्रुतिसहभावं प्रत्ययानाम् 'एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्च ऋत्विजोऽभिरक्षति' इति। सर्वप्रत्ययोपसंहारे हि 'सर्वे सर्वविद' इति न विज्ञानवता ब्रह्मणा परिपाल्यत्वमितरेषां सङ्कीर्त्येत। तस्मात् यथाकाममुपासनानां समुच्चयो विकल्पो वेति॥

इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीमच्छङ्करभगवत्पादकृतौ तृतीयस्याध्यायस्य तृतीयः पादः॥

---

व्याख्यां दूषयति। न चेति। तत्प्रयुक्तत्वाभावे तदाश्रितत्वं कथमित्यत आह। व्याप्येति। इदमेव तेषां यदङ्गाश्रितत्वं यदङ्गाभावे स्वरूपस्य तदङ्गव्यापकत्वमिति॥

किञ्च विदुषां ब्रह्मणैवर्त्विजां पालकत्ववचनाच्च सर्वोपास्तीनां सहप्रयोग इत्याह। दर्शनाच्चेति। ऋग्वेदादिविहिताङ्गलोपे व्याहृतिहोमप्रायश्चित्तादिविज्ञानवत्त्वमेवं वित्त्वम् ब्रह्मण इत्यर्थः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकव्याख्यायां भाष्यरत्नप्रभायां तृतीयाध्यायस्य तृतीयः पादः॥

ओं परमात्मने नमः ।

## पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥

अथेदानीमौपनिषदमात्मज्ञानं किमधिकारिद्वारेण कर्मस्वेवानुप्रविशति आहोस्वित् स्वतन्त्रमेव पुरुषार्थसाधनं भवतीति मीमांसमानः सिद्धान्तेनैव तावदुपक्रमते 'पुरुषार्थोऽतः' इति । अतः अस्मात् वेदान्तविहितादात्मज्ञानात् स्वतन्त्रात्

तृतीयाध्यायस्य चतुर्थपादे आनन्दगिरिकृतटीकैव परिष्कृता ।

ॐ सरस्वत्यै नमः ।

कर्माङ्गशङ्किविद्योक्तिप्रसङ्गात् ब्रह्मज्ञानस्य कर्माङ्गत्वाभावमस्य परिहरति । पुरुषार्थ इति । परापरब्रह्मविद्यानां गुणोपसंहारोक्त्या परिमाणमवधार्य तासां कर्मानपेक्षाणामेव पुरुषार्थसाधनत्वमपवर्गप्राप्तौ निरूप्यते, तत्र कर्मानपेक्षाणामपूर्वां का नामेतिकर्तव्यता, नहि तां विना कारयतेत्यतः श्रद्धा यज्ञादयः श्रवणादयः शमादयश्च विद्योत्पत्त्युपयोगित्व इतिकर्तव्यता निरूप्यन्ते, तदभिप्रेत्याह । अथेति । फलभेदाभेदौ विना न विद्याभेदाभेदौ, न च तौ विना गुणोपसंहारानुपसंहारौ, तेन प्रागेव विद्यानां गुणहेतुत्वे स्थिते प्रथममौपनिषदं आत्मज्ञानमधिकृत्य वादिविप्रतिपत्त्या संशयमाह । औपनिषदमिति । अनेन चात्मज्ञानविशेषणेन शास्त्रश्रुतिसङ्गतिरुच्यते, सिद्धे फलवत्त्वे स्वतन्त्रमेवेदं फलवदिति साधनादध्यायपादसङ्गतिः । पूर्वपक्षे समुच्चयपक्षसिद्धिः, सिद्धान्ते केवलस्य ज्ञानस्य कैवल्यस्य साधनतेति मत्वा पूर्वपक्षमदृष्ट्वा दर्शयन् आदौ सिद्धान्तमाह । सिद्धान्तेनेति । सूत्रस्थां प्रतिज्ञां योजयति । अस्मादिति । तत्र प्रमाणं

पुरुषार्थः सिध्यतीति बादरायण आचार्यो मन्यते कुत एतद-वगम्यते, शब्दादित्याह । तथा हि 'तरति शोकमात्मवित् स यो ह वै तत्परं ब्रह्म वेद ब्रह्मैव भवति ब्रह्मविदाप्नोति परम् आचार्य्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य इति 'य आत्माऽपहतपाप्मा' इत्युपक्रम्य 'स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति आत्मा वा अरे द्रष्टव्यः' इति चोपक्रम्य 'एतावदरे खल्वमृतत्वम्' इत्येवं जातीयका श्रुतिर्विद्यायाः केवलायाः पुरुषार्थ-हेतुत्वं श्रावयति । अथात्र परः प्रत्यवतिष्ठते ॥

## शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः॥२॥

कर्तृत्वेनात्मनः कर्मशेषत्वात् तद्विज्ञानमपि व्रीहिप्रोक्षणा-दिवत् विषयद्वारेण कर्मसम्बन्ध्येवेत्यतस्तस्मिन्नवगतप्रयोजने

---

पृच्छति । कुत इति । सूत्रावयवेनोत्तरमाह । शब्दादित्यादेति प्रमाणम् विवृणोति । तथा हीत्यादिना । सगुणब्रह्मज्ञानस्यापि सा-न्येन पुमर्थहेतुतेति वक्तुं तद्विषयां श्रुतिमाह । य आत्मेति । निर्गु-णविषयं वाक्यान्तरमाह । आत्मेति । उक्तश्रुतिषु विद्याफलयोः साध्य-साधनत्वं न भातीत्याशङ्क्य तयोरेकपुरुषसम्बन्धसामर्थ्यादेव तद्धीरित्याशये-नाह । केवलाया इति । पूर्वपक्षमवतारयति । अथेति । विज्ञानोक्त्य-नन्तरमात्मज्ञाने विषये फलश्रुतिमर्थवादत्वं मीमांसकश्चोदयतीत्यर्थः ॥

पुरुषार्थवाद इत्यत्रार्थग्रहणं तच्छेषोपात्तम् तेन पुरुष संबन्धोऽर्थवाद इति द्रष्टव्यम् । तत्त्वज्ञानं कर्माङ्गकर्तृद्वारा प्रयोगविधिना देवतादिव-

आत्मज्ञाने या फलश्रुतिः साऽर्थवाद इति जैमिनिराचार्य्यो मन्यते। यथान्येषु द्रव्यसंस्कारकर्मसु 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते यत्प्रयाजानुयाजा इज्यन्ते वर्म वा एतत् यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै' इत्येवंजातीयका फलश्रुतिरर्थवादस्तद्वत्। कथं पुनरस्यानारभ्याधीतस्यात्मज्ञानस्य प्रकरणादीनामन्यतमेनापि हेतुना विना क्रतुप्रवेश आशङ्क्यते। कर्तृद्वारेण तद्विज्ञानस्य वाक्यात्क्रतुसम्बन्धः इति चेत्, न, वाक्यविनियोगानुपपत्तेः। अव्यभिचारिणा हि केनचित् द्वारेणानारभ्याधीतानामपि वाक्यनिमित्तः क्रतुसम्बन्धोऽवकल्पते कर्त्ता

---

मानकर्माङ्गकर्त्रन्वयप्रकाशविदत्वात् यजमानसंस्काराञ्जनादिवदिति मत्वा शेषत्वादित्येतद्व्याचष्टे। कर्तृत्वेनेति। तस्यात्मज्ञानं प्रयोगविधिनाऽऽदेयं साध्यफलोक्तिशून्यत्वे सति कर्माङ्गान्वयज्ञानं पर्णमयीत्वादिवदिति प्रयोगः। स्वतन्त्रफलस्य कथं प्रोक्षणादिवत् कर्माङ्गत्वमित्याशङ्क्य पुरुषार्थवादे इत्यस्यार्थमाह। इष्यत इति। वेदार्थजिज्ञासायां तत्त्वनिर्णयार्थं संशयादिमतिभावो गुरोरग्रे शिष्येण दर्शनीयः, गुरुणा च तन्निरासेन तत्त्वमाविष्करणीयमिति शिष्टाचारं दर्शयितुं जैमिनिग्रहणं न प्रतिपन्नतया शिष्यस्य तदयोगात्। फलश्रुतेरर्थवादत्वे सूत्रितं दृष्टान्तं व्याचष्टे। यथेति। पर्णमयीद्रव्ये यजमानस्याञ्जनादिसंस्कारे प्रयाजादिकर्मसु च क्रमेण फलश्रुतिरस्ति यस्येत्यादिना सा च फलश्रुतिर्न फलपरा फलवत्क्रत्वर्थत्वात् पर्णवादेः फलशेषत्वायोगादतः सार्थवाद एवेति पर्णमयीत्वाधिकरणे समर्थितं, तथात्मज्ञानेऽपि फलश्रुतिरर्थवाद एव स्यादित्यर्थः। तद्वदिति। विनियोजकमानाभावात् आत्मधियोऽनङ्गत्वात् तत्र फलश्रुतिर्नार्थवाद इति शङ्कते। कथमिति। प्रकरणादिना क्रत्वसम्बन्धेऽपि जुहूद्वारा पर्णमयीत्वस्य वाक्यात् क्रतुसम्बन्धवदा-

तु व्यभिचारि द्वारं लौकिकवैदिककर्मसाधारणत्वात्, तस्मात् तद्द्वारेणात्मज्ञानस्य क्रतुसम्बन्धसिद्धिरिति। न, व्यतिरेकविज्ञानस्य वैदिकेभ्यः कर्मभ्योऽन्यत्रानुपयोगात् न हि देहव्यतिरिक्तात्मविज्ञानं लौकिकेषु कर्मसूपयुज्यते, सर्वथा दृष्टार्थप्रवृत्त्युपपत्तेः, वैदिकेषु तु देहपातोत्तरकालफलेषु देहव्यतिरिक्तात्मविज्ञानमन्तरेण प्रवृत्तिर्नोपपद्यत इत्युपयुज्यते व्यतिरेकविज्ञानम्। नन्वपहतपाप्मत्वादिविशेषणादसंसार्यात्मविषयमौपनिषदं दर्शनं न प्रवृत्त्यङ्गं स्यात्। न, प्रियादिसं-

---

त्वाधियोऽपि कर्तृद्वारा वेदनवाक्यात् क्रतुसङ्गतिरिति पूर्ववाद्याह। कर्त्रेति। सिद्धान्ती दूषयति। नेति। तदेव विवृणोति। व्यभिचारिणेति। जुह्वादावज्ञाने कर्त्रैवाव्यभिचारि द्वारमित्याशङ्क्याह। कर्त्रेति। तस्याव्यभिचारित्वे फलमाह। तस्मादिति। किं देहातिरिक्तात्मज्ञानस्य कर्माङ्गत्वं विनियोजकाभावात् निरस्यते किंवापहतपाप्मत्वादिविशेषिता संसार्यात्मविषयौपनिषदज्ञानस्येति विकल्पाद्यं पूर्ववादी दूषयति। नेति। तस्य विषयद्वारा तेष्वनुप्रवेशात् न कर्माङ्गत्वं निषेद्धुं शक्यमित्यर्थः। लौकिककर्मभ्योऽपि कर्मत्वात् वैदिककर्मवत् कर्तृद्वारेणातिरिक्तज्ञानापेक्षेति कर्तुः साधारण्यमित्याशङ्क्याह। न हीति। सर्वथेति व्यतिरेकज्ञानाज्ञानयोरित्यर्थः। ननु वैदिकान्यपि कर्माणि कर्मत्वादितरवच्च व्यतिरेकज्ञानापेक्षाणीत्याशङ्क्याह। वैदिकेष्विति। कारीर्यादिनिवृत्त्यर्थं देहपातेत्यादि विशेषणम्। द्वितीयमाशङ्कते। नन्विति। अनुपयोगित्वात् विरोधित्वाच्च तस्य न क्रत्वङ्गतेति भावः। क्रत्वपेक्षितं रूपं स्थितमप्यविवक्षितमित्याह। नेत्यादिना। जायादीनामात्मार्थत्वेन प्रियत्वमुक्त्वा आत्मा द्रष्टव्य इति यदुक्तं तदा जायादिना भोग्येन सूचितस्य संसारिणो भोक्तुरेव द्रष्टव्यत्वात् भोक्तृज्ञानस्य कर्मस्वप्युक्तमतो भोक्तृव्यतिरिक्तमसद्रूपं न श्रौतमित्यर्थः। अपहतपाप्मत्वादिविशेषणस्य भोक्तर्ययुक्तत्वादतिरिक्तात्मरूपमेष्टव्यमि-

चितस्य संसारिण एवात्मनो द्रष्टव्यत्वोपदेशात्, अपहतपाप्मत्वादिविशेषणात्तु स्तुत्यर्थं भविष्यति । ननु तत्र तत्र प्रसाधितमेतदधिकमसंसारि ब्रह्म जगत्कारणं, तदेव संसारिण आत्मनः पारमार्थिकं स्वरूपमुपनिषत्सूपदिश्यत इति । सत्यं प्रसाधितं तस्यैव तु स्थूणानिखननवत् फलद्वारेणाक्षेपप्रतिसमाधाने क्रियेते दार्ढ्याय ॥

## आचारदर्शनात् ॥ ३ ॥

‘जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे’, ‘यक्ष्यमाणो वै भगवन्तोऽहमस्मि’ इत्येवमादीनि ब्रह्मविदामपि अन्यपरेषु वाक्येषु कर्मसम्बन्धदर्शनानि भवन्ति । तथोद्दालकादीनामपि

---

त्यामङ्कयाह । अपहतेति । अन्तादिद्रष्टृत्वमारभ्य तत्र तत्राऽपहतपाप्मत्वाद्युपरता वेदान्तानामुक्ता तत् कथमपहतपाप्मत्वादिकीर्तनस्य स्तुत्यर्थतेति शङ्कते । नन्विति । अधिकमिति विशेषणादार्थिकं द्वैतं वारयति । तदेवेति । संसारिणोऽसंसारीश्वरस्वरूपमिति व्याहृतं मत्वाह । पारमार्थिकमिति । ऐक्ये प्रमाणं पूर्वोक्तं सूचयति । उपनिषत्स्विति । पूर्वपक्षाक्षेपं समाधत्ते । सत्यमित्यादिना । फलद्वारेणेत्यत्रानं वेदान्तानां तत् क्रत्वर्थं येन विचारेणेत्यर्थः । साधितस्यैवाक्षेपसमाधिभ्यां साधनस्य फलमाह । दार्ढ्यायेति ॥

किञ्च जनकादीनां विद्यया सह कर्माचरणदर्शनात् केवलैव विद्या मोक्षहेतुरतः सहानुष्ठानं विद्यायाः स्वातन्त्र्याभावेन कर्माङ्गत्वे लिङ्गमित्याह । आचारेति । एतद् व्याचष्टे । जनको हेति । विदेहानामधिपतिर्जनको नाम राजा बहुदक्षिणसंज्ञेन यज्ञेनाश्वमेधेन वा बहुदक्षिणायुक्तेन पुरा कदाचिदीजे यागं कृतवान् । कैकेयस्य राज्ञो ब्रह्मविदो

पुत्रानुशासनादिदर्शनात् गार्हस्थ्यसम्बन्धोऽवगम्यते । केवलात् चेत् ज्ञानात्पुरुषार्थसिद्धिः स्यात् किमर्थमनेकायाससमन्वितानि कर्म्माणि ते कुर्य्युः, अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् इति न्यायात् ॥

## तच्छ्रुतेः ॥ ४ ॥

'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति च कर्मशेषत्वश्रवणात् विद्यायाः न केवलायाः पुरुषार्थहेतुत्वम् ॥

## समन्वारम्भणात् ॥ ५ ॥

'तं विद्याकर्म्मणी समन्वारभेते' इति च विद्याकर्म्मणोः फलारम्भे साहित्यदर्शनात् न स्वातन्त्र्यं विद्यायाः ॥

---

वाक्यमाह । यक्ष्यमाण इति । विद्यार्थिनः समागतान् प्राचीनशालादीन् भगवन्त इति सम्बोध्याहं यक्ष्यमाणोऽस्मि ततश्च कतिचित् दिनानि वसध्वमिति राजोक्तवानित्यर्थः । उक्तवाक्यानि विद्यार्थानि न कर्माणीत्याशङ्क्याह । अन्येति । इतश्च ब्रह्मविदामपि कर्मसङ्गतिरित्याह । तथेति । आदिपदेन याज्ञवल्क्यादिग्रहः, द्वितीयेन भार्यानुशासनादयो गृह्यन्ते । कर्म कृतं विद्वद्भिरेव कैश्चिदित्येतावता विद्यायाः कर्मापेक्षायोगात् केवलैव सा मुक्तेर्हेतुरित्यत आह । केवलादिति । अल्पायासमुपायं हित्वा न कोऽपि महायासं तमाद्रियेत इत्यत्र लौकिकन्यायमाह । अर्के चेदिति । समीपवचनोऽर्कशब्दः ॥

न केवलं विद्याया लिङ्गादेव कर्माङ्गत्वं, किन्तु तृतीयाश्रुतेरपीत्याह । तदिति । सूत्रार्थं विवृणोति । यदेवेति ॥

इतो न स्वतन्त्रा विद्या पुमर्थहेतुरित्याह । समन्वारम्भणादिति ।

## तद्वतो विधानात् ॥ ६ ॥

'आचार्य्यकुलात् वेदमधीत्य यथाविधानं गुरोः कर्म्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः' इति चैवंजातीयका श्रुतिः समस्तवेदार्थविज्ञानवतः कर्म्माधिकारं दर्शयति। तस्मादपि न विज्ञानस्य स्वातन्त्र्येण फलहेतुत्वम्। नन्वत्राधीत्येत्यध्ययनमात्रं वेदस्य श्रूयते नार्थविज्ञानम्। नैष दोषः दृष्टार्थत्वात्। वेदाध्ययनमर्थावबोधपर्य्यन्तमिति स्थितम्।

## नियमाच्च ॥ ७ ॥

'कुर्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' ॥ इति-

---

सूत्रं विवृणोति। 'तमित्यादिना। तं परलोकं व्रजन्तं विद्याकर्मणी समनुगच्छत इति यावत् ॥

तदस्वातन्त्र्ये लिङ्गान्तरमाह। तद्वत इति। व्याकरोति। आचार्येति। तस्य कुलं गृहमुपनयनं कृत्वा तत्राध्ययनमात्रं गुरोः शुश्रूषारूपं कर्म्म विधायातिशेषेण शिष्टेन कालेन यथाविधानं पवित्रपाणित्वप्राङ्मुखत्वादिविधानमतिक्रम्य वेदमधीत्यानन्तरमभिसमावृत्य व्रतविसर्गं कृत्वा दारानाहृत्य कुटुम्बे गार्हस्थ्ये स्थितः शुचौ देशे स्वाध्यायाध्ययनं कुर्वन् धर्म्यान्तराणि च विहितानि च यथाशक्ति कुर्वाणो ब्रह्मलोकमभिसम्पद्यत इत्यर्थः। अध्ययनशब्दस्य यथाश्रुतमर्थं गृहीत्वा शङ्कते। नन्विति। अध्ययनविधेरवघातादिविधिवद्दृष्टार्थत्वादर्थावबोधान्तो व्यापारोऽस्तीति मत्वा मन्त्रे कर्माधिकारमभिप्रेत्याह। नेत्यादिना ॥

इतश्च न स्वतन्त्रा विद्या पुमर्थहेतुरित्याह। नियमाच्चेति। नियमं विभजते। कुर्वन्निति। इह देहे शतं समाः शतसंख्याकान् संवत्सरान्

तथा 'एतद्वै जरामर्य्यं सत्रं यदग्निहोत्रं जरया वा ह्येवास्मान् मुच्यते मृत्युना वा' इत्येवंजातीयकान्नियमादपि कर्म्मशेषत्वं विद्याया इत्येवं प्राप्ते प्रतिविधत्ते॥

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्॥८॥

तुशब्दात्पक्षो विपरिवर्त्तते। यदुक्तं 'शेषत्वात्पुरुषार्थवादः' इति वे०सू०३।४।२] तन्नोपपद्यते। कस्मात्, अधिकोपदेशात्। यदि संसार्य्येवात्मा शारीरः, कर्त्ता भोक्ता च शरीरमात्रव्यतिरेकेण वेदान्तेषूपदिष्टः स्यात्ततो वर्णितेन प्रकारेण फलश्रुतेरर्थवादत्वम्, अधिकस्तु शारीरादात्मनोऽसंसारीश्वरः कर्तृत्वादिसंसारधर्मरहितोऽपहतपाप्मत्वादिविशेषणः परमात्मा वेद्यत्वे-

---

जिजीविषेत् तत्कर्म्माणि कुर्व्वन्नेवेति नियमविधिः,एवन्त्वयि नरे वर्त्तमाने त्वय्यशुभं कर्म्म न लिप्यते, तेन त्वं न लिप्यसे इति यावत्। इतश्च प्रकारादन्यथा प्रकारान्तरं नास्ति यतो न कर्म्मलेपः स्यादित्यर्थः। नियमान्तरमाह। तथेति। जरामर्य्यं जरामरणावधिकम्। तदेव विवृणोति। जरयेति। स्तुत्यादिभिरात्मधियः सिद्धे कर्म्माङ्गत्वे तत्फलेनैव फलवत्त्वमित्युपसंहर्तुमितीत्युक्तम्। पूर्व्वपक्षमनूद्य सिद्धान्तयति। एवमिति।

सूत्रं योजयति। तुशब्दादिति। पक्षविपरिवर्त्तमानमेव पक्षमनूद्य दर्शयति। यदिति। अनुपपत्तिहेतुं प्रश्नपूर्व्वकमाह। कस्मादिति। अधिकोपदेशं व्यतिरेकतो दर्शयति। यदीति। यः कर्त्ता कर्म्माङ्गं स्यात् वेदान्तवेद्यो यस्य ब्रह्म तद्वेद्यं न तत्कर्म्माङ्गमतस्तज्ज्ञानस्य कुतः स्वतन्त्र-श्रुतस्तरां फलश्रुतेरर्थवादतेत्यर्थः। ब्रह्मात्मधीर्न क्रतुप्रयोगविधिविनियोगादेया तद्विरोधित्वाद् दारीयमाणोदितहोमविरोध्यनुदितहोमवदिति स-

नोपदिश्यते वेदान्तेषु। न च तद्विज्ञानं कर्मणां प्रवर्तकं भवति प्रत्युत तत्कर्माण्युच्छिनत्तीति वक्ष्यति 'उपमर्दं च' इत्यत्र [वे० सू०३।४।१६]। तस्मात् 'पुरुषार्थोऽतः शब्दात्' इति [वे०सू०३।४।१)। यन्मतं भगवतो बादरायणस्य तत्तथैव तिष्ठति न शेषत्वप्रभृतिभिर्हेत्वाभासैश्चालयितुं शक्यते। तथा हि तमधिकं शारीरादीश्वरमात्मानं दर्शयन्ति श्रुतयः 'यः सर्वज्ञः सर्ववित्' 'भीषास्माद्वातः पवते भीषोदेति सूर्यः' 'महद्भयं वज्रमुद्यतम्' 'एतस्य वा अक्षरस्य प्रशासने गार्गि' 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' इत्येवमाद्याः। यत्तु प्रियादिसंसूचितस्य संसारिण एवात्मनो वेद्यतयानुकर्षणम् 'आत्मनस्तु कामाय सर्वं प्रियं भवति' 'आत्मा वा अरे द्रष्टव्यः' 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो य एषोऽक्षिणि पुरुषो दृश्यते' इत्युपक्रम्य 'एतन्त्वेव ते भूयोऽनुव्याख्यास्यामि' इति चैवमादि. तदपि 'अस्य महतो भूतस्य निःश्वसितमेतत् यद्-

---

त्याह। प्रत्युतेति। बादरायणस्येत्यादि व्याचष्टे। तस्मादिति। उक्तात्मज्ञानस्य क्रतुशेषत्वायोगस्तच्छब्दार्थः। अधिकोपदेशाधिकरणमाक्षिप्य तद्दर्शनादित्यनेन प्रत्याह। तथा हीति। कल्पितं रूपं हित्वाऽन्यदात्मरूपमनिर्दिष्टमित्युक्तं तदाह। यत्त्विति। आत्मनस्तु कामायेत्युपक्रम्यात्मा वा अरे द्रष्टव्य इति वाक्यं ब्रह्मोपदिदिक्षायां सत्यामेव ब्रह्मात्मैक्याभिप्रायमित्यस्य वाक्यशेषमाह। अस्येति। यः प्राणेनेत्यादिवाक्यमप्यैक्यपरम् इत्यस्य वाक्यशेषं दर्शयति। योऽयमात्मेति। य एषोऽक्षिणीत्यादिवाक्यमपि तथेत्यक्षिपदं शेषानुगुण्यमाह। तदपीति। उक्तैः सर्वैः संसारिणो यदधिकं ब्रह्म तस्योपदिदिक्षायां सत्यामेव ब्रह्मणो जीवस्यात्मनो भेदाभावधिया द्रष्टव्यादिवाक्यमिति कल्पनपोषितमात्मरूपं वेदान्तेषु विव-

ग्वेदो यजुर्वेदः' 'योऽशनायापिपासे शोकं मोहं जरां मृ-
मत्येति परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उ-
त्तमः पुरुषः' इत्येवमादिभिर्वाक्यरूपैः सत्यामेवाधिकोपदि
चायां नात्यन्तभेदाभिप्रायमित्यविरोधः, पारमेश्वरमेव हि
शारीरस्य पारमार्थिकं स्वरूपमुपाधिकृतन्तु शारीरत्वं 'तत्त्व-
मसि नान्योऽतोऽस्ति द्रष्टा' इत्येवमादिश्रुतिभ्यः। सर्वञ्चैतद्
विस्तरेणास्माभिः पुरस्तात् तत्र तत्र निर्णीतम्॥

## तुल्यन्तु दर्शनम्॥ ९॥

यदुक्तमाचारदर्शनात् कर्मशेषो विद्येत्यत्र ब्रूमः, तुल्य-
माचारदर्शनमकर्मशेषत्वेऽपि विद्यायाः। तथा हि श्रुतिर्भवति
'एतद्ध स्म वै तद्विद्वांस आहुः ऋषयः कावषेयाः किमर्था वय-
मध्येष्यामहे किमर्था वयं यक्ष्यामहे एतद्ध स्म वै तत् पूर्वे वि-

---

च्छितमित्युपगमे न कश्चित् विरोधोऽस्तीति योजना। कुतो जीवब्रह्म
मिथो विरोधः इत्याशङ्क्य तात्त्विको विरोधो नास्तीत्याह। पारमेश्वर-
मिति। प्रातिभासिकस्तु विरोधस्तात्त्विकाभेदाविरोधीति स्वरूप-
उपाधीति। जीवस्य तात्त्विकं रूपं ब्रह्मैवेत्यत्र श्रुतिसंवादमाह। तत्त्व-
मिति। सम्पदादिविषयं तत्त्वमादिवाक्यं न वस्तुविषयमित्याशङ्क्याह।
सर्वञ्चेति॥

परोक्तं लिङ्गदर्शनं प्रत्याह। तुल्यन्त्विति। उक्तमनूद्य सूत्रमुत्तरत्वेन
योजयति। यदित्यादिना। इतश्च विद्यायाः न शेषत्वमाह। वाज-
सनेयिनाम्। ऋष्यादिशब्देन शुकादयो गृह्यन्ते। कथं तेषामकर्मनिष्ठा
तदाह। एतावदिति। उभयथा लिङ्गदर्शने संशयमापाद्य परोक्त-
लिङ्गानामन्यथासिद्धिं वक्तुमारभते। अपि चेति। तत्र प्रथमम्

द्वांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यं चरन्ति' इत्येवंजातीयका। याज्ञवल्क्यादीनामपि ब्रह्मविदामकर्मनिष्ठत्वं दृश्यते 'एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राज, इत्येवमादिश्रुतिभ्यः। अपि च 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' इत्येतल्लिङ्गदर्शनं वैश्वानरविद्याविषयं, सम्भवति च सोपाधिकायां ब्रह्मविद्यायां कर्मसाहित्यदर्शनं न त्वत्रापि कर्माङ्गत्वमस्ति प्रकरणाद्यभावात्। यत् पुनरुक्तं 'तच्छ्रुतेः' इत्यत्र ब्रूमः॥

असार्वत्रिकी॥ १०॥

'यदेव विद्यया करोति' इत्येषा श्रुतिर्न सर्वविद्याविषया प्रकृतविद्याभिसम्बन्धात्, प्रकृता चोद्गीथविद्या 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यत्र [छा०]॥

---

इत्यादिलिङ्गदर्शनस्यान्यथासिद्धिमाह। यक्ष्यमाण इति। तत्रापि विद्यात्वान्न कर्मसाहित्यमन्यथा ब्रह्मविद्याया अपि तत्सङ्गादित्याशङ्क्याह। सम्भवतीति। तर्हि वैश्वानरविद्याया न स्वातन्त्र्येण फलवत्त्वं कर्माङ्गत्वाङ्गीकारादित्यत आह। न त्विति। येषाञ्च ब्रह्मविदामपि कर्म दृश्यते, न तत्तेषां कर्म तद्धि चोदनालक्षणं तेषाञ्चाश्रमाभिमानाभावे च चोदनाभावात् कथञ्चिदनुवर्त्तमानमपि तदाभासमात्रमिति भावः। परोक्तां श्रुतिमनूद्य तदुत्तरत्वेन सूत्रमवतारयति। यदिति॥

तद्विभजते। यदेवेति। विद्याशब्दस्य सामान्यविषयस्य विशेषाकाङ्क्षस्य प्राकरणिकविशेषेण पर्यवसितत्वादिति हेतुमाह। प्रकृतेति। आत्मविषयत्वाशङ्कां प्रत्याह। प्रकृता चेति॥

## विभागः शतवत् ॥ ११ ॥

यदप्युक्तं 'तं विद्याकर्मणी समन्वारभेते' इत्येतत् समन्वारम्भवचनमस्वातन्त्र्ये विद्याया लिङ्गमिति तत्प्रत्युच्यते, विभागोऽत्र द्रष्टव्यः विद्या अन्यं पुरुषं समन्वारभते कर्मान्यमिति शतवत्, यथा शतमाभ्यां दीयतामित्युक्ते विभज्य दीयते पञ्चाशदेकस्मै पञ्चाशदपरस्मै तद्वत्। न चेदं समन्वारम्भवचनं मुमुक्षुविषयम् 'इति नु कामयमानः' इति संसारिविषयत्वोपसंहारात्, 'अथ अकामयमानः' इति च मुमुक्षोः पृथगुपक्रमात्। तत्र संसारिविषया विद्या विहिता प्रतिषिद्धा च परिशेषाभावात्, कर्मापि विहितं प्रतिषिद्धञ्च यथाप्राप्तानुवादित्वात्। एवं सत्यविभागेनापीदं समन्वारम्भवचनमवकल्पते। यच्चोक्तं 'तद्वतो विधानात्' इत्यत्र उत्तरं पठति॥

---

परकीयं सिद्धान्तरं दूषयति। विभाग इति। चोद्यमनूद्योत्तरत्वेन सूत्रं व्याचष्टे। यद्यपीत्यादिना। सामान्यश्रुतौ कथं विभागः स्यात्तत्र दृष्टान्तमाह। शतवदिति। समन्वारम्भवचनस्य मुमुक्षुविषयत्वं उपेत्य कर्मसाहित्येन तल्लिङ्गं विभागादित्युक्तं, इदानीममुमुक्षुविषयत्वादविभागोऽपि न दूषणमित्याह। न चेति। तस्य मुमुक्षुविषयत्वे हेत्वन्तरमाह। अथेति। संसारिविषये तं विद्येत्यादिवाक्ये विद्याशब्दार्थमाह। तत्रेति। उद्गीथादिविषया विहिता विद्या प्रतिषिद्धा च नग्नस्त्रीदर्शनादिरूपा। तथाभूतकर्मसाहचर्यादपि तदविशेषं विद्येत्याह। कर्मापीति। प्रकृते वाक्येऽपि विद्याकर्मणोरविशेषोपादाने हेतुमाह। यथेति। उक्तार्थं वाक्यस्य संसारिविषयत्वे फलितमाह। एवमिति। सिद्धान्तरमनूद्य सूत्रमादत्ते। यच्चेति। यच्चैतदुक्तमित्यर्थः।

## अध्ययनमात्रवतः ॥ १२ ॥

'आचार्य्यकुलात् वेदमधीत्य' इत्यत्राध्ययनमात्रस्य श्रवणादध्ययनमात्रवत एव कर्मविधिरित्यध्यवस्यामः। नन्वेवं सत्यविद्वत्त्वादनधिकारः कर्मसु प्रसज्येत। नैष दोषः, न वयमध्ययनप्रभवं कर्म्मावबोधनमधिकारकारणं वारयामः किं तर्ह्यौपनिषदमात्मज्ञानं स्वातन्त्र्येणैव प्रयोजनवत् प्रतीयमानं न कर्म्माधिकारकारणतां प्रतिपद्यत इत्येतावत् प्रतिपादयामः, यथा च न क्रत्वन्तरज्ञानं क्रत्वन्तराधिकारेणापेक्ष्यते एवमेतदपि द्रष्टव्यमिति। यदप्युक्तं 'नियमाच्च' इति अत्राभिधीयते॥

## नाविशेषात् ॥ १३ ॥

'कुर्वन्नेवेह कर्म्माणि जिजीविषेत्' इत्येवमादिषु नियमश्रवणेषु न विदुष इति विशेषोऽस्ति अविशेषेण नियमविधानात्॥

---

सूत्रं विवृणोति। आचार्य्येति। आत्मपदस्थेनार्थज्ञानमात्रं व्यवच्छिद्यतमिति मन्वानः शङ्कते। नन्विति। अविद्वत्त्वात् विद्याहीनत्वादिति यावत्। आत्मपदगमात्मज्ञानापेक्षं न कर्मावबोधापेक्षं इत्याह। नेत्यादिना। वेदार्थत्वादात्मनः तज्ज्ञानमपि कर्मावबोधवदधिकारेऽपेक्षितव्यमित्याशङ्क्याह। यथेति। एवंसूत्रव्याख्यायामाभाषितिमन्दः। सिद्धान्तरमन्द्य सूत्रान्तरमादत्ते। यदपीति॥

अविद्वद्विषयं नियमविधानमिति व्याचष्टे। कुर्वन्निति॥

## स्तुतयेऽनुमतिर्वा ॥ १४ ॥

'कुर्वन्नेवेह कर्माणि' इत्यत्रापरो विशेष आख्यायते, यद्यप्यत्र प्रकरणसामर्थ्यात् विद्वानेव कुर्वन्निति सम्बध्यते, तथापि विद्यास्तुतये कर्मानुज्ञानमेतत् द्रष्टव्यं, 'न कर्म लिप्यते नरे' इति हि वक्ष्यति। एतदुक्तं भवति यावज्जीवं कर्म कुर्वत्यपि पुरुषे विदुषि न कर्म लेपाय भवति विद्यासामर्थ्यादिति। तदेवं विद्या स्तूयते॥

## कामकारेण चैके ॥ १५ ॥

अपि चैके विद्वांसः प्रत्यक्षीकृतविद्याफलाः सन्तस्तदवष्टम्भात् फलान्तरसाधनेषु प्रजादिषु प्रयोजनाभावं परामृशन्ति कामकारेणेति। श्रुतिर्भवति वाजसनेयिनाम् 'एतद्ध स्म वै तत् पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां

---

विद्वद्विषयत्वमुपेत्य परिहारान्तरमाह। स्तुतय इति। एवं सति प्रकरणमभग्नमिति मत्वा सूत्रं विभजते। कुर्वन्नेवेति। विशेषो विशदयति। यद्यपीति। स्तुत्यर्थं कर्मानुष्ठानमित्यत्र वाक्यशेषमनुकूलयति। नेति। तथापि कथं स्तुतिस्तत्राह। एतदिति। एवं कर्म कुर्वत्यपि त्वयि नेतो ब्रह्मभावात् विद्यागम्यादन्यथा संसारापत्तिरस्ति न कर्म लिप्यते इति योजना। स्तुतीत्युपसंहरति। तदेवमिति॥

पूर्वपक्षे हेतुनैवसमाप्य स्वपक्षे हेत्वन्तरमाह। कामेति। इतश्च विद्याया न कर्माङ्गतेति चकारार्थमाह। अपि चेति। लोकात् अर्थ-साधनप्रजादित्यागलिङ्गादपि विद्यायाः स्वातन्त्र्यमिति हेत्वन्तरं स्फोरयति। एक इति। येषां नोऽस्माकमयमपरोक्षः स्वात्माऽयं लोकः

नोऽयमात्माऽयं लोकः' इति । अनुभवारूढमेव च विद्याफलं न क्रियाफलवत् कालान्तरभावीत्यसकृदावेदितम्, अतोऽपि न विद्यायाः कर्मशेषत्वं नापि तद्विषयायाः फलश्रुतेरयथार्थत्वं शक्यमाश्रयितुम् ॥

## उपमर्दं च ॥ १६ ॥

अपि च कर्माधिकारहेतोः क्रियाकारकफललक्षणस्य समस्तस्य प्रपञ्चस्याविद्याकृतस्य विद्यासामर्थ्यात् स्वरूपोपमर्दमामनन्ति 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् तत् केन कं जिघ्रेत्' इत्यादिना । वेदान्तोदितात्मज्ञानपूर्विकां तु कर्माधिकारसिद्धिं प्रत्याशासानस्य कर्माधिकारोच्छित्तिरेव प्रसज्येत, तस्मादपि स्वातन्त्र्यं विद्यायाः ॥

---

तावन्तं फलन्ते वयं किं प्रजया करिष्याम इति लिङ्गात्मिकोक्तादि न श्रुतवन्न इत्यर्थः । मोक्षस्यादृष्टफलत्वात् अयं कृत्स्नलिङ्गबलात् प्रजादित्यागसिद्धिरित्याह । अनुभवेति । ननु अधीनं क्रतुमयोगविधिना देवाभवनुकम्पितोऽपि फलान्तरयोगित्वात् नोदीरयन्निति मत्वाह । अतोऽपीति ॥

अधिकोपदेशादित्यत्रात्मनोऽज्ञानादाध्यस्तं तद्धीनं कर्माङ्गमित्युक्तमिदानीमपवर्गक्रियादिविभागोपमर्दकत्वादपि न कर्माङ्गमित्याह । उपमर्दं चेति । इतश्चात्मधीर्न कर्माङ्गमिति चकारार्थमाह । अपि चेति । वेदान्तं स्फोरयति । कर्मेति । विद्यासामर्थ्यात् प्रपञ्चोपमर्दे फलितमाह । वेदान्तेति । आत्मज्ञानस्य दीपमानकर्माङ्गविरोधित्वे फलितं निगमयति । तस्मादिति ॥

## ऊर्द्धरेतःसु च शब्दे हि ॥ १७ ॥

ऊर्द्धरेतःसु चाश्रमेषु विद्या श्रूयते, न च तत्र कर्माङ्गत्वं विद्याया उपपद्यते कर्माभावात्, न ह्यग्निहोत्रादीनि वैदिकानि कर्माणि तेषां सन्ति। स्यादेतत् ऊर्द्धरेतस आश्रमा न श्रूयन्ते वेद इति तदपि नास्ति तेऽपि हि वैदिकेषु शब्देष्ववगम्यन्ते त्रयो धर्मस्कन्धाः 'ये चेमेऽरण्ये श्रद्धातप इत्युपासते' 'तपःश्रद्धे ये ह्युपवसन्त्यरण्ये' 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति, "ब्रह्मचर्यादेव प्रव्रजेत्' इत्येवमादिषु। प्रतिपन्नाप्रतिपन्नगार्हस्थ्यानामप्राकृतानपाकृतर्णानाञ्चोर्द्धरेतस्त्वं श्रुतिस्मृतिप्रसिद्धं तस्मादपि स्वातन्त्र्यं विद्याया इति॥

---

विद्यास्वातन्त्र्ये हेत्वन्तरमाह। ऊर्द्धरेतःस्विति। विद्याकर्मणो नाङ्गाङ्गिभूते मिथो व्यतिरेकित्वादनुगमननैष्ठिकव्रतवदिति मत्वा दोषयति। ऊर्द्धेत्यादिना। तथापि कथं कर्माङ्गत्वं विद्याया स्यादित्यत्राह। न चेति। तेषामपि स्नानादिकर्मास्तीत्याशङ्क्याह। न हीति। बाधितानुवृत्त्या तत्सद्भावेऽपि वैदिकाग्निहोत्राद्यभावात् क्रत्वङ्गज्ञानस्येत्यर्थः। शब्दे हीति सूत्रावयवव्याख्यार्थमाशङ्कामाह। स्यादिति। सूत्रावयवेनोत्तरमाह। तदपीति। कर्मानधिकृतान्धादिविषयं पारिव्राज्यमित्याशङ्क्याह। प्रतिपन्नेति। ऋणापाकरणे श्रुतिस्मृतिक्रस्त्वस्यैवापाकृतर्णत्रयस्यैवोर्द्धरेतःप्रवृत्तिरनेनासमाचारोपवर्णितं पारिव्राज्यमित्याशङ्क्याह। अपाकृतेति। तावद्विधिश्रुतिविरोधेऽवसरश्रुतिस्तत्रोर्बाध्यतेत्यभिप्रेत्योक्तम्। श्रुतीति। श्रुतिर्ब्रह्मचर्यादेव प्रव्रजेदित्याद्या दर्शिता, स्मृतिस्तु यस्याश्रमविकल्पमेके ब्रुवते यदि केवलमाश्रयेदित्याद्योदाहार्या। ऊर्द्धरेतःस्वाश्रमेषु विद्यायाः विधेः फलितमाह। तस्मादिति। तस्याः स्वातन्त्र्ये केवलायाः विद्याकृतिः फलहेतुत्वमितीत्युक्तम्॥

## परामर्शं जैमिनिरचोदना चापवदति हि ॥१८॥

"त्रयो धर्मस्कन्धाः" इत्यादयो ये शब्दा ऊर्ध्वरेतसामाश्रमाणां सद्भावायोदाहृताः न ते तत्प्रतिपादनाय प्रभवन्ति, यतः परामर्शमेषु शब्देष्वाश्रमान्तराणां जैमिनिराचार्य्यो मन्यते न विधिं, कुतः, न ह्यत्र लिङादीनामन्यतमश्चोदनाशब्दोऽस्ति। अर्थान्तरपरत्वञ्चैतेषां प्रत्येकमुपलभ्यते, त्रयो धर्मस्कन्धा इत्यत्र तावद्यज्ञोऽध्ययनं दानमिति प्रथमः, तप एव द्वितीयः, ब्रह्मचार्य्याचार्य्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्य्यकुलेऽवसादयन् सर्व एते पुण्यलोका भवन्तीति परामर्शपूर्वकमाश्रमाणामनात्यन्तिकफलत्वं सङ्कीर्त्यात्यन्तिकफलतया ब्रह्मसंस्थता स्तूयते 'ब्रह्मसंस्थोऽमृतत्वमेति' इति।

---

पूर्वाधिकरणावान्तरसङ्गत्याक्षेपलक्षणां सङ्गतिं विवक्षन्नाक्षिपति। परामर्शमिति। ऊर्ध्वरेतःशब्दितं पारिव्राज्यं नानुष्ठेयमनुष्ठेयं चेति भ्रान्तिप्रमाणमूलत्वाभ्यां सन्देहे पूर्वपक्षयति। त्रय इति। अत्र शास्त्रीयसम्यग्ज्ञानस्यान्तरङ्गसाधनफलत्वादनुष्ठेयत्वमुच्यत इति स्फुटा पादादिसङ्गतिः। पूर्वपक्षे पारिव्राजकं विद्यार्थविधेर्विभ्रमत्वाच्छास्त्रः न स्वातन्त्र्यसिद्धिः, सिद्धान्ते तच्छास्त्रस्य प्रामाणिकत्वात् तत्सिद्धिरिति [illegible] परामर्शं जैमिनिरिति व्याख्याय हेत्वाकाङ्क्षायामचोदनेति हेतुत्वेन व्याचष्टे। कुत इति। पूर्वं प्रविष्टमात्र इतिवत् कल्प्यतां विधिरित्याशङ्क्य। ब्रह्मसंस्थत्वादिविधिपरत्वात् वाक्यजातस्य नैवमिति चशब्दार्थमाह। अर्थान्तरेति। तत्र ब्रह्मसंस्थत्वादिविधिपरत्वं त्रय इत्यादिवाक्यस्य साधयति। त्रय इत्यादिना। अन्यत्र विहितस्यान्यत्र परामर्शादन्यत्र विधिकल्पनादिरेव कल्पना दुर्घटा युज्यते। नन्विति। परामर्शस्यानुवादात्मकस्य पूर्वापरापेक्षत्वात् तद्वशादाश्रमसंसिद्धौ

ननु परामर्शेऽप्याश्रमा गम्यन्त एव, सत्यं गम्यन्ते, स्मृत्याचाराभ्यान्तु तेषां प्रसिद्धिर्न प्रत्यक्षायाः श्रुतेः, अतश्च प्रत्यक्षश्रुतिविरोधे सत्यनादरणीयास्ते भविष्यन्त्यनधिकृतविषया वा। ननु गार्हस्थ्यमपि सहैवोर्द्ध्वरेतोभिः परामृष्टं यज्ञोऽध्ययनं दानमिति प्रथम इति, सत्यमेवं तथापि यो गृहस्थं प्रत्येवाग्निहोत्रादीनां कर्मणां विधानात् श्रुतिप्रसिद्धमेव तदस्तित्वं, तस्मात् स्तुत्यर्थ एवायं परामर्शो न चोदनार्थः। अपि चापवदति हि प्रत्यक्षा श्रुतिराश्रमान्तरं 'वीरहा वा एष देवानां योऽग्निमुद्वासयते आचार्य्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीर्नापुत्रस्य लोकोऽस्तीति तत् सर्वे पशवो विदुः' इत्येवमाद्या। तथा 'ये चेमेऽरण्ये श्रद्धातप इत्युपासते तपःश्र-

---

करोति। सत्यमिति। तर्हि तद्विषयश्रुतेरन्यत्राश्रितत्वात् गौरवमित्याशङ्क्याह। स्मृतीति। तयोरपि श्रुतिमूलत्वात् विधियुक्तश्रुतिकल्पनादिहैव तत्कल्पने लाघवमित्याशङ्क्याह। अतश्चेति। प्रत्यक्षश्रुतिर्यावज्जीवादिश्रुतिः। निरालम्बनत्वात् कथमपि सालम्बनत्वं दुर्बलमिति पक्षान्तरमाह। अनधिकृतेति। येऽन्धादयो नित्यादिकर्मस्वनधिकृतास्तद्विषया वा आश्रमान्तरस्मृत्याचारा इत्यर्थः। आश्रमान्तरापरामर्शेऽपि गार्हस्थ्यवत् प्रामाणिकत्वसिद्धिरस्त्विति शङ्कते। नन्विति परामर्शः स्वमङ्गीकरोति। सत्यमिति। तर्हि प्रामाणिकत्वे तुल्ये धर्मोऽपि तुल्यं स्यादित्याशङ्क्य न परामर्शमात्रात् गार्हस्थ्यसिद्धिरपि तु प्रत्यक्षश्रुतिविधानादिति विशेषमाह। तथापीति। गार्हस्थ्यमेव श्रौतमिति स्थिते ब्रह्मसंस्थतास्तुत्यर्थमेव त्रय इत्याद्याश्रमान्तरवचनमित्युपसंहरति। तस्मादिति। निन्द्यमानत्वात् आश्रमान्तरमननुष्ठेयमित्याह। अपि चेति। तत्र सूत्रावयवं योजयति। अपवदतीति। तत्र

ये ह्युपवसन्त्यरण्ये' इति च देवयानोपदेशो नाश्रमान्तरोपदेशः। सन्दिग्धञ्चाश्रमान्तराभिधानं 'तप एव द्वितीयः' इत्येवमादिषु। तथा 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इति लोकसंस्तवोऽयं न पारिव्राज्यविधिः। ननु ब्रह्मचर्य्यादेव प्रव्रजेदिति विस्पष्टमिदं प्रत्यक्षं पारिव्राज्यविधानं जाबालानां। सत्यमेवमेतं तु अनपेक्ष्य त्वेतां श्रुतिमयं विचार इति द्रष्टव्यम्॥

अनुष्ठेयं बादरायणः साम्यश्रुतेः॥ १९॥

अनुष्ठेयमाश्रमान्तरं बादरायण आचार्य्यो मन्यते, वेदे श्रवणादग्निहोत्रादीनाञ्चावश्यानुष्ठेयत्वात्तद्विरोधादनधिकृतानुष्ठेयमाश्रमान्तरमिति चेमां मतिं निराकरोति गार्हस्थ्याव-

---

त्रय इत्यादिवाक्यस्यान्यार्थत्ववत् वाक्यान्तरस्यापि तद्वदेवार्थान्तरपरत्वमाह। तथेति। ते चिरजामभिसम्भवन्ति सूर्यद्वारेण ते विरजाः प्रयान्तीति वाक्यशेषाद्देवयानोक्तिपरं तदित्यर्थः। आश्रमवाचकशब्दाभावाच्चार्थान्तरपरत्वमित्याह। सन्दिग्धं चेति। प्रव्रजन्तीत्याश्रमवाचिशब्ददृष्टेरनुष्ठेयं पारिव्राज्यं इत्याशङ्क्याह। तथेति। एवं विशिष्टोऽयमात्मलोको येनेदं साक्षात्कर्तुमिच्छन्तो दुरनुष्ठेयामपि प्रव्रज्यां कुर्वन्तीति श्रुतिर्न तद्विषयो विधिर्वर्त्तमानोपदेशादित्यर्थः। पूर्वपक्षमाक्षिपति। नन्विति। प्रत्यक्षविधानमङ्गीकरोति। सत्यमिति। तर्हि पूर्वपक्षसिद्धिरित्याशङ्क्य नास्तीदं विधानमिति मत्वा चिन्तेयमित्याह। अनपेक्ष्येति॥

सिद्धान्तसूत्रमवतार्य व्याकरोति। अनुष्ठेयमिति। पूर्वपक्षमनुभाष्य तद्विरोधमनित्तां विवृणोति। वेद इति। तत्र प्रश्नपूर्वकं हेतुमाह। कुत इति। तत्राक्षरार्थमाह। समाना श्रुतीति। तत्रैव तात्पर्यार्थमाह।

देवाश्रमान्तरमप्यनिच्छता प्रतिपत्तव्यमिति मन्यमानः। कुतः? साम्यश्रुतेः; समाना हि गार्हस्थ्येनाश्रमान्तरस्य परामर्शश्रुतिर्दृश्यते 'त्रयो धर्मस्कन्धाः' इत्याद्या, यथेह श्रुत्यन्तरविहितमेव गार्हस्थ्यं परामृष्टमेवमाश्रमान्तरमपीति प्रतिपत्तव्यम्, यथा च शास्त्रान्तरप्राप्तयोरेव निवीतप्राचीनावीतयोः परामर्श उपवीतविधिपरे वाक्ये, तस्मात् तुल्यमनुष्ठेयत्वं गार्हस्थ्येनाश्रमान्तरस्य। तथा 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इत्यस्य वेदानुवचनादिभिः समभिव्याहारः 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इत्यस्य च पञ्चाग्निविद्यया। यत्तूक्तं 'तप एव द्वितीयः' इत्यादिष्वाश्रमान्तराभिधानं सन्दिग्धमिति।

---

यथेति। त्रयो धर्मस्कन्धा इत्यत्रोर्ध्वरेतसः आश्रमाः श्रुत्यन्तरसिद्धा एव परामृश्यन्ते एतद्वाक्यपरामृष्टत्वात् गार्हस्थ्यवदित्यर्थः। परामृष्टस्य विधिपूर्वकत्वे दृष्टान्तमाह। यथेति। निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुत इत्यत्रोपवीतविधिपरे वाक्ये विध्यन्तरसिद्धयोरेव निवीतप्राचीनावीतयोर्यथा परामर्शः तथात्रापीत्यक्षरार्थः। निवीतं मनुष्याणामित्यादिदर्शपूर्णमासयोः श्रुतं, तत्रोपवीतं विधीयत एवेतरयोस्तु विधिरर्थवादो वेति संशये सत्यपूर्वार्थलाभात् मनुष्यपदस्य च मनुष्यप्राधान्यवादित्वादातिथ्ये कर्मणि निवीतं पित्र्ये च प्राचीनावीतमिति प्राप्ते मनुष्याणां क्रियासु सौकर्याय कण्ठलम्बनधारणस्य वा देहार्थयत्नस्य वा निवीतस्य प्राप्तत्वात् प्राचीनावीतस्य च पित्र्ये वाक्यान्तरेण प्राप्तेस्तदनुवादेन निवीतमित्यादिः उपवीतस्तोमर्थवाद इति प्राच्यां मीमांसायां स्थितं, तथैव परामर्शश्रुतावपि त्रय इत्याद्यायां गार्हस्थ्यवदाश्रमान्तरमपि विहितमेवान्यत्र परामृश्यते तस्य विध्यपेक्षत्वादित्यर्थः। साम्यश्रुतिफलमाह। तस्मादिति। त्रय इत्या-

नैष दोषः, निश्चयकारणसद्भावात्। त्रयो धर्मस्कन्धा इति हि स्कन्धत्रित्वं प्रतिज्ञातं न च यज्ञादयो भूयांसो धर्मा उत्पत्तिभिन्नाः सन्तोऽन्यत्राश्रमसम्बन्धात् त्रित्वेऽन्तर्भावयितुं शक्यन्ते। तत्र यज्ञादिलिङ्गो गृहाश्रम एको धर्मस्कन्धो निर्दिष्टः, ब्रह्मचारीति च स्पष्ट आश्रमनिर्देशः तप इत्यपि कोऽन्यस्तपःप्रधानादाश्रमाद्धर्मस्कन्धोऽभ्युपगम्येत 'ये चेमेऽरण्ये' इति चारण्यलिङ्गात् श्रद्धातपोभ्यामाश्रमसम्प्रतीतिः। तस्मात् परामर्शेऽप्यनुष्ठेयमाश्रमान्तरम्॥

## विधिर्वा धारणवत्॥ २०॥

विधिर्वायमाश्रमान्तरस्य न परामर्शमात्रं। ननु विधि-

---

श्रमान्तरस्य गार्हस्थ्येन साम्यश्रुतिरुक्ता सम्प्रति पारिव्राज्यवाक्ये साम्यश्रुतिमाह। तद्वेति। अस्येति पारिव्राज्योक्तिः विधेयवाचित्वादस्यापि विधेयतेत्यर्थः। वाक्यान्तरेऽपि साम्यश्रुतिमाह। ये चेति। अस्येति वानप्रस्थोक्तिः। विधेयपञ्चाग्निविद्यया सह सङ्कीर्तिरस्ति तेन तद्वदेव वानप्रस्थमनुष्ठेयमित्यर्थः। परोक्तिमुत्थाप्य प्रत्याह। अपि त्वित्यादिना। किं तन्निश्चयकारणं तदाह। त्रय इति। स्कन्धशब्दस्य समूहवाचित्वेऽपि त्रित्वप्रतिज्ञा स्यादित्याशङ्क्याह। न चेति। यज्ञेन दव्यादित्वादुत्पत्तिविधिभिन्नाः सन्तो बहवो धर्मा आश्रमसम्बन्धमन्तरेण त्रित्वेऽन्तर्भावयितुं शक्यन्ते। यद्वाश्रमपरः स्कन्धशब्दो न स्याच स्यात्ततो यज्ञादीनां त्रित्वं तेषाम् अधिकृत्वादतः स्कन्धशब्दस्य समूहार्थयोगात् त्रित्वमेव स्कन्धानामाश्रमत्वनिश्चायकमित्यर्थः। कथं तर्हि तेषामाश्रमाणां विभागस्तत्राह। तत्रेति। वाक्यान्तरेऽपि निश्चायकं दर्शयति। ये चेति। परोक्तं निरस्य स्वमतमुपसंहरति। तस्मादिति॥

परामर्शमुपेत्यानुष्ठेयत्वमुक्तमिदानीं विधिरेवायमित्याह। विधि-

त्वाभ्युपगमे एकवाक्यताप्रतीतिरुपरुध्येत प्रतीयते चात्रैकवाक्यता पुण्यलोकफलास्त्रयो धर्म्मस्कन्धाः ब्रह्मसंस्थता त्वमृतत्वफलेति। सत्यमेतत्, सतीमपि त्वेकवाक्यताप्रतीतिं परित्यज्य विधिरेवाभ्युपगन्तव्यः, अपूर्वत्वाद्विध्यन्तरस्यादर्शनात् विस्पष्टाच्चाश्रमान्तरप्रत्ययात् गुणवादकल्पनयैकवाक्यत्वप्रयोजनानुपपत्तेः धारणवत्, यथा 'अधस्तात् समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति' इत्यत्र सत्यामप्यधोधारणेनैकवाक्यताप्रतीतौ विधीयत एवोपरिधारणमपूर्वत्वात्। तथा चोक्तं

---

वेति। प्रतिज्ञां विभजते। विधिरिति। स्तुत्याचारयोराश्रमचतुष्टयनिर्दिष्टयोर्भ्रान्तित्वायोगात् मूलकल्पनायां विधियुक्तवाक्यकल्पनात् वरमिदं त्रय इत्यादिष्वाश्रमविधिकल्पनमिति भावः। अल्पफलत्वेनाश्रमत्रयनिन्दया ब्रह्मसंस्थतास्तुतेरेकवाक्यत्वनिश्चयात् तद्भङ्गेनाश्रमविधिकल्पनमयुक्तमिति शङ्कते। नन्विति। एकवाक्यताधीरेव कथं तत्राह। प्रतीयते चेति। एकवाक्यत्वसम्भवे तद्भेदो न युक्तिमानित्यङ्गीकरोति। सत्यमिति। आश्रमाणां पूर्वसिद्धेरभावात् तत्परामर्शेन स्तुतेरयोगादेकवाक्यतैव नायुक्तेत्याह। सतीमपीति। किञ्च विधियुक्तवाक्यान्तरकल्पनयाश्रमान्तराणां विहितत्वोपगमाप्रसक्त्या स्वपक्षहानात् तत्कल्पनादृष्टेर्भीष्टे वाक्ये विधिमात्रकल्पना युक्तेत्याह। विध्यन्तरस्येति। किञ्च प्रत्यक्षमाश्रमान्तरप्रत्ययं त्यक्त्वा स्तुतिलक्षणैकवाक्यत्वकल्पनायोगात् वाक्यभेदेन विधिरेवायमित्याह। विस्पष्टाच्चेति। एकवाक्यताभानेऽपि तत्त्यागेनापूर्वार्थविधौ दृष्टान्तमाह। धारणवदिति। महापितृयज्ञे दिवं गतानां होमे च श्रुतं वाक्यमुदाहरति। अधस्तादिति। उदाहरणस्याक्षेपयोगित्वेन वाक्यस्याभीष्टमर्थमाह। पर्वेति। प्रकृते दर्शविधेः पूर्वार्चिषं हविराहवनीयं प्रतिपदा नीयते तदा पित्र्ये होमे तस्य हविषोऽधस्तात् समिधं धारयन्ननुद्रवेदित्यत्राधोधारणस्य विहितत्वादुपरि होमि-

शेषलक्षणे 'विधिस्तु धारणेऽपूर्वत्वात्' इति, तद्वदिहाप्याश्रम-
परामर्शश्रुतिर्विधिरेवेति कल्प्यते। यद्यपि परामर्श एवाय-
माश्रमान्तराणां तथापि ब्रह्मसंस्थता तावत्संस्तवसामर्थ्यादव-
श्यविधेयाऽभ्युपगन्तव्या। सा च किं चतुर्ष्वाश्रमेषु यस्य क-
स्यचिदाहोस्वित् परिव्राजकस्यैवेति विवेक्तव्यं, यदि च ब्रह्म-
चार्यान्तेष्वाश्रमेषु पराम्रश्यमानेषु परिव्राजकोऽपि पराम्रष्ट-
स्ततश्चतुर्णामप्याश्रमाणां पराम्रष्टत्वाविशेषादनाश्रमित्वानुप-
पत्तेश्च यः कश्चिच्चतुर्ष्वाश्रमेषु ब्रह्मसंस्थो भविष्यति अथ न
पराम्रष्टस्ततः परिशिष्यमाणः परिव्राडेव ब्रह्मसंस्थ इति सेत्-

---

तच्छेषात्तु यादृश्या तदेकवाक्यत्वविधानमुपरिष्टात् समिद्धारणस्यापूर्वत्वात्
दैवे होमे वाक्यभेदं कृत्वा तद्विधीयत इत्यर्थः। उक्तेऽर्थे तार्त्तीयं सूत्र-
मुदाहरति। तथेति। उपरि हि देवेभ्यो धारयतीत्यत्रोपरि धारणं
विधीयते न वेति सन्देहे धारयतीति वर्त्तमानोपदेशादुपरि होति हि
यद्दस्तेनोपरि समिधः प्राप्तेर्विधयाश्रयद्रव्यत्वेन येन केनाप्यादान-
प्राप्तौ स्रुग्दण्डे समिधमुपसंगृह्णातीति वाक्यान्तरप्राप्तनियम-
नात् अनुवादो न विधिरिति प्राप्ते स्रुग्दण्डे समिधमुपसंगृह्णीत हविषः
प्राग्देशसन्निधारणस्य प्राप्तत्वेऽपि तस्मादुपरि तद्धारणस्याप्राप्तेर्भङ्क्ता हि-
यदं पञ्चमलकारेण विधिरेवायमित्याह। विधिस्त्विति। दृष्टान्तसङ्गा
दार्ष्टान्तिकमाह। तद्वदिति। परामर्शपक्षमेवावलम्ब्याश्रमाणां परा-
मर्शेऽपि पारिव्राज्यस्य विधिरेष्टव्योऽन्यथा स्तुत्ययोगादित्याह। यदेति।
ब्रह्मसंस्थता यावत् स्तूयते तद्विधीयत इति न्यायात् विधेयत्वेऽपि पारि-
व्राज्यस्य किं स्यादित्यत आह तदर्थं विचारमवतारयति। सा चेति। पक्ष-
द्वयस्य निर्बीजत्वात् नेदं विचार्यमित्यत आह विचार्यं स्वतो परिव्राजको-
ऽपि परामृष्टो न वेति विकल्पाद्यमनुद्य प्रथमपक्षव्याप्तिमाह। य-
दीति। परामृष्टत्व विशेषात् चतुर्ष्वाश्रमेषु यः कश्चित् ब्रह्मसंस्थो भविष्य-

स्थति, तत्र तपःशब्देन वैखानसग्राहिणा पराम्बष्टः परिव्रा
पीति केचित्, तदयुक्तं, न हि सत्यां गतौ वानप्रस्थविशे
षेन परिव्राजको ग्रहणमर्हति यथात्र ब्रह्मचारिस्वधर्मेण
वसाधारणेनैव स्वेन स्वेन विशेषणेन विशेषिणावेवं भिक्षुवै
नसावपीति युक्तम्। तपश्चासाधारणो धर्मो वानप्रस्थ
कायक्लेशप्रधानत्वात्तपःशब्दस्य तत्र रूढेः, भिक्षोस्तु ध
इन्द्रियसंयमादिलक्षणो नैव तपःशब्देनाभिलप्येत, चतुर्ष्व
प्रसिद्धा आश्रमास्त्रित्वेन परामृश्यन्त इत्यन्याय्यं। अपि
भेदव्यपदेशोऽत्र भवति 'त्रय एते पुण्यलोकभाजः एकोऽमृ
त्वभाक्' इति। पृथक्त्वे च व्यपदेशोऽवकल्पते, न ह्येवमवि

---

तीति सम्बन्धः। ब्रह्मसंस्थोऽनाश्रमी कस्मात् न स्यादित्याशङ्क्याना
त्वस्य निन्द्यमानत्वादित्याह। अनाश्रमित्वेति। द्वितीयमनूद्य तत्र
व्याप्तिमाह। यथेति। पक्षयोः सम्भावनया विचारारम्भमुक्त्वा पूर्वप
माह। तत्रेति। परिव्राजकस्यापि यमनियमादितपःसम्भवादित्यं
च्चाश्रमाणामेकैकशो ऽसाधारणधर्मस्वरूपदर्शनायोपक्रमस्तदनुसारेणोत्तर
रस्य युक्तत्वात्तपःशब्देन नोभयग्रहणमिति दूषयति। तदिति। किं तर्हि
युक्तं तदाह। यथेति। कस्तर्हि तपःशब्दार्थः तत्राह। तपश्चेति। तेषु
तत्प्रधानत्वेऽपि तपःशब्दस्य साधारण्यं किन्न स्यात्तत्राह। तपःशब्दस्येति।
तस्य लक्षणादौ रुचेरन्यत्र तदभावात्तेन वानप्रस्थ एव परामृश्यत इत्यर्थः।
कथं तर्हि परिव्राजकधर्मेऽपि तपःशब्दप्रयोगस्तत्राह। भिक्षोस्त्विति।
इतश्च पूर्वं परिव्राजको नोक्त इत्याह। चतुर्ष्वेति। न हि प्रसिद्ध
सङ्ख्याभेदेषु सङ्ख्यान्तरोक्तिर्युक्तेत्यर्थः। पृथग्युक्तिसामर्थ्यादपि प्रकरणस्थ
त्वयःविरिक्तो ब्रह्मसंस्थ इत्याह। अपि चेति। भेदव्यपदेशोऽपि क
पृथक्त्वं तत्राह। पृथक्त्वे चेति। सर्वे एते पुण्यलोका इत्यत्र भिक्षुरपि
परामृष्टश्चेत्तस्य ब्रह्मसंस्थत्वाभावात् अमृतत्वमेवेति न पुण्यलोकत्वं

देवदत्तयज्ञदत्तौ मन्दप्रज्ञावन्यतरस्तु तयोर्महाप्रज्ञ इति, भवति त्वेवं देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ विष्णुमित्रस्तु महाप्रज्ञ इति। तस्मात् पूर्वे त्रय आश्रमिणः पुण्यलोकभाजः परिशिष्यमाणः परिव्राडमृतत्वभाक्। कथं पुनर्ब्रह्मसंस्थशब्दो योगात् प्रवर्त्तमानः सर्वत्र सम्भवन् परिव्राजक एवावतिष्ठेत, रूढ्यभ्युपगमे चाश्रमान्तरादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्ग इति। अत्रोच्यते। ब्रह्मसंस्थ इति हि ब्रह्मणि परिसमाप्तिरनन्यव्यापारतारूपं तन्निष्ठत्वमभिधीयते, तच्च त्रयाणामाश्रमाणां न सम्भवति स्वाश्रमविहितकर्म्माननुष्ठाने प्रत्यवायश्रवणात्, परिव्राजकस्य तु सर्वकर्मसन्न्यासात् प्रत्यवायो न सम्भवति अननुष्ठाननिमित्तः। शमदमादिस्तु तदीयो धर्मो ब्रह्मसंस्थताया उपोद्बलको न विरोधी। ब्रह्मनिष्ठत्वमेव हि तस्य शमदमाद्युपबृंहितम्

---

विरोधाच्च तपःशब्देन भिक्षोरपि पक्षे तद्ग्रहणं युक्तमेव इति प्रकृतानां कार्त्स्न्येन परामर्शात्तस्मात् भेदोक्त्या पृथक्त्वमेवेत्यर्थः। अपृथक्त्वे भेदोक्ति-रयुक्तेत्यत्र दृष्टान्तमाह। न हीति। पृथक्त्वे तु तदुक्तिर्युक्तेत्याह। भवतीति। न चावस्थाभेदापेक्षया दृष्टान्तदार्ष्टान्तिकयोः सिद्धिः अपृथक्त्वेऽपि वाच्यं, सति कर्म्मित्वे मन्दप्रज्ञत्वे च ब्रह्मसंस्थाया महाप्रज्ञत्वस्य चायोगात् पृथक्त्वध्रौव्यादिति मत्वोपसंहरति। तस्मादिति। किमेष ब्रह्मसंस्थशब्दो यौगिको रूढो वेति विकल्पाद्येन परिव्राजकमात्रविषयतेति शङ्कते। कथमिति। द्वितीयं निराह। रूढीति। यौगिकत्वमुपेत्य परिहरति। अत्रेति। यद्येवं ब्रह्मसंस्थत्वमन्येषाम् अपि सिध्यतीत्यत आह। तच्चेति। तत्त्वं चान्याश्रमिणोऽपि तत्स्वाश्रमकर्म्माननुष्ठाने प्रत्यवायित्वं तत् कुर्वतोऽस्य ब्रह्मसंस्थत्वं नेत्याह। परिव्राजकस्येति। तस्यापि शमदमाद्यनु-

स्वाश्रमविहितं कर्म, यज्ञादि चेतरेषां तद्व्यतिक्रमे च तस्य प्रत्यवायः। तथा च 'न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा' 'तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्' 'वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः' इत्याद्याः श्रुतयः, स्मृतयश्च 'तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः' इत्याद्या ब्रह्मसंस्थस्य कर्माभावं दर्शयन्ति।

---

ष्ठेयमिति कुतो ब्रह्मसंस्थतेत्याशङ्क्याह। शमेति। तत्र हेतुः, ब्रह्मेति। शमादेर्ब्रह्मसंस्थताङ्गत्वाच्च तद्विरोधितेत्यर्थः। गृहस्थादीनामपि ब्रह्मसंस्थत्वाविरोध्येव स्वाश्रमविहितं कर्मेत्याशङ्क्याह। यज्ञेति। तानि हि रागाद्याचिह्नानि, न च रागादिमतां ब्रह्मसंस्थतेति भावः। अमदवद-येतं ब्रह्मनिष्ठत्वमेव सन्न्यासिनः स्वाश्रमकर्मेत्युक्तं, तदकरणे तस्य प्रत्यवा-यित्वं त्वम्पदार्थविवेकार्थेति स्मृतेरित्याह। तदिति। चकारादितरेषामपि तत्तदाश्रमकर्मातिक्रमे प्रत्यवायित्वमकुर्वन् विहितं कर्मेत्यादिस्मृतेरपि सूच्यते। सन्न्यासिनः सर्वकर्मत्यागेन ब्रह्मसंस्थत्वमेव स्वाश्रमकर्मत्वे मानमाह। तथा चेति। न्यासः सन्न्यासो ब्रह्मेति स्तूयते। तत्र हेतुमाह। ब्रह्मा हीति। हिरण्यगर्भो हि श्रुतिस्मृतिषु परोऽभिहितः तथापि कथं सन्न्यासस्तदात्मकस्तदाह। परो हीति। तस्य परत्वे हेतुः ब्रह्मेति। ब्रह्मोहेतुत्वात्परो यस्मात् एष सन्न्यासस्तस्मात् ब्रह्मेत्यर्थः। सन्न्यासस्य परत्वं स्फोरयति। तानीति। पूर्वोक्तानि सत्यादीनि यानि ज्ञानहीनान्यवराण्येतानि तपांसि निकृष्टत्वहेतुमात् न्यास एवैषोऽतिरिक्तः श्रेष्ठो ब्रह्मसंस्थताद्वारा मुक्तत्वहेतुत्वादित्यर्थः। तस्य कर्मान्तराभावे वाक्यान्तरमाह। वेदान्तेति। शुद्धबुद्धयो विरक्ताः सन्न्यासयोगात् वेदान्तविज्ञानेन सुनिश्चितार्थाः। मुच्यन्त इति वचनात्कर्मान्तराभावः सन्न्यासिनां भातीत्यर्थः। 'न कर्मणा न प्रजया' इत्याद्या भूयस्यः श्रुतयोऽत्र ग्रहीतुमादिपदम्। तस्मिन् ब्रह्मण्येव बुद्धिर्मनो येषां ते तथा। तदेव ब्रह्मात्मा स्वरूपं येषां ते तदात्मानः। तत्रैव निष्ठया स्थितिमाह। तन्निष्ठा इति।

तस्मात् परिव्राजकस्याश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्ग इत्येषोऽपि दोषो नावतरति। तदेवं परामर्शेऽपीतरेषामाश्रमाणां पारिव्राज्यं तावद्ब्रह्मसंस्थतालक्षणं लभ्यत एव। अनपेक्ष्यैव जाबालश्रुतिमाश्रमान्तरविधायिनीमयमाचार्य्येण विचारः प्रवर्त्तितः, विद्यते एव त्वाश्रमान्तरविधिश्रुतिः प्रत्यक्षा 'ब्रह्मचर्यं समाप्य गृही भवेत् गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत् यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा' इति। न चेयं श्रुतिरनधिकृतविषया शक्या वक्तुं, अविशेषश्रवणात् पृथग्विधानाच्चानधिकृतानां। 'अथ पुनरेव व्रती वाऽव्रती

---

विषयान्तरपरत्वशङ्कां व्यावर्त्तयति। तदिति। 'यथोक्तान्यपि कर्माणि परिहाय' इत्यादिस्मृतिसंग्रहार्थमादिपदम्। उक्तस्तुतिस्मृतितात्पर्यमाह। ब्रह्मेति। ब्रह्मसंस्थत्वस्य परिव्राजके दार्ढ्यमुपेत्योपसंहरति। तस्मादिति। यथा गृहस्थशब्दस्य यौगिकत्वे सत्यतिप्रसङ्गपरिहाराया-श्रमविशेषे रूढत्वेऽपि न गार्हस्थ्यमात्रात् पुण्यलोकप्राप्तिः किन्तु यथोक्ताग्निहोत्रादिकरणात् तथा परिव्राजकस्यापि ब्रह्मसंस्थस्य दार्ढ्ये श्रवणसाक्षात्कारद्वारेणैव मुख्यममृतत्वमिति कुतो ज्ञानानर्थक्यमित्यर्थः। एवमेकदेशिमतं प्रत्याख्याय ब्रह्मसंस्थशब्दस्य परिव्राजकविषयत्वे स्थिते संस्तवसामर्थ्यात् ब्रह्मसंस्थत्वं पारिव्राज्यमितरपरामर्शेऽपि विधेयमिति परमप्रकृतमुपसंहरति। तदेवमिति। शिष्यबुद्धिविकासार्थं परामर्श-श्रुतिमाश्रित्य कृता चिन्तया। विचारं कृत्वा चिन्तामुद्घाटयति। अन-पेक्ष्येति। यदि वेतरथेति ब्रह्मचर्ये स्थितस्यैव पारिव्राज्ये क्रमगार्हस्थ्ये वैराग्य दैवयोगात् यदि स्यादित्यर्थः। अस्त्वनधिकृतान्धादिविषयः सन्न्यासः स्यादिति तत्राह। न चेति। अविशेषश्रुतिरस्ति अतो न विशेषसङ्कोचमर्हतीत्यर्थः। इतश्चेदं वाक्यं नानधिकृतविषयमित्याह। पृथगिति। अनधिकृतानां सन्न्यासस्येति शेषः। अतो गौतमादिवेद-

वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा' इत्यादिना ब्रह्मज्ञानपरिपाकाङ्गत्वाच्च पारिव्राज्यस्य नानधिकृतविषयत्वम्, तच्च दर्शयति 'अथ परिव्राड् विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति' इति। तस्मात् सिद्धा ऊर्ध्वरेतस आश्रमाः, सिद्धं चोर्ध्वरेतःसु विधानाद्विद्यायाः स्वातन्त्र्यमिति ॥

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः' 'इयमेवर्गग्निः साम' 'अयं वाव लोक एषोऽग्निश्चितः' 'तदिदं

---

व्रतवान्, अव्रती तद्विपरीतः। स्नातको गुरुकुलनिवृत्तिरूपः स्नानानन्तरमपि गुरुशुश्रूषापरः, तद्विपरीतोऽस्नातकः। उत्सन्नाग्निर्मृतभार्यः पूर्वमेवाग्निपरिग्रहरहितो वा परिव्रजेदिति कर्माधिकारप्राप्तिहीनानामपि संन्यासस्य पृथगुक्तेन वाक्यमनधिकृतविषयमित्यर्थः। संन्यासस्य ब्रह्मज्ञानदार्ढ्यार्थत्वं प्रकरणादिसिद्धं तेन सर्वस्यैवाधिकारस्तस्मिन्नित्यर्थः। पारिव्राज्यस्य ब्रह्मधीदार्ढ्यार्थत्वे श्रुतिं प्रमाणयति। तच्चेति। ब्रह्मभूयाय तत्साक्षात्कारायेत्यर्थः। अन्तर्गताधिकरणार्थमुपसंहरति। तस्मादिति। प्रामाणिकत्वं तच्छब्दार्थः। तेषां प्रमितत्वेऽपि प्रकृते किं जातमित्याशङ्क्य प्रथमाधिकरणार्थं निगमयति। सिद्धं चेति ॥

अनुष्ठेयत्वाभ्युपगतेराश्रमान्तरमनुष्ठेयतया विधेयमस्तु, कर्माङ्गरसतमत्वादीनामङ्गाश्रितत्वेनेयमेव जुहूरित्यादिस्तुतिवदन्यथा स्तुत्यर्थत्वमित्याशङ्क्य प्रत्याह। स्तुतीति। अधिकरणस्य विषयं वदन् वाक्यानि पठति। स इति। 'एषां भूतानां पृथिवी रसः पृथिव्या आपोऽपामो-

वोक्थमियमेव पृथिवी' [छा० उ०] इत्येवंजातीयकाः श्रुतयः किमुद्गीथादिस्तुत्यर्था आहोस्विदुपासनविध्यर्था इत्यस्मिन् संशये स्तुत्यर्था इति युक्तं, उद्गीथादीनि कर्माङ्गान्युपादाय श्रवणात्, यथा 'इयमेव पृथिवी जुहूरादित्यः कूर्मः स्वर्लोक आहवनीयः' इत्याद्या जुह्वादिस्तुत्यर्थास्तद्वदिति चेन्नेत्याह। न स्तुतिमात्रमासां श्रुतीनां प्रयोजनं युक्तम्, अपूर्वत्वात्, विध्य-

---

ध्य ओषधीनां पुरुषः पुरुषस्य वाग् वाच ऋक् ऋचः साम साम्न उद्गीथो रसः" इत्युपक्रम्य श्रूयते 'स एष रसानां पृथिव्यादीनां सामान्यानां भूतेषूत्तरोत्तरसारत्वेनोक्तानामतिशयत्वेन सारो रसतमः परमः परमात्मप्रतीकत्वात् परस्य ब्रह्मणोऽर्धं स्थानं तदर्हतीति परार्ध्यं परब्रह्मवदुपास्य इत्यर्थः। पृथिव्याद्यपेक्षयाऽष्टमः कोऽसौ यदुद्गीथो य उद्गीथो ॐकार इत्यर्थः। उद्गीथाद्यङ्गावबद्धश्रुतीरधिकृत्य पर्णमयीत्यादावफलत्वे विध्युपलब्धेस्तथाविधेऽपि 'स्वर्गो लोक' इत्यादौ स्तुत्युपलब्धेश्च संशयमाह। किमिति। अङ्गावबद्धानामपि धर्माणां स्तुतित्वाभावात् विधेयतया स्वातन्त्र्येण पुरुषार्थहेतुत्वे सत्यनन्तराधिकरणधियः स्वतन्त्रतया क्रत्वनुपनिबद्धत्ववद्याः किं वक्तव्यमित्युक्तेरत्र पादादिसंगतिः। पूर्वपक्षे स्तुतित्वादङ्गधीष्वनुष्ठानासिद्धिः सिद्धान्ते तासां विधेयत्वात् तत्सिद्धिरित्युक्तोभय संशयमनूद्य पूर्वपक्षयति। इत्यस्मिन्निति। विमताः प्रत्ययाः स्तुतयः कर्माङ्गेषु उत्कृष्टपदार्थाध्यासप्रत्ययरूपत्वात् स्वर्गो लोक आहवनीय इत्यादिप्रत्ययवदित्यर्थः। जुहूरियमेव पृथिवीति श्रूयते कूर्मश्च नयनगतः सत्त्वादित्य इति आहवनीयोऽग्निः स्वर्गलोक इतिवत् स्तुतिरेवेत्यर्थः। स्तुतिकल्पनात् विधिकल्पनमेव युक्तमनुष्ठानफलाभावादिति परिहरति। नेत्यादिना। विमताः प्रत्ययाः न कर्माङ्गस्तुतयोऽपूर्वार्थत्वात् प्रत्यक्षवदित्याह। नेति। विमता धियो न कर्माङ्गस्तुतयो विशिष्टफलसम्बन्धित्वात् दध्यादिवदित्याह। विधीति। 'वायुर्वै क्षेपिष्ठा

र्थतायां ह्यपूर्वार्थौ विहितौ भवत स्तुत्यर्थतायां त्वानर्थक्यं स्यात्, विधायकस्य हि शब्दस्य वाक्यशेषभावं प्रतिपद्यमाना स्तुतिरुपयुज्यत इत्युक्तम्, 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरित्यत्र [मीमांसा]। प्रदेशान्तरविहितानां ह्युद्गीथादीनामियं प्रदेशान्तरपठिता स्तुतिर्वाक्यशेषभावमप्रतिपद्यमानाऽनर्थिकैव स्यात्, इयमेव जुहूरित्यादि तु विधिसंनिधावेवाम्नातमिति वैषम्यं। तस्माद्विध्यर्था एवञ्जातीयकाः श्रुतयः॥

## भावशब्दाच्च॥ २२॥

'उद्गीथमुपासीत सामोपासीताहमुक्थमस्मि' इति [बृ० उ०] विद्यादित्यादयश्च विस्पष्टा विधिशब्दाः श्रूयन्ते, ते च स्तुतिमात्रप्रयोजनतायां व्याहन्येरन्। तथा च न्यायविदां स्मारं

---

इत्यादिवदुद्गीथादिश्रुतीनां स्तुत्यर्थत्वेऽपि कस्मादर्थवत्त्वं न स्यादित्याशङ्क्याह। विधायकस्येति। अस्तु तर्हि विधायकशब्दशेषत्वमेवोद्गीथादिश्रुतीनामपि स्तावकतयाऽर्थवादत्वं तत्र वाच्यं, किमुद्गीथादिकर्मस्थ उद्गीथादिविधिः स्तूयते किं वा तदुपास्तिविधिरिति विकल्प्याद्यं दूषयति। प्रदेशान्तरेति। उद्गीथादिविधेः कर्मप्रकरणस्थत्वेन व्यवधानेनोद्गीथादिश्रुतीनामेकवाक्यता। विमता धियो न कर्माङ्गस्तुतयोऽप्रकरणस्थत्वात् क्रत्वन्तरवदिति भावः। परोक्तं दृष्टान्तं विघटयति। इयमेवेति। अनुमानत्रयफलं निगमयति। तस्मादिति।

न द्वितीयः, उपास्यविषयार्पणेन विध्यन्वयोत उपपत्तौ स्तुत्यायोगादित्याह। भावेति। सन्निहितविधेर्विषयार्पणेनार्थवत्त्वे रुद-

'कुर्यात् क्रियेत कर्त्तव्यं भवेत् स्यादिति पञ्चमं।
एतत् स्यात् सर्ववेदेषु नियतं विधिलक्षणम्' ॥ इति। लिङाद्यर्थो विधिरिति मन्यमानास्त एवं स्मरन्ति। प्रतिप्रकरणञ्च फलानि श्राव्यन्ते 'आपयिता ह वै कामानां भवति एष ह्येव कामागानस्येष्टे' कल्पन्ते हास्मै लोका ऊर्द्ध्वाश्चावृत्ताश्च' इत्येवमादीनि। तस्मादप्युपासनविधानार्था उद्गीथादिश्रुतयः॥

---

मादिवादानां सम्भवति तदीयस्तुतिपरत्वमपि तत्रायुक्तं स्तुत्यपेक्षया विषयार्पकस्यान्तरङ्गत्वात् तत्र कर्माङ्गस्तुतिपरत्वं नेति किन्तु वक्तव्यमिति मन्वानो व्याचष्टे। उद्गीथमिति। नियमवणादिष्वपि लिङादिश्रवणात् कथमुपासीतेत्यादिशब्दस्य विधिपरत्वेत्याशङ्क्याह। तथा चेति। धातूनामनेकत्वेऽपि डु कृञ् करणे भू सत्तायां अस भुवीति त्रीनेव धातून् भावनासामान्यवाचिनः सर्वव्याप्त्यर्थमुदाहरति। कुर्यादिति। स्वावच्छिन्नकर्तृका भावना कुर्यादित्युक्ता सैवावच्छिन्नकर्मिका क्रियेतेत्युदाहृता सैव कर्त्तव्यमिति धात्वर्थोपसर्जनभूताऽभिहितेति भावः। भवेदित्यत्रापि भूयेत भवितव्यमित्युदाहार्य्यं, भवतेरन्यैश्चार्थ्येऽपि प्राप्त्याद्यर्थं भवति इत्य पृथगस्तिमुदाहरति। स्यादिति। यथापूर्वमुदाहरणमित्रापि द्रष्टव्यम्। पाठक्रममनुसृत्य पञ्चममित्युक्तम्। एतद्धात्वनुगतप्रत्ययैः सर्वभावनानुगतः श्रेयःसाधनत्वरूपो विधिरुच्यते न तु प्रति धातु प्रति प्रत्ययं च भावनाभेदोऽस्तीति मत्वाह। एतदिति। कथं तर्हि नियमवणादिषु लिङादिश्रवणं विधेयविरोधादित्याशङ्क्योक्तं गतो वेदे विधिपरा लिङादयोऽपवादादन्यथात्वमित्यभिप्रेत्याह। लिङादीति। उद्गीथादिश्रुतीनां स्तुत्यर्थत्वाभावे हेत्वन्तरसूत्रकारस्थापितमाह। प्रतीति। फलभेदश्रवणमुपसंहरति। तस्मादिति। पूर्वोक्तानुपपत्त्यादिसमुच्चयार्थमपीत्युक्तम्।

## पारिप्लवार्था इति चेन्न विशेषितत्वात्॥ २३॥

'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च' 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम' 'जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस' इत्येवमादिषु वेदान्तपठितेष्वाख्यानेषु संशयः किमिमानि पारिप्लवप्रयोगार्थान्याहोस्वित् सन्निहितविद्याप्रतिपत्त्यर्थानीति। पारिप्लवार्था इमा आख्यानश्रुतयः, आख्यानसा-

---

उद्गीथादिश्रुतेरुपास्तिविषयार्पकत्वं न्यायो रसतमत्वादेरिव स्तु-अधुनाऽऽख्यानानामपि विद्यास्तुतेः सकाशात् पारिप्लवशेषत्वं न्यायोऽनुष्ठानावसानयोगादित्याशङ्क्य परिहरति। पारिप्लवेति। विषयोक्तिपूर्वकमाख्यानत्वसाम्यात् विद्यासन्निधेश्च संशयमाह। अथेत्यादि। पारिप्लवप्रयोगो नामाश्वमेधे पुत्रामात्यपरिवृताय राज्ञे पारिप्लवमाचक्षीतेत्यादि नानाविद्याख्यानकथनं विहितं, अत्र चोपनिषद्गताख्यानानां तादर्थ्यनिरासेन तत्र तत्र सन्निहितस्वतन्त्रपुरुषार्थहेतुविद्यार्थत्वसमर्थनात् पादादिसङ्गतिः। पूर्वपक्षे प्रयोगशेषत्वात् आख्यानानां वेदान्तगतानामपि तद्भावात् विद्याप्राधान्यासिद्धिः सिद्धान्ते विशेषणात् उपनिषदाख्यानानां व्यवच्छेदात् तेषामप्रयोगशेषत्वात् विद्याप्रधानत्वसिद्धिरिति सीक्षते पूर्वपक्षयति। पारिप्लवेति। गुरुशिष्यसमाचारप्रदर्शनेन बुद्धिसौकर्यद्वारा च विद्याशेषत्वं सामर्थ्यं लिङ्गादौ संसिद्धमित्याशङ्क्य पारिप्लवश्रुतिविरोधे लिङ्गमप्रयोजकमित्याह। आख्यानेति। यद्याश्विने शस्यमाने सूर्योऽभ्युदियादपि सर्वा दाशतयीरनुब्रूयात् इति सर्वासामृचामस्मिन् पक्षयंसने पूर्वं श्रुत्वा विनियुक्तानामपि प्रातिस्विकविनियोगवदाख्यानानां पारिप्लवे पारिप्लवमाचक्षीतेति चोदितानामेतेन लिङ्गेन सन्निधेर्वा विद्यायां विनियोगः स्या-दित्याशङ्क्य प्रातिस्विकविनियोगस्य समुदायविनियोगस्य च श्रौतत्वेन

मात्यादाख्यानप्रयोगस्य च पारिप्लवे चोदितत्वात्, ततश्च विद्याप्रधानत्वं वेदान्तानां न स्यात्, मन्त्रवत्प्रयोगशेषत्वादिति चेत् तन्न, कस्मात् विशेषितत्वात् । तथा हि 'पारिप्लवमाचक्षीत' इति हि प्रकृत्य 'मनुर्वैवस्वतो राजा' इत्येवमादीनि कानिचिदेवाख्यानानि तत्र विशेष्यन्ते आख्यानसामान्यात् चेत् सर्वगृहीतिः स्यादनर्थकमेवेदं विशेषणं भवेत्, तस्मान्न पारिप्लवार्था एता आख्यानश्रुतयः ॥

---

तुल्यत्वात् प्रकृते च तदभावात् शेषमित्याह । ततश्चेति । आख्यानानां प्रयोगशेषत्वेऽपि सर्वेषां वेदान्तानाम् अतच्छेषत्वात् युक्तं विद्याप्रधानत्वमित्याशङ्क्याह । मन्त्रवदिति । 'देवस्य त्वा' इत्यादिमन्त्रे कस्यचिदेव पदस्य समवेतार्थतया प्रयोगशेषत्वे सिद्धे तदेकवाक्यतया पदान्तराणामपि तच्छेषत्वमिति तथाख्यानानां प्रयोगशेषत्वे तदेकवाक्यत्वेन सर्वोपनिषदां तच्छेषत्वाच्च विद्याप्रधानतेत्यर्थः । अत्र स्तुतेर्विशेषोक्त्या तत्परत्वाच्च तथा लिङ्गादिबाधोऽस्तीति सिद्धान्तयति । तथेत्यादिना । अश्वमेधे प्रथमेऽहनि 'मनुर्वैवस्वतो राजा' इत्याह, द्वितीयेऽहनि 'यमो वैवस्वतः' इति, तृतीयेऽहनि 'वरुण आदित्यः' इत्याद्याख्यानविशेषा अश्वमेधे श्रुतास्तद्बलात् उपक्रमस्य सङ्कोचो युक्तः । न चोपक्रमस्य सर्वशब्दादुपसंहारस्यापि विशेषोक्तिरूपकसार्थेति वाच्यम्, आदौ सर्वाण्याख्यानानि पारिप्लवे शंसन्तीत्युक्त्वा पारिप्लवमाचक्षीतेति च विधाय मनुर्वैवस्वत इत्यादि पठ्यते तत्र पुनर्विधानं वाक्यशेषस्याख्यानसमूहस्य कतिपयप्रयोगमात्रोपदर्शकं व्यावर्तयितुमित्यर्थवानिति मत्वा सिद्धान्तं विवृणोति । पारिप्लवमिति । तदाख्यानसामान्यात् पारिप्लवार्था इमा श्रुतय इति तत्राह । आख्यानेति । विशेषणफलं निगमयति । तस्मादिति ॥

## तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥

असति च पारिप्लवार्थत्वे आख्यानानां संनिहितविद्याप्रतिपादनोपयोगितैव न्याय्या एकवाक्यतोपबन्धनात्, तथा हि तत्र तत्र संनिहिताभिर्विद्याभिरेकवाक्यता दृश्यते, प्ररोचनोपयोगात् प्रतिपत्तिसौकर्योपयोगाच्च, मैत्रेयीब्राह्मणे तावत् 'आत्मा वा अरे द्रष्टव्यः' इत्याद्यया विद्ययैकवाक्यता दृश्यते, प्रातर्दनेऽपि 'प्राणोऽस्मि प्रज्ञात्मा' इत्याद्यया, 'जानश्रुतिः' इत्यत्रापि 'वायुर्वाव संवर्गः' इत्याद्यया यथा च 'स आत्मनो वपामुदखिदत्' इत्येवमादीनां कर्मश्रुतिगतानामाख्यानानां संनिहितविधिस्तुत्यर्थता तद्वत्, तस्मान्न पारिप्लवार्थत्वम् ॥

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

'पुरुषार्थोऽतः शब्दात्' [वे० सू० ३।४।१] इत्येतद्व्यवहितमपि

---

तर्हि क्वाख्यानान्युपयुक्तानीत्याशङ्क्य विशेषणस्तुत्या सर्वश्रुतौ स-न्नायां निर्बाधः संनिधिविद्यास्वेवोपनिषदाख्यानानि विनियुञ्जीतेत्याह। तथा चेति। सूत्रार्थं विवृणोति। असतीति। एकवाक्यतोपबन्ध-विभजते। तथा हीति। प्ररोचनमनुरागजननम्। संनिहिताभिर्वि-द्याभिराख्यानानामेकवाक्यताप्रतीतिमुदाहरति। मैत्रेयीति। आख्या-नेऽपि पारिप्लवार्थत्वादर्शनाच्च न तादर्थ्यं प्रकृताख्यानानामित्याह। यथेति। उदखिददुद्धृतवान् होमायेति यावत्। स्तुतिविद्यासंनिधिभिर्वि-द्यार्थत्वे सिद्धे फलितमुपसंहरति। तस्मादिति ॥

कथानां विद्याशेषत्वे दर्शिते कर्मणामपि तर्हि तच्छेषत्वं तच्छे-षत्वाभावेऽपि स्यादित्याशङ्क्य प्रसङ्गागतं विचारं परित्यज्य पुरु-षार्थाधिकरणस्य फलमाह। अत इति। ब्रह्मविद्या मोक्षे कर्मानपेक्षे-

सम्भवादत इति परामृश्यते, अत एव च विद्यायाः पुरुषार्थहेतुत्वादग्नीन्धनादीन्याश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्षितव्यानीत्याद्यस्यैवाधिकरणस्य फलमुपसंहरत्यधिकविवक्षया॥

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्॥२६॥

इदमिदानीं चिन्त्यते किं विद्याया अत्यन्तमेवानपेक्षाश्रमकर्मणामुतास्ति काचिदपेक्षेति, तत्रात एवाग्नीन्धनादीन्या-

---

कर्त्तव्यत्वेनापेक्ष्यते न वेति वाक्यविप्रतिपत्तेः सन्देहे 'यज्ञेन' इति विविदिषायां विनियुक्तयज्ञादीनां विषयसौन्दर्यलब्धायां तस्यामनन्वयात् तद्विषयज्ञानसाध्यमोक्षान्वयस्य वक्तव्यत्वादपेक्षतेति पूर्वपक्षे 'काष्ठैः पचति' इत्यत्र पाकसाधनज्वालाजनककाष्ठानां पाकहेतुत्वदर्शनात् ज्ञानेच्छाजनकान्तःकरणशुद्धिहेतुत्वेन यज्ञादीनां ज्ञानेच्छाहेतुत्वसिद्धेः साक्षादेव मोक्षान्वये च यज्ञेनेत्यादिकरणविभक्तिभङ्गात्सामर्थ्यस्यैवोपेयत्वात् नापेक्षा इति सिद्धान्तः। एतदभिप्रेत्य सर्वापेक्षितस्याऽतःशब्दपरामर्शयोग्यस्याभावादतः पदानुपपत्तिमाशङ्क्य सूत्राक्षराणि योजयति। पुरुषार्थ इति। आद्याधिकरणे यथा विद्यायाः स्वातन्त्र्येण पुरुषार्थहेतुत्वमुक्तं तत्र तथैवानूद्यते, तदा चाग्न्यादिप्रदर्शनात् न पुरुषार्थहेतुत्वं कर्मापेक्षाविरोधीति निरस्तम्। अत्र पादादिसङ्गतिर्व्याख्या, प्रथमाधिकरणस्यैव तत्फलविषयत्वात् तस्याः सङ्गतिस्तु, फलमपि पूर्वोत्तरपक्षयोरुक्तदेवेत्यभिप्रेत्याह। आद्यस्येति। स्वार्थसिद्धावनपेक्षा न तु स्वसिद्धौ तत्र तदपेक्षास्तीत्युत्तराधिकरणे निर्दिदिक्षुरुपसंहार इति तत्फलमाह। अधिकेति॥

ब्रह्मविद्या स्वफले न कर्मापेक्षा प्रमात्वात् प्रत्यक्षवदित्युक्तं, तर्हि तस्योत्पत्तावपि तदपेक्षा प्रमात्वादेवेत्याशङ्क्याह। सर्वेति। अधिकविवक्षेत्युक्तं कर्माङ्गत्वं ब्रह्मविद्यामधिकृत्य पूर्वाधिकरणन्यायात् विविदिषाङ्गत्वं संशयमाह। इदमिति। अत्र च स्वतन्त्रपुरुषार्थहेतो-

श्रमकर्माणि विद्यायाः स्वार्थसिद्धौ नापेक्ष्यन्त इत्येवमत्यन्तमे-
वानपेक्षायां प्राप्तायामिदमुच्यते, सर्वापेक्षा चेति। अपेक्षते
च विद्या सर्वाण्याश्रमकर्माणि नात्यन्तमनपेक्षैव। ननु विरु-
द्धमिदं वचनमपेक्षते चाश्रमकर्माणि विद्या नापेक्षते चेति।
नेति ब्रूमः। उत्पन्ना हि विद्या फलसिद्धिं प्रति न किञ्चि-
न्यदपेक्षते उत्पत्तिं प्रति त्वपेक्षते, कुतः यज्ञादिश्रुतेः। तथा
हि श्रुतिः 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन
दानेन तपसाऽनाशकेन' इति यज्ञादीनां विद्यासाधनभावं
दर्शयति, विविदिषासंयोगाच्चैषामुत्पत्तिसाधनभावोऽवसीयते।
'अथ यत् यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत्' इत्यत्र च विद्या-

---

निवृत्तात्मज्ञानोत्पत्तौ यज्ञादीनां शमादीनाञ्च विविदिषावाक्ये विनि-
योगोक्तेरस्ति पादादिसङ्गतिः। पूर्वपक्षे यज्ञादीनां विद्यानङ्गत्वे मु-
क्तेऽपि तदनपेक्षया सत्त्वशुद्धिः, सिद्धान्ते परम्परया तेषां ज्ञानाङ्गत्वे
तत्फलान्वये हेत्वभावात्तदसिद्धा ज्ञानस्यैव तत्तद्देवतार्थसिद्धिरित्यङ्गीकृत्य
पूर्वपक्षयति। नेति। अपरोक्षधियो मानमात्र ... प्रमाणपद
नस्य मानहेतुषु सत्सु कर्माद्यभावेन तुदयादर्शनात् केवलव्यतिरेकाभावे
च यज्ञादीनां हेतुत्वकल्पनायोगात् विविदिषाश्रुतेश्च वर्त्तमानापदेशित्वा-
द्विनियोजकत्वायोगात् ज्ञानस्य फलवदुत्पत्तावपि नान्यदपेक्षणमिति भावः।
विविदिषावाक्ये वर्त्तमानापदेशोऽपि 'यस्य पर्णमयी' इत्यादिवदपूर्व-
त्वात् पञ्चमलकारेण ब्रह्मानुभावकामो यज्ञादीनि कुर्यादिति विधि-
रनादागमस्य केवलव्यतिरेकानपेक्षत्वात् विषयवैन्दर्यं ... अन्वया-
दान्वयव्यतिरेकयोग तु तत्फले ज्ञाने यज्ञान्वयविधेर्व्यतिरेकादि ...
च तेषामिष्यमाणापरोक्षधीसाधनत्वदृष्टेर्ज्ञानस्य च ...
यज्ञादयः श्रुत्येऽपि तेषां विनियुक्ता प्रत्यक्षपरतत्त्वप्रदेशनाय ...

साधनभूतस्य ब्रह्मचर्य्यस्य यज्ञादिभिः संस्तवाद्यज्ञादीनामपि साधनभावः सूच्यते, 'सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योम्' इत्येवमाद्या च श्रुतिराश्रमकर्मणां विद्यासाधनभावं सूचयति। स्मृतिरपि,

'कषायपक्तिः कर्माणि ज्ञानन्तु परमा गतिः।
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते'॥

इत्येवमाद्या। अश्ववदिति योग्यतानिदर्शनं, यथा योग्यतावशेनाश्वो न लाङ्गलाकर्षणे युज्यते रथचर्य्यायान्तु युज्यते एव-

---

पर्यवसानात् तदर्थेऽपि 'पचति काष्ठैः' इतिवत् करणविभक्तिश्रवणात् उत्पत्तौ ज्ञानस्य कर्मापेक्षास्तीति सिद्धान्तयति। इदमिति। आपातेन पूर्वापरविरोधप्रतीतिं शङ्कते। नन्विति। विभागेनास्य प्रत्याह। नेति। उक्तव्यवस्थायां प्रश्नपूर्वकं हेतुमाह। कुत इति। ऐद विद्योति। तथा हीति। नन्वत्र विविदिषासंयोगो यज्ञादीनां श्रूयते, यदि तस्यां विषयसौन्दर्यलब्धायां तेषामन्वयायोगात् इष्यमाणे ज्ञानेऽन्वयोऽभ्युपगम्यते तर्हि ज्ञानस्य मानाधीनत्वात् कर्मणां तत्रान्वयसिद्धेः श्रुतत्यागेन तत्फले मोक्षे किमन्वयो नेष्यते तत्राह। विविदिषेति। मोक्षहेतुत्वकल्पनायां 'नास्त्यकृतः कृतेन' इत्यादिविरोधात् परम्परयापि हेतुत्वे बाधाभावात् बुद्धिशुद्ध्या तदुत्पत्त्यपेक्षयान्वयो यज्ञादीनामित्यर्थः। यज्ञादिश्रुतेरिति वाक्यान्तरमपि पर्यालोच्यमित्याह। अथेति। तत्र यज्ञादीनां ज्ञानसाधनत्वे विद्यानं लिङ्गमाह। यतेति। तत्रैव लिङ्गान्तरमाह। सर्वे इति। परम्परया कर्मणां धीहेतुत्वे स्मृतिमपि दर्शयति। स्मृतिरिति। उत्पत्ताविव फलेऽपि ज्ञानस्य कर्मापेक्षा किं न स्यादित्याशङ्क्य एव म-मादाय व्याकरोति। अश्ववदित्यादिना॥

नाश्रमकर्माणि विद्यया फलसिद्धौ नापेक्ष्यन्ते उत्पत्तौ तु अपेक्ष्यन्ते इति॥

## शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्॥ २७॥

यदि कश्चिन्मन्येत न यज्ञादीनां विद्यासाधनभावो न्याय्यः विध्यभावात्, 'यज्ञेन विविदिषन्ति' इत्येवमादिका हि श्रुतिरनुवादस्वरूपा विद्यास्तुतिपरा न यज्ञादिविधिपरा, इत्थं महाभागा विद्या यत् यज्ञादिभिरेनामवाप्तुमिच्छन्तीति, तथापि तु शमदमाद्युपेतः स्याद्विद्यार्थी 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति

---

ज्ञानोत्पत्तौ बहिरङ्गमुक्त्वा तत्रैवान्तरङ्गमुपदिशति। शमादीति। तत्र व्याप्त्यर्थमाशङ्कामाह। यदीति। विद्यासाधनत्वेनापि यज्ञादीनां वर्त्तमानताभङ्गेन विधिकल्पनमयुक्तं वाक्यभेदप्रसङ्गादतः यज्ञादिना विद्येति भावः। एवं तवाभिप्रायेऽपि हेत्वन्तरमवश्यमनुष्ठेयं न यज्ञाद्य-लभ्या विद्येति सूत्रयोजनया परिहरति। तथापीति। विविदिषा-वाक्यतुल्यतया शमादिवाक्यस्य नास्ति विधिपरतेति शङ्कते। नहीति। यस्मादेवमात्मानं विदित्वा पापेन कर्म्मणा न लिप्यते तस्मादेवं विद्वान् शमाद्युपेतो भूत्वा विचरेदिति गम्यते विधिरित्याह। नेतीति। विध्य-भावे तत्प्रशंसावैयर्थ्यादुक्तविधिसिद्धिरित्यर्थः। काण्वपाठे विधिस-माध्यन्दिनपाठे विध्यभावशङ्कापि नास्तीत्याह। पश्येदिति पठि-विधिफलमाह। तस्मादिति। यज्ञादीनामसाधनत्वशङ्कायामतोऽपे-क्ष्य साधनान्तरापेक्षोक्तेदानीं तदसाधनत्वशङ्कापि न युक्तेत्याह। यज्ञा-दीनीति। उक्तं स्मारयित्वा परिहरति। नन्वित्यादिना। सर्वेत्यादि।

इति विद्यासाधनत्वेन शमदमादीनां विधानात्, विहितानामवश्यानुष्ठेयत्वात्। नन्वत्रापि शमाद्युपेतो भूत्वा पश्यतीति वर्त्तमानापदेश उपलभ्यते न विधिः। नेति ब्रूमः, तस्मादिति प्रकृतप्रशंसापरिग्रहाद्विधित्वप्रतीतेः, पश्येदिति च माध्यन्दिना विस्पष्टमेव विधिमधीयते। तस्माद्यज्ञाद्यनपेक्षायामपि शमादीन्यपेक्षितव्यानि। यज्ञादीन्यपि त्वपेक्षितव्यानि यज्ञादिश्रुतेरेव। ननूक्तं 'यज्ञादिभिर्विविदिषन्ति' इत्यत्र न विधिरुपलभ्यत इति। सत्यमुक्तं, तथापि त्वपूर्वत्वात् संयोगस्य विधिः परिकल्प्यते, न ह्ययं यज्ञादीनां विविदिषासम्बन्धः पूर्वं प्राप्तो येनानूद्येत। 'तस्मात् पूषा प्रपिष्टभागोऽदन्तको हीति' एवमादिषु चाश्रुतविधिकेष्वपि वाक्येष्वपूर्वत्वाद्विधिं परिकल्प्य पौष्णं पेषणं विकृतौ प्रतीयेतेत्यादिविचारः प्रथमे तन्त्रे प्रवर्त्तितः। तथा चोक्तं 'विधिर्वा धारणवत्' इति

---

पूर्ववत्त्वमेव साधयति। न हीति। इत्यपि यज्ञवाक्यैरनुवादत्वा- पूर्वार्थो विधिर्वाक्यान्तरवाक्येन क्रियते न तत्र वाक्यभेदो दोषः इत्यत्र पूर्व- तन्त्रसम्मतिमाह। तस्मादिति। दर्शपूर्णमासयोः श्रुत 'तस्मात् पूषा' इ- त्यादि। तत्र पूष्णः प्रपिष्टद्रव्यसम्बन्धः प्रामाणिकः। न च पूषा देवता पिष्टभागो द्रव्यं दर्शपूर्णमासयोरस्ति तेन तद्देवत्यत्वायोगात् [illegible]- नुपपत्त्या द्रव्यदेवतासम्बन्धस्याविनाभावेन यागविध्युपस्थापकत्वात् व्यवहार- विषये विधिपदमध्याहृत्य प्रकरणादुत्कर्षेण पूषोद्देशेन पिष्टभागः कर्तव्य इति विकृतौ सम्बन्धः 'पौष्णं पेषणं विकृतौ प्रतीयेताचोदना प्रकृतौ' [जै॰सू॰] इत्यत्र विचारित इत्यर्थः। अवान्तरवाक्यभेदेन सत्यपि स्वीकृतो विधिरित्याह। तथा चेति। [illegible]

[जै० सू०]। स्मृतिष्वपि भगवद्गीताद्यास्वनभिसन्धाय फलमनुष्ठितानि यज्ञादीनि मुमुक्षोर्ज्ञानसाधनानि भवन्तीति प्रपञ्चितं, तस्माद्यज्ञादीनि शमादीनि च यथाश्रमं सर्वाण्येवाश्रमकर्माणि विद्योत्पत्तावपेक्षितव्यानि। तत्राप्येवंविदिति विद्यासंयोगात् प्रत्यासन्नानि विद्यासाधनानि शमादीनि विविदिषासंयोगात्तु बाह्यतराणि यज्ञादीनीति विवेक्तव्यम्॥

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्॥२८॥

प्राणसंवादे श्रूयते छन्दोगानां 'न ह वा एवंविदि किञ्चनानन्नं भवति' इति तथा वाजसनेयिनां 'न ह वा अस्यानन्नं जग्धं भवति नानन्नं प्रतिगृहीतं' इति सर्वमस्यादनीयमेव भवतीत्यर्थः। किमिदं सर्वान्नानुज्ञानं शमादिवद्विद्या

---

विधायकत्वं वाच्यमित्याह। स्मृतिष्वपीति। यज्ञादीनां ज्ञानोत्पत्तिहेतुत्वे श्रुतिस्मृतिन्यायसिद्धे फलितमाह। तस्मादिति। यज्ञादीनामपि श्रुतिस्मृतिन्यायेभ्योऽनुष्ठेयत्वे शमादीनां तेभ्योऽविशेषाभावात् यावद्विद्योदयमविशेषेणानुष्ठानं स्यादित्याशङ्क्याह। तत्रापीति॥

यज्ञादीनां शमादीनाञ्च विद्यार्थत्वमुक्तमिदानीं तच्छेषतयोक्ता तदङ्गत्वं विद्यासन्निध्युक्तसर्वान्नाभ्यनुज्ञानस्यापि विद्याशेषतामाशङ्क्य प्रत्याह। सर्वान्नेति। प्राणविदः सर्वान्नानुज्ञानं विषयं वक्तुं स प्राणदत्वं श्रुतिमाह। प्राणेति। जग्धं भक्षितम्। विषयश्च कथं संदिग्धमिति। दर्शनमिति। अपूर्वत्वविधिस्तुतिभ्यां संशयमाह। किमिति। तत्र प्रवृत्तिद्यादाः स्वतन्त्रपुरुषार्थत्वेनोपयुक्तायाः स्तुत्यर्थं सर्वान्नानुज्ञानवचनं संभवति विधानात्सदाचारविरोधः। पूर्वपक्षे प्राणविदो भक्ष्याभक्ष्यविभागाविधिः सिद्धान्ते विदुषोऽविदुषश्चापदि तद्विधिरिति मन्यामः

विधीयते उत स्तुत्यर्थं सङ्कीर्त्यत इति संशये विधिरिति तावत् प्राप्तम्, तथा हि प्रवृत्तिविशेषकर उपदेशो भवति, अतः प्राणविद्यासन्निधानात्तदङ्गत्वेनेयं नियमनिवृत्तिरुपदिश्यते। नन्वेवं सति भक्ष्याभक्ष्यविभागशास्त्रव्याघातः स्यात्। नैष दोषः, सामान्यविशेषभावाद्बाधोपपत्तेः। यथा प्राणिहिंसाप्रतिषेधस्य पशुसंज्ञपनविधिना बाधः, यथा च 'न काञ्चन परिहरेत्तद्व्रतम्' इत्यनेन वामदेव्यविद्याविषयेण सर्वस्त्रीपरिहारवचनेन सामान्यविषयं गम्यागम्यविभागशास्त्रं बाध्यते, एवमनेनापि प्राणविद्याविषयेण सर्वान्नभक्षणवचनेन भक्ष्याभक्ष्यविभागशास्त्रं बाध्येतेत्येवं प्राप्ते ब्रूमः, नेदं सर्वान्नानुज्ञानं

---

पूर्व्वपक्षयति। इतीति। विधिपक्षेऽनुष्ठानविशेषलाभं हेतुमाह। तथा हीति। सर्व्वान्नानुज्ञानं स्वतन्त्रमेव विधीयतामित्याशङ्क्य प्रकरणविरोधान्नैवमित्याह। अत इति। सर्व्वान्नस्य प्राणविद्याङ्गत्वे चेत्तर्हि 'न कलञ्जं भक्षयेत्' इत्यादि शास्त्रं विरुध्येतेति शङ्कते। नन्विति। प्राणविद्यातिरिक्तविषयं तदिति विरोधं परिहरति। नेत्यादिना। उपपत्तिमेव कर्म्मविषयदृष्टान्तेनोदाहरति। यथेति। तत्रैव विद्याविषयं दृष्टान्तमाह। यथा चेति। 'तदुपमन्त्रयते स हिङ्कारः' इत्यादिना ग्राम्यव्यापारगतचेष्टासु हिङ्कारादिदृष्टिर्विहिता, सा वामदेव्यविद्या तत्रोपमन्त्रणं सङ्केतकारः; दृष्टान्तयोरर्थं दार्ष्टान्तिके योजयति। एवमिति। विविदिषावाक्ये वर्त्तमानापदेशोऽप्यपूर्व्वत्वात् यज्ञमानदाक्षीकारवत् विधिकल्पनावत् न चेहापि वर्त्तमानापूर्व्वत्वात् विधिरिति मत्वानुक्त्वा सत्यर्थाद्वदेव हितान्तमाह। एवमिति। तत्र हेतुमाह। न हीति। 'दश पवीभवः'

विधीयत इति, न ह्यत्र विधायकः शब्द उपलभ्यते 'न ह वा एवंविदि किंचनानन्नं भवति' इति वर्तमानापदेशात्, न चास- त्यामपि विधिप्रतीतौ प्रवृत्तिविशेषकरत्वलोभेनैव विधिरभ्यु- पगन्तुं शक्यते। अपि च श्वादिमर्यादं प्राणस्यान्नमित्युक्त्वेद- मुच्यते 'नैवंविदि किंचिदनन्नं भवति' इति, न च श्वादिमर्या- दमन्नं मनुष्यदेहेनोपभोक्तुं शक्यते, शक्यते तु प्राणस्यान्नमिदं सर्वमिति विचिन्तयितुं, तस्मात् प्राणान्नविज्ञानप्रशंसार्थोऽय- मर्थवादो न सर्वान्नानुज्ञानविधिः। तद्दर्शयति 'सर्वान्नानु- मतिश्च प्राणात्यये' इति। एतदुक्तं भवति प्राणात्यय एव हि परस्यामापदि सर्वमन्नमदनीयत्वेनाभ्यनुज्ञायते तद्दर्शनात्, तथा हि श्रुतिश्चाक्रायणस्य ऋषेः कष्टायामवस्थायामभक्ष्यभक्षणे प्रवृत्तिं दर्शयति 'मटचीहतेषु कुरुषु' इत्यस्मिन् ब्राह्मणे 'चा- क्रायणः किल ऋषिरापद्गत इभ्येन सामिखादितान् कुल्मा-

---

इत्यादाविव वर्तमानापदेशेऽपि कल्प्यो विधिरित्यत आह। न चेति। सामान्यविधिबाधकत्वं श्रुतविशेषविधेरिष्टं विशेषकल्पना सामान्यवि- धाध्याकल्पनाया विरोधाभावापेक्षत्वादित्यर्थः। इतश्च स्तुत्यर्थमेवेदं वचो न विधिरित्याह। अपि चेति। 'आश्वभ्य आकृमिभ्य आकीटपत- ङ्गेभ्यस्तत्तेऽन्नम्' इति श्वपादयशक्यविषयो विधिर्न सम्भवतीत्याह। न चेति। तर्हि वचनवैयर्थ्यमित्यत आह सर्वं प्राणस्यान्नमिति धीस्तुत्यर्थ- मेवमित्याह। शक्यते त्विति। उक्तार्थे स्मृतिमादत्ते। तदिति। तदुदा- हरणं व्याकरोति। एतदिति। मटच्योऽशनयः पाषाणवृष्ट्यो रक्तवर्णा- श्चुद्रपक्षिविशेषा वा तैर्हतेषु कुरुषु तद्देशस्थसस्यक्षये सति सा(?)वत्। चाक्रा- यणस्य कथामाह। चाक्रायण इति। किल दुर्भिक्षे जाते जायया अनुपजात- पयोधरादिस्त्रीव्यञ्जनया सह देशान्तरं प्रतिपद्यमानः कदाचित् इभ्य- ग्रामे निवसन् इभ्येन हस्त्यारोहेण स्वामिनोऽर्जितान् भक्षितान्

च स्वादानुपानन्तु तदीयमुच्छिष्टदोषात् प्रत्याचचक्षे, कारणञ्चात्रोवाच 'न वा अजीविष्यमिमानखादन्' इति 'कामो म उदपानम्' इति च पुनश्चोत्तरेद्युस्तानेव स्वपरोच्छिष्टपर्य्युषितान् कुल्माषान् भक्षयाञ्चकार' इति। तदेतदुच्छिष्टोच्छिष्टपर्य्युषितभक्षणं दर्शयन्त्याः श्रुतेराशयातिशयो लक्ष्यते प्राणात्ययप्रसङ्गे प्राणसन्धारणायाभक्ष्यमपि भक्षयितव्यमिति, स्वस्थावस्थायान्तु तन्न कर्त्तव्यं विद्यावतापीत्यनुपानप्रत्याख्यानाद्गम्यते, तस्मादर्थवादो 'न ह वा एवंविदि' इत्येवमादिः॥

## अबाधाच्च॥ २८॥

एवञ्च सत्याहारशुद्धौ सत्त्वशुद्धिरित्येवमादि भक्ष्याभक्ष्यविभागशास्त्रमबाधितं भविष्यति॥

---

कुल्माषान् कुत्सितान् माषान् भक्षितवानित्यर्थः। अनुपानं कस्मान्नेत्युक्ते मदुच्छिष्टं मे पीतं स्यादिति प्रतिषिध्य किमेतेऽप्युच्छिष्टा नेति परेणोक्ते कारणमनुपाननिषेधे कथितवान् इत्याह। अनुपानमिति। कुल्माषांश्च भक्षयन्न जीवनमेव मे न स्यात् कामः स्वे कामो मे तडागादिषु उदकपानं भविष्यतीत्यर्थः। स्वयं च हित्वा शिष्टान् जायायै आजहार तया च भर्त्तुः स्वभावज्ञया निहितानुत्तरदिने प्रातरेव भक्षितवानित्याह। पुनश्चेति। कुल्माषभक्षणमुनेरभिप्रायमाह। तदिति। अनुपाननिषेधश्रुतेस्तात्पर्य्यमाह। तस्येति। सर्वान्नभक्षणस्य निरङ्कुशत्वाभावं फलितमाह। तस्मादिति॥

तस्मादर्थवादत्वे हेत्वन्तरमाह। अबाधाच्चेति। सामान्यशास्त्राविरोधात् न कल्प्यो विशेषविधिरित्युक्तं, अधुना सामान्यशास्त्रं दर्शयन् सूत्रं योजयति। एवञ्चेति। स्वस्थावस्थायां भक्ष्याभक्ष्यभेदे वर्त्तेतेति यावत्॥

## अपि च स्मर्यते ॥ ३० ॥

अपि च आपदि सर्वान्नभक्षणमपि स्मर्यते विदुषोऽविदुषश्चाविशेषेण ।

'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' ॥ इति ।

तथा 'मद्यं नित्यं ब्राह्मणः सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः सुरामास्ये सुरापाः कृमयो भवन्त्यभक्ष्यभक्षणात्' इति च स्मर्यते वर्जनमन्नस्य ॥

## शब्दश्चातोऽकामकारे ॥ ३१ ॥

शब्दश्चान्नस्य प्रतिषेधकः कामकारनिवृत्तिप्रयोजनः कठानां संहितायां श्रूयते 'तस्माद्ब्राह्मणः सुरां न पिबेत्' इति सोऽपि 'न ह वा एवंविदि' इत्यस्यार्थवादत्वादुपपन्नतरो भवति, तस्मादेवंजातीयका अर्थवादा न विधय इति ॥

---

आपदवस्थायामभक्ष्यभक्षणानुज्ञाने स्मृतिं संवादयति। अपीति। स्मृतिरपि विद्वद्विषयेत्याशङ्क्याह ॥ अपि चेति। सुरापानमवस्थायां-ऽपि न कार्यमित्याह। तथेति। ब्राह्मणो वर्जयेदिति शेषः। जीवि-तात्ययप्रसक्त्या सुरापि तदत्यये पातव्येत्याशङ्क्याह। सुरापस्येति। उष्णां सुरामिति शेषः। उष्णामग्नितप्तामिति यावत्। मरणान्तिकप्रायश्चित्त-दृष्टेस्तत्प्रसङ्गेऽपि सा न पातव्येत्यर्थः। इतश्च सा सदा न पेयेत्याह। सुरापा इति। तत्र हेतुरभक्ष्येति। मद्यमित्यादिस्मृतेः सार्वत्रिकं वर्जनमिति ॥

स्मृतिप्रामाण्यार्थं तन्मूलश्रुतिमाह। शब्दश्चेति। कामात् ब्राह्मणस्य सुरापस्य मरणान्तिकप्रायश्चित्तदर्शनादिति भावः। श्रौतनिषेधस्य प्रकृतोपयोगमाह। सोऽपीति। श्रुतिस्मृतिसिद्धमर्थमुपसंहरन् सूत्र-शब्दं व्याचष्टे। तस्मादिति ॥

## विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

'सर्वापेक्षा च' [वे॰सू॰३।४।२६] इत्यत्राश्रमकर्मणां विद्यासाधनत्वमवधारितम्, इदानीन्तु किममुमुक्षोरप्याश्रममात्रनिष्ठस्य विद्यामकामयमानस्य तान्यनुष्ठेयान्युताहो नेति चिन्त्यते, तत्र 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादिनाऽऽश्रमकर्मणां विद्यासाधनत्वेन विहितत्वाद्विद्यामनिच्छतः फलान्तरं कामयमानस्य नित्यान्यननुष्ठेयानि, अथ तस्याप्यनुष्ठेयानि न तर्ह्येषां विद्यासाधनत्वं नित्यानित्यसंयोगविरोधादित्यस्यां प्राप्तौ पठति आश्रममात्रनिष्ठस्याप्यमुमुक्षोः कर्त्तव्यान्येव नित्यानि कर्माणि 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिना विहितत्वात् । न हि वचनस्यातिभारो नाम कश्चिदस्ति ।

---

सर्वापेक्षोक्तिः शास्त्रान्तरविरोधे स्तुतिरित्युक्तं, एवं विद्यार्थत्वोक्तिर्यज्ञादीनां स्तुतिर्नित्यत्वश्रुतिविरोधादित्याशङ्क्याह । विहितत्वाच्चेति । व्यवहितेन सम्बन्धमाह । सर्वापेक्षेति । अग्निहोत्रादिकर्माण्यधिकृत्य विहितत्वाद्विनियुक्तविनियोगायोगाच्च संशयमाह । इदानीन्त्विति । नन्वग्निहोत्रादीनामुभयार्थत्वोक्त्या समन्वयपूर्वपक्षहेत्वाशङ्कोत्थानाद्विद्योपायोपदर्शनात् पादादिसङ्गतिः । पूर्वपक्षे विद्याहेतुत्वोक्तेः स्तुतित्वात् विविदिषावाक्यस्य विवक्षितार्थत्वासिद्धिः, सिद्धान्ते संयोगपृथक्त्वन्यायात् कर्मणामुभयार्थत्वसम्भवात् तत्सिद्धिरित्यभिप्रेत्य पूर्वपक्षमाह । तत्रेति । यज्ञादिश्रुतेरमुमुक्षोरपि तान्यनुष्ठेयानीत्याशङ्क्याह । अथेति । विविदिषाश्रुतेर्विद्यासंयोगेऽपि नैव सम्बन्धार्थत्वमित्याशङ्क्याह । नित्येति । आश्रमकर्माभावात् विद्याकामनायाः काम्यतया कर्मणामनावश्यकत्वं नित्यतया आवश्यकत्वमित्यं कर्मणामावश्यकत्वानावश्यकत्वे विरुद्धे स्याताम् अतो विद्यार्थत्वोक्तिः स्तुतिरर्थवादः । सिद्धान्तमवतार्य व्याकरोति । आश्रमेति नित्यतया विहितानां विद्यार्थतया विधाने गौरवाद्-

अथ यदुक्तं नैवं सति विद्यासाधनत्वमेषां स्यादित्यत उत्तरं पठति॥

## सहकारित्वेन च॥ ३३॥

विद्यासहकारीणि चैतानि स्युः विहितत्वादेव 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादिना। तदुक्तं 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति [वे० सू० ३।४।२६]। न चेदं विद्यासहकारित्ववचनमाश्रमकर्मणां प्रयाजादिवत् विद्याफलविषयं मन्तव्यं अविधिलक्षणत्वाद्विद्यायाः असाध्यत्वाच्च विद्याफलस्य। विधिलक्षणं हि साधनं दर्शपूर्णमासादि स्वर्गफलं सिसाधयिषया सहकारिसाधनान्तरमाकाङ्क्षति नैवं विद्या। तथा चोक्तं 'अतएव चाग्नीन्धनाद्यनपेक्षा' इति [वे० सू० ३।४।२५]। तस्मादुत्पत्तिसाधनत्व एवैषां सहकारित्ववाचो युक्तिः। न

---

युक्तमित्याशङ्क्याह। न हीति। उक्तमनूद्योत्तरत्वेन सूत्रमवतारयति। अथेत्यादिना॥

नित्यत्वेऽपि विद्यासंयुक्तत्वमग्निहोत्रादीनां [illegible] व्याचष्टे। विद्येति। विविदिषासंयोगमात्रमत्र स्तुत इत्यतो विद्यासंयुक्तत्वात्। तदुक्तमिति। सहकारित्वोक्त्या फलं प्रत्युपकारित्वमापाद्यमीष्टं कर्मणामित्याशङ्क्याह। न चेति। शास्त्रीयमन्वयव्यतिरेकसिद्धं बोधकारकत्वं न चात्रोभयमस्तीत्याह। असाध्यत्वादिति। अविधिलक्षणव्यतिरेकोदाहरणेन प्रपञ्चयति। विधीति। अङ्गभावस्य [illegible] पूर्वकत्वाद्विधेयाङ्गकल्पनम् विहितं दर्शपूर्णमासादि प्रयाजादीतिकर्तव्यताकाङ्क्षं तैरङ्गैर्युज्यते नाविहिता विद्यार्थः, तथापि कथमवगम[illegible] फलत्वेन विद्यायां कर्मणामन्वयराहित्यं तदाह। तथा चेति। कथं तर्हि सहकारित्ववचनं तदाह। तस्मादिति। यत् पुनर्भाष्ये वदति [illegible] वत् कर्मसु वस्तुतस्तु विद्या स्वकार्याय नापेक्षत इत्यभिप्रेत्य [illegible]

चात्र नित्यानित्यसंयोगविरोध आशङ्क्यः, कर्माभेदेऽपि संयोगभेदात्। नित्यो ह्येकः संयोगो यावज्जीवादिवाक्यकल्पितो न तस्य विद्याफलत्वं, अनित्यस्त्वपरः संयोगः 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादिवाक्यकल्पितः, तस्य विद्याफलत्वं यथा एकस्यापि खादिरस्य नित्येन संयोगेन क्रत्वर्थता अनित्येन संयोगेन पुरुषार्थता च तद्वत् ॥

## सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥

सर्वथाप्याश्रमधर्मत्वपक्षे विद्यासहकारित्वपक्षे च त एवाग्निहोत्रादयो धर्मा अनुष्ठेयाः, त एवेत्यवधारयन्नाचार्य्यः किं निवर्त्तयति, कर्मभेदाशङ्कामिति ब्रूमः। यथा कुण्डपायिना-

---

कारित्वोक्तिरित्यर्थः। परीक्षच्छङ्काव्य प्रत्याह। न चेति। संयोगभेदं विशदयति। नित्यो हीति। तत्तद्वाक्यविहितत्वेन पृथगेव सम्बन्धविधिः संयोगभेदः तस्मादुभयथात्वमविरुद्धमित्यर्थः। एकस्य तूभयत्वे संयोगपृथक्त्वमित्यस्मैतच्चिह्नितमित्युदाहरणेन दर्शयति। यथेति। बैल्वो वा खादिरो वा पालाशो वा यूपो नित्यः संयोगस्तेन क्रत्वर्थस्य खादिरत्वस्य खादिरं वीर्य्यकामस्येत्यपरः संयोगोऽनित्यस्तेन पुरुषार्थतेत्येकस्य खादिरत्वस्योभयार्थत्वे संयोगपृथक्त्वं हेतुस्तथा कर्मस्वभेदेऽपि संयोगभेदादुभयार्थत्वमित्यर्थः ॥

ननु प्रकरणान्तरस्थेभ्यो नित्यकर्मभ्यो भिन्नान्येव कर्माणि विविदिषावाक्ये विद्यासंयुक्ततया विधीयन्ते प्रकरणभेदस्य भेदकत्वात् तत्कथं तत्त्वोभयत्वं तत्राह। सर्व्वथेति। प्रतिज्ञां व्याचष्टे। सर्व्वथापीति। अवधारणार्थ्यं प्रश्नद्वारा दर्शयति। त एवेति। भेदशङ्कानिरासं व्यतिरेकदृष्टान्तेन स्पष्टयति। यथेति। कुण्डपायिनामयनगताग्निहोत्रस्य प्रकरणभेदात्प्रकृताग्निहोत्रात् कर्मान्तरत्ववत् विविदिषन्तीति विद्यार्थ-

सयति 'मासमग्निहोत्रं जुहोति' इत्यत्र नित्यादग्निहोत्रा कर्मान्तरमुपदिश्यते नैवमिह कर्मभेदोऽस्तीत्यर्थः । कुत उभयलिङ्गात् श्रुतिलिङ्गात् स्मृतिलिङ्गाच्च । श्रुतिलिङ्गं ताव 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इति सिद्धवत् त्पन्नरूपाण्येव यज्ञादीनि विविदिषायां विनियुङ्क्ते न जुहो इत्यादिवदपूर्वमेवैषां रूपमुत्पादयतीति । स्मृतिलिङ्गमपि 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः' इति विज्ञातक र्त्तव्यताकमेव कर्म विद्योत्पत्त्यर्थं दर्शयति । यस्यैते चत्वा त्वारिंशत्संस्कारा इत्याद्या च संस्कारप्रसिद्धिर्वैदिकेषु कर्म तत्संस्कृतस्य विद्योत्पत्तिमभिप्रेत्य स्मृतौ भवति, तस्मात् सा ध्विदमभेदावधारणम् ॥

---

युक्ततया विहितानामपि कर्मणां प्रकरणाभेदादेव कर्मान्तरत्वमुक्त दृष्टान्ते जुहोति होमविधिश्रुतेर्मासाख्यकालस्य चानुपादेयत्वेन गुणविधि त्वादग्निहोत्रपदस्य चाख्यातपारतन्त्र्यादाख्यातस्य च जुहोतेः सर्वावि तद्रूपवत्कर्म हित्वा व्यवहितनैयमिकाग्निहोत्रपरामर्शित्वायोगादप्र ताद्वर्यावचनोऽग्निहोत्रपदस्यापि कर्मान्तरविषयत्वमेवेति युक्तम् । विवि दिषायामेव विधिश्रवणात्प्रसिद्धानामेव यज्ञादीनां यज्ञादिपदैरनुवाद विद्यासंयोगमात्रं विधीयते तेषामिति न कर्मान्तरत्वमर्थः । उभयलिङ्ग प्रश्नद्वारा हेतुमवतार्य स्फोरयति । कुत इत्यादिना । प्रसिद्धकर्म संस्कारत्वप्रसिद्धिरपि तेषां चित्तमलनिरासेन ज्ञानोत्पत्तावुपकारकत्व वदयन्ती कर्माभेदं सूचयतीत्याह । यस्येति । गर्भाधानादयः समावर्त नान्ताः विवाहसंयोगान्ताः चतुर्दश, पञ्च महायज्ञाः, सप्त सोमसंस्थाः, सप्त हविःसंस्थाः, सप्त पाकसंस्थाः, अन्वष्टकं सहिताध्ययनं, मासं कर्म, अष्टकासु स्थालीपाकं, दैहिकं, भस्मसमूहनम्, अस्थिसञ्चयनं, श्राद्धानीत्येते चत्वारिंशत्संस्काराः । कर्मभेदाशङ्कायोगे फलितमाह । तस्मादिति ।

## अनभिभवञ्च दर्शयति ॥ ३५ ॥

सहकारित्वस्यैवैतदुपोद्बलकं लिङ्गदर्शनं अनभिभवञ्च दर्शयति श्रुतिर्ब्रह्मचर्यादिसाधनसम्पन्नस्य रागादिभिः क्लेशैः 'एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते' इत्यादिना, तस्माद्यज्ञादीन्याश्रमकर्माणि च भवन्ति विद्यासहकारीणि चेति स्थितम् ॥

## अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥

विधुरादीनां द्रव्यादिसम्पद्रहितानाञ्चान्यतमाश्रमप्रतिपत्तिहीनानामन्तरालवर्त्तिनां किं विद्यायामधिकारोऽस्ति किं वा नास्तीति संशये नास्तीति तावत् प्राप्तं, आश्रमकर्मणां विद्याहेतुत्वावधारणात् आश्रमकर्मासम्भवाच्चैतेषामित्येवं प्राप्ते

---

नित्यानि कर्माणि स्वतः पुण्यलोकावाप्तिफलान्यपि ज्ञानकामेनानुष्ठितानि ज्ञानार्थानीत्युक्तम् इदानीं ब्रह्मचर्यादीनामाश्रमकर्मणां क्लेशतनूकरणेन विद्योदये हेतुत्वमत्र लिङ्गमाह। अनभिभवञ्चेति। सूत्रस्य तात्पर्योक्तिपूर्वकमक्षरार्थं कथयति। सहकारित्वस्येति। उक्तमधिधीनमर्थमुपसंहरति। तस्मादिति॥

आश्रमकर्मणां विद्योपायत्वे सत्यनाश्रमकर्मणां नैवमिति मत्वाऽऽह। अन्तरेति। अनाश्रमिणो विधुरादीन् विषयीकृत्य तेषां कार्य-त्वदसिद्धेर्लिङ्गाप्रसिद्धेश्च संशयमाह। विधुरेति। स्वस्थानाश्रमकर्मणा-मुक्तविद्याहेतुत्वोक्त्या पादादिसङ्गतिः। पूर्वपक्षे यथा विधुरकर्मणां विद्याहेतुत्वासिद्धिः तथैवाश्रमकर्मणामपि विद्याहेतुत्वासिद्धिः। सिद्धान्ते त्वाश्रमित्वस्य व्याप्यत्वात्कर्मणां न सिद्धिरिति मत्वाऽऽह संशयमुक्त्वा पूर्वपक्षमाह। नास्तीत्यादिना। विविदिषावाक्ये यज्ञादिषु प्रत्येकं करण-

इदमाह, अन्तरा चापि तु, अनाश्रमित्वेनान्तराले वर्तमानोऽपि विद्यायामधिक्रियते, कुतः तद्दृष्टेः, रैक्ववाचक्नवीप्रभृतीनामेवम्भूतानामपि ब्रह्मवित्त्वश्रुत्युपलब्धेः ॥

अपि च स्मर्यते ॥ ३७ ॥

संवर्तप्रभृतीनाञ्च नग्नचर्यादियोगादनपेक्षिताश्रमकर्मणामपि महायोगित्वं स्मर्यते इतिहासे । ननु लिङ्गमिदं श्रुतिस्मृतिदर्शनमुपन्यस्तं का नु खलु प्राप्तिरिति साऽभिधीयते ।

विशेषानुग्रहश्च ॥ ३८ ॥

तेषामपि विधुरादीनामविरुद्धैः पुरुषमात्रसम्बन्धिभिः

---

विभक्तिश्रुतेराश्रमकर्माभावेऽपि वर्णमात्रधर्माणां दानादीनां सत्त्वात् विधुरादीनामपि विद्याधिकारः स्यादित्याशङ्क्य केवलवर्णधर्माणां विद्यासाधनत्वे सत्याश्रमकर्मणां वैयर्थ्यादनाश्रमिणामनधिकारो विद्यायामिति पूर्वपक्षमाह । आश्रमेति । अनाश्रमकर्मणां न विद्याहेतुतेति पूर्वपक्षं सिद्धान्तयति । एवमिति । प्रतिज्ञां व्याकरोति । अनाश्रमित्वेनेति । तद्दृष्टेरिति व्याचष्टे । रैक्वेति ॥

श्रौतीं दृष्टिं लिङ्गं स्मार्तीमपि दर्शयति । अपीति । श्रुतिस्मृतिसिद्धे सिद्धान्तेऽनन्तरसूत्रनिरस्यशङ्कोद्यमाह । नन्विति । अ... टपि कर्मणो रैक्वादीनां विद्यासम्भवात् वर्णोपाधाऽऽत्मकर्मणो विद्या... श्रुतिस्मृत्योरनियामकत्वात् नियामकान्तरं वक्तव्यमित्यर्थः । आश्रम... भावेऽपि वर्णधर्मविशेषैरनुगृहीता विद्योदेष्यतीति सूत्रेण ... ...वेति ॥

अविरुद्धैरनाश्रमित्वाविरोधिभिरिति यावत् । अत एव पुरुषमात्रसम्बन्धिभिरित्युक्तम् । आश्रमधर्मशून्यानां जपादिर्वापि शूद्रादिवर्णा...

पोपवासदेवताराधनादिभिर्धर्मविशेषैरनुग्रहो विद्यायाः सम्भवति। तथा च स्मृतिः—

'जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते'॥

इत्यसम्भवदाश्रमकर्मणोऽपि जपेऽधिकारं दर्शयति। जन्मान्तरानुष्ठितैरपि चाश्रमकर्मभिः सम्भवत्येव विद्याया अनुग्रहः। तथाच स्मृतिः—

'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्'।

इति जन्मान्तरसञ्चितानपि संस्कारविशेषाननुग्रहीतॄन् विद्याया दर्शयति। दृष्टार्था च विद्या प्रतिषेधाभावमात्रेणाप्यर्थिनमधिकरोति श्रवणादिषु, तस्माद्विधुरादीनामप्यधिकारो न विरुध्यते॥

---

कारोऽस्तीत्याशङ्क्याह। तथा चेति। मैत्रो मित्रे भवः सर्वभूताहिंसको दयावानित्यर्थः। किञ्च नैयोगिकफलेषु कर्मस्वानन्तर्यस्याचोदितत्वाद-नियतकालत्वे नैयोगिककर्माभावेऽप्याश्रमधर्मैरेव कर्मभिर्विद्या भविष्यतीति सूत्रस्य व्याख्यान्तरमाह। जन्मान्तरेति। जन्मान्तरे सञ्चितकर्मणां विद्यानुग्राहकत्वे मानमाह। तथा चेति। अनेकेषु जन्मसु सञ्चित-संस्कारैः सिद्धः सम्यग्धीपरिपाकवानित्यर्थः। यथाऽस्मिन् जन्मन्यधीत-वेदो धर्मजिज्ञासाधिकारी, तथास्मिन्नेव जन्मन्याश्रमधर्मरहितोऽपि विविदिषुर्विद्याधिकारी स्यादित्याशङ्क्याह। दृष्टार्थेति। अविद्यानि-वृत्तेर्दृष्टफलत्वात् नियमापेक्षाभावात् विधुरत्वनिषेधस्याभावमात्रेण तस्य पुरुषस्य प्रवृत्तिरित्यर्थः। श्रुतिस्मृतिन्यायसिद्धमर्थमुपसंहरति। तस्मा-दिति॥

**अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥**

अतस्त्वन्तरालवर्त्तित्वादितरदाश्रमवर्त्तित्वं ज्यायो विद्यासा- धनं श्रुतिस्मृतिसंदृष्टत्वात् श्रुतिलिङ्गाच्च 'तेनैति ब्रह्मवित् पुण्यकृत् तैजसश्च' इति। 'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः। संवत्सरमनाश्रमी स्थित्वा कृच्छ्रमेकञ्चरेत्' इति च स्मृतिलिङ्गात् ॥

**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ ४० ॥**

सन्त्यूर्ध्वरेतस आश्रमाः इति स्थापितम्, तांस्तु प्राप्तस्य कथञ्चित्ततः प्रच्युतिरस्ति नास्ति वेति संशयः, पूर्वधर्मस्वनुष्ठा- नचिकीर्षया रागादिवशेन वा प्रच्युतोऽपि स्यात् विशेषाभावा

---

यथोपाधावुक्तधर्ममात्रादपि विद्योत्पद्यते चेदाश्रमित्वमनर्थकमि- त्याशङ्क्याह। अतस्त्विति। विद्याय चिराचिरव्यक्तिहेतुतयाश्रमित्वा- नाश्रमित्वयोर्विशेषान्न वैयर्थ्यमिति मत्वा व्याचष्टे। अत इति। आश्रमे- ण्यादचिरेण विद्याहेतुत्वं ज्यायस्त्वम्। आश्रमित्वस्य ज्यायस्त्वे श्रुति- स्मृत्यनुगृहीतत्वं हेतुमाह। श्रुतीति। श्रुतौ पुण्यकृत्पदविशेषणविद्वा- च्छ्रेष्ठमाश्रमित्वमित्याह। श्रुतीति। तेन ज्ञानमार्गेण ब्रह्मविदेति ग- च्छति ब्रह्म प्राप्नोति, स च पुण्यं स्वाश्रमोक्तं कर्म करोतीति पुण्यकृ- दुच्यते। तेजसि परमात्मन्यात्मत्वेन वर्त्तत इति तैजसस्तत्र पुण्यकृत्पदार्थ- त्वादाश्रमित्वं ब्रह्मप्राप्तिहेतुतया श्रेष्ठं सिद्धमित्यर्थः। आश्रमित्वस्य श्रेष्ठत्वे स्मार्तमपि लिङ्गमनुकूलयति। अनाश्रमीति।

अनाश्रमिणां कर्मापि विद्याहेतुरेवादर्शयति, तत्र पूर्वाश्रमप्रच्युतस्य धीपूर्वकं प्रच्युतस्य कर्म किन्तु पापमित्याशङ्क्याह। तद्भूतस्येति। इच्छा- धीपूर्वकं प्रच्युतस्य कर्म किन्तु पापमित्याशङ्क्याह। तद्भूतस्येति। इच्छा- तुपादेन विषयं सूचयति। सन्तीति। तानाश्रमान् प्राप्तस्य धीपूर्वं प्रच्यु-

दित्येवं प्राप्ते उच्यते। तद्भूतस्य तु प्रतिपन्नोर्ध्वरेतोभावस्य न कथञ्चिदप्यतद्भावो न ततः प्रच्युतिः स्यात्, कुतः, नियमातद्रूपाभावेभ्यः। तथा हि 'अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्निति अरण्यमियादिति पदन्ततो न पुनरेयादित्युपनिषदिति—

'आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमं ।
आविमोचात् शरीरस्य सोऽनुतिष्ठेद्यथाविधि' ॥

इति चैवंजातीयको नियमः प्रच्युत्यभावं दर्शयति। यथा च 'ब्रह्मचर्यं समाप्य गृही भवेत् ब्रह्मचर्यादेव प्रव्रजेत्' इति चैवमादीन्यारोहरूपाणि वचांस्युपलभ्यन्ते नैवं प्रत्यवरोहरूपाणि, न चैवमाचाराः शिष्टा विद्यन्ते। यत्तु पूर्वधर्मस्यनुष्ठानचिकीर्षया प्रत्यवरोहणमिति, तदसत्, 'श्रेयान् स्वधर्मो

तस्य कर्मविषयत्वात् किं विद्याहेतुर्न वेति संशय सिद्धवत्कृत्य तद्धेतुमाह। ताऽस्त्विति। कथञ्चिद्रागाद्युद्रेकादित्यर्थः। सा मानवती न वेति विमर्शः। ऊर्ध्वरेतसां बुद्धिपूर्वं प्रच्युतानां कर्म यथोक्तविद्याहेतुर्नेत्युक्त्या पादादिसङ्गतिः। पूर्वपक्षे पूर्वोक्ताश्रमित्वस्य व्याप्तिसिद्धिः, सिद्धान्ते प्रच्युतेरप्रामाणिकत्वात् तदसिद्धिरिति फलं कृत्वा पूर्वपक्षयति। पूर्वेति। पूर्वाश्रमोक्तयागादिधर्मः सुखेन शक्योऽनुष्ठातुमिति तच्चिकीर्षया रागद्वेषवशेन च प्रत्यवरोहोऽपि प्रामाणिकः स्यात्, तथा चानाश्रमि कर्म्म निन्दितमपि यथा विद्यासाधनमुक्तं, तथा प्रत्यवरूढस्यापि कर्म्म विद्याहेतुराश्रमावरोहोऽनुष्ठेयस्तदारोहयोरन्यतरत्वात् तदारोहवदित्यवरोहस्य प्रामाणिकत्वादित्यर्थः। सिद्धान्तसूत्रमवतार्य व्याकरोति। एवमिति। उत्तराश्रमं प्राप्तस्य पूर्वाश्रमप्राप्तिरप्रामाणिकीत्यत्र प्रत्यर्थं हेतुमप्यमाह। कुत इति। तत्र नियमं व्याचष्टे। तथा हीति। अरण्यमित्येकास्मोपनिषत्पूर्वोक्तस्य वदेयात् गच्छेदिति, पदं शास्त्रमार्गस्यात्यागात् अरण्यम् पुनरियात् पुनर्नागच्छेत् न प्रत्यवरोहेदित्युपनिषद्वचसोऽपि-

विगुणः परधर्मात्' स्वनुष्ठितात् इति स्मरणात्, न्यायान्नं हि यं प्रति विधीयते स तस्य धर्मो न तु यो येन स्वनुष्ठातुं शक्यते, चोदनालक्षणत्वाद्धर्मस्य। न च रागादिवशात् प्रच्युतिः, नियमशास्त्रस्य बलीयस्त्वात्। जैमिनेरपीत्यपिशब्देन जैमिनिबादरायणयोरत्र सम्प्रतिपत्तिं शास्ति प्रतिपत्तिदार्ढ्याय ॥

## न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥४१॥

यदि नैष्ठिको ब्रह्मचारी प्रमादादवकीर्येत किं तस्य 'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत' इत्येतत् प्रायश्चित्तं स्यादुत नेति। नेत्युच्यते, यदप्यधिकारलक्षणे निर्णीतं प्रायश्चित्तं

---

त्यर्थः। स्मार्तमपि नियमं कथयति। आचार्येणेति। उक्तनियमात्ययमाह। एवमिति। अतद्रूपमप्रत्यवरोहं व्याकरोति। यथा चेति। अभावं शिष्टाचाराभावं व्याचष्टे। न चेति। परोक्तमनुमानमनुस्मृतिविरोधेन दूषयति। यत्त्विति। इतश्चानुमानमयुक्तमित्याह। न्यायाच्चेति। यत्तु रागादिवशात् प्रत्यवरोहणमिति तत्राह। न चेति। ततोन पुनरित्यादि नियमशास्त्रम्। अपिशब्दं सूत्रावयवं व्याचष्टे। जैमिनेरिति। अत्रेति प्रामाणिकप्रच्युत्यभावोक्तिः। उभयसम्प्रतिपत्तिफलमाह। प्रतिपत्तीति ॥

प्रत्यवरोहणमशास्त्रीयमित्युक्तं, सम्प्रति प्रमादात् प्रत्यवरोहे प्रायश्चित्तमस्तीति वक्तुं पूर्वपक्षमाह। न चेति। ऊर्ध्वरेतसो धीपूर्वकब्रह्मचर्यं विपयसेवां किं नास्ति प्रायश्चित्तं उतास्तीति प्रायश्चित्ताभावस्तंमुत्पातवीप्सनुक्ते च संशयमाह। यदीति। प्रमादादिति पूर्वच्युतब्रह्मचर्याणामेवोर्ध्वरेतसां प्रायश्चित्तचिन्तेयमिति द्योतयति। अवकीर्येत योनौ रेतः सिञ्चेदवकीर्णी योनौ च्छिन्नं रेतो यस्यासौऽवकीर्णी। प्रमादाच्च्युतब्रह्मचर्याणामूर्ध्वरेतसां ततप्रायश्चित्तानां क्व

अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वादिति तदपि न नैष्ठिकस्य भवितुमर्हति। किं कारणम्,

'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः।

प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा'॥

इत्यप्रतिसमाधेयपतनस्मरणात् छिन्नशिरस इव प्रतिक्रियानुपपत्तेः। उपकुर्वाणस्य तु तादृक्पतनस्मरणाभावादुपपद्यते तत् प्रायश्चित्तं॥

---

विद्यातेतरित्युक्त्वा पादादिसङ्गतिः। पूर्वपक्षे प्रमादीनामूर्ध्वरेतस्त्वात्यन्तिकादधःपातात् पुमर्थासिद्धिः, सिद्धान्ते तेषामपि प्रायश्चित्तेन पतनसमाधानात् तत्सिद्धिरित्युपेत्य पूर्वपक्षसूत्रमपवादार्थं योजयति। उच्यत इति। तदेव यथाध्याये निर्धारितं प्रायश्चित्तमुदाहरति। अवकीर्णीति। ब्रह्मचार्यवकीर्णी चेल्लिङ्ग पशुहोमार्थसाधनं कर्तव्यं, किं वा लौकिकेऽग्नावित्यत्र तत्कर्मेति सन्देहे पूर्वाधिकरणे यदाहवनीये जुहोति तेन सूर्योऽस्याभीष्टः प्रीतो भवतीत्याहवनीयस्य सर्वहोमार्थत्वादाहवनीये तावदुपनयनहोमाः कार्या इति प्राप्य जातपुत्रोऽग्नीनादधीतेति कृतदारस्याग्न्याधानविधानादुपनयनकाले दाराभावादाधानस्याप्राप्तकालत्वात् आहवनीयाभावात् लौकिकाग्निषु उपनयनहोमा इति राद्धान्ते, ब्रह्मचारी यद्यवकीर्णी स्यात् तस्य भार्या स्यात् ततोऽग्न्याधानमित्यधिकयत्नं निराकर्तुमतिदेशाधिकरणमवकीर्णिपशुश्चेति। यथोपनयनकाले लौकिकाग्नौ होमस्तथावकीर्णिपशुश्च तत्रैव होतव्यः। पराधीनस्य पत्नीपरिग्रहोत्तरकालत्वात् पूर्वमप्यभावादिनस्याग्नेः परिग्रहभूताया भार्यात्वलक्षणयाऽऽधाने पात्राभावादित्यर्थः। यदधिकारलक्षणे निर्णीतमधिकारिकं प्रायश्चित्तं तदपि नैष्ठिकस्य भवितुं नार्हतीति सम्बन्धः। प्रश्नपूर्वकं हेतुमाह। किमित्यादिना। किंविषयं तर्हि प्रायश्चित्तवचनं ब्रह्मचारिविषये उपकुर्वाणस्यापि तद्योगात् तत्राह। उपेति। तादृगित्यप्रतिसमाधेयत्योक्तिः॥

उपपूर्वमपि त्वेके भावमशनवत्तदुक्तं ॥ ४२ ॥

अपि त्वेके आचार्या उपपातकमेवैतदिति मन्यन्ते यन्नैष्ठिकस्य गुरुदारादिभ्योऽन्यत्र ब्रह्मचर्यं विशीर्यते न तन्महापातकं भवति गुरुतल्पादिषु महापातकेष्वपरिगणनात्। तस्मादुपकुर्वाणवन्नैष्ठिकस्यापि प्रायश्चित्तभावमिच्छन्ति ब्रह्मचारित्वाविशेषादवकीर्णित्वाविशेषाच्च अशनवत्, यथा ब्रह्मचारिणो मधुमांसाशने व्रतलोपः पुनः संस्कारश्चैवमिति। ये हि प्रायश्चित्ताभावमिच्छन्ति न तेषां मूलमुपलभ्यते, ये तु भावमिच्छन्ति तेषां ब्रह्मचार्यवकीर्णीत्येतदविशेषश्रवणं मूलम्। तस्माद्भावो युक्ततरः। तदुक्तं प्रमाणलक्षणे, 'समा विप्रतिपत्तिः स्यात् शास्त्रस्था वा तन्निमित्तत्वात्' इति। प्रायश्चित्ताभाव-

---

सिद्धान्तयति। उपपूर्वमिति। उपपदं पूर्वं यस्य पतनस्य तदुपपूर्वमिति व्याकरोति। अपि त्विति प्रायश्चित्ताभावं व्यावर्तयितुमपीत्युक्तम्। एवकारार्थमाह। नेति। नैष्ठिकव्रतलोपस्योपपातकत्वेऽपि प्रायश्चित्तसत्त्वे किञ्जातमित्याशङ्क्य उपपातकसामान्यप्रायश्चित्तं स्यादिति सूत्रावयवं व्याकुर्वन्नाह। तस्मादिति। उक्तमर्थं दृष्टान्तेनतावदर्शयति। अशनवदिति। प्रायश्चित्तं न पश्यामीति श्रवणात् कथं तद्भावधीरित्याशङ्क्याह। ये हीति। प्रायश्चित्तं नाप्नोति स्मरणाभावात् न पश्यामीति दर्शनाभावमात्रस्मरणादित्यर्थः। भाववादिनामपि तुल्या मूलानुपलब्धिरित्याशङ्क्याह। ये त्विति। ननु न पश्यामीति स्मरणस्य प्रायश्चित्तनिषेधार्थत्वमनुमाय तदर्थश्रुतिकल्पनात् तद्विरोधे सामान्यश्रुत्या प्रायश्चित्तसत्ता नाभ्युपगम्यते तत्राह। तस्मादिति। यावद्दर्शनाभावस्मरणस्य प्रायश्चित्तनिषेधार्थत्वकल्पनया तदर्थश्रुतिरनुमीयते तावदतिशीघ्रश्रुत्या प्रायश्चित्तं श्रुतिगम्यतीति न कृता-

स्मरणन्त्वेवं सति यत्नगौरवोत्पादनार्थमिति व्याख्यातव्यं। एवं भिक्षुवैखानसयोरपि वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादश-

---

प्रायश्चित्ताभावधीरिति भावः। उक्तेऽर्थे यववराहाधिकरणसम्मति-माह। तदुक्तमिति। यवमयश्चरुर्वाराही उपानहावित्यत्र यववराह-शब्दाभ्यां प्रियङ्गुकृष्णशकुनिपक्षो वा दीर्घशूकसूकरपक्षो वेति सन्देहे पूर्वपक्षमाह। समेति। केचिद्दीर्घशूके यवशब्दं प्रयुञ्जते, प्रियङ्गुषु चापरे, वराहशब्दमपि सूकरे केचिदाहुः, कृष्णशकुनौ चान्ये, तेन प्रयोगसाम्यात् समा तुल्या विकल्पेन प्रतिपत्तिः स्यादित्यर्थः। सिद्धान्त-माह। शास्त्रस्था वेति। वाशब्दः पक्षव्यावृत्त्यर्थः॥ या शास्त्रमूला धीः सैव ग्राह्या शास्त्रनिमित्तत्वात् तद्धर्मादिज्ञानस्य, शास्त्रञ्च यदा च अन्या ओषधयो म्लायन्ति अथैते मोदमानास्तिष्ठन्ति वराहं गावो-ऽनुधावन्ति इति च यववराहशब्दयोर्दीर्घशूकसूकरविषयत्वं, तस्मात् धीसाम्याभावात् विकल्पासिद्धेः शास्त्रमूला प्रसिद्धिः सैव ग्राह्येति प्रथमेऽध्याये सिद्धं, तथात्रापि शास्त्रमूलत्वात् प्रायश्चित्ताभावसिद्धे-स्तत्पक्ष्यं युक्तमित्यर्थः, प्रायश्चित्तं न पश्यामि इति स्मृतेः, तर्हि का गतिस्तत्राह। प्रायश्चित्तेति। एवं सति सामान्यतुल्या प्रायश्चित्तस्मृते निश्चिते सतीत्यर्थः। यदि कथञ्चिन्नैष्ठिकस्य ब्रह्मचर्यं लुप्येत तदा न प्रायश्चित्तं दृश्यते, तेन नैष्ठिकेन ब्रह्मचर्यं यत्नवता भाव्यमिति तद्वि-षयस्य यत्नस्याप्रमादेन सदा कार्यतारूपं गौरवमुत्पादयितुं प्रायश्चित्ता-भावस्मरणमित्यर्थः। नैष्ठिके हि दर्शितन्यायमितरयोरतिदिशति। एवमिति। विशेषतोऽपि प्रायश्चित्तविधेरेतयोरस्ति प्रामादिके व्रतलोपे प्रायश्चित्तमित्याह। वानप्रस्थ इति। दीक्षाभेदे व्रतलोपे प्रमादतो ब्रह्मचर्यभङ्गे कृच्छ्रं चरित्वा महाकक्षं वृक्षप्रकाण्डं देयं वर्धयेदिति वाक्यस्य.॥ कृच्छ्रं विभिनष्टि। द्वादशेति। दिनत्रयमेकवारभोजनं, दिनत्रयं रात्रिभोजनं, दिनत्रयमयाचितं, दिनत्रयमुपवासकरणमित्येवं-रूपमित्यर्थः। परिव्राजकेऽपि प्रमादतो व्रतलोपे तुल्यं कृच्छ्रानुष्ठान-मित्याह। भिक्षुरिति। मोषस्य वृक्षाङ्कुरात् वदभिदृगमनादय मह्रा-णय वर्धयेदित्याह। सोमेति।

रानश्चरित्वा मद्याकचं वर्द्धयेत्, भिक्षुर्वानप्रस्थवत् सोमवृद्धिवर्जं स्वशास्त्रसंस्कारश्चेत्येवमादिप्रायश्चित्तस्मरणमनुसर्तव्यम्॥

**वहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥**

यद्यूर्ध्वरेतसां स्वाश्रमेभ्यः प्रच्यवनं महापातकं, यदि वोपपातकमुभयथापि शिष्टैस्ते वहिः कर्तव्याः।

'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः।
प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा'। इति

"सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम्।
पुनः स पूतो भवति पङ्क्तिपावन एव च॥
मनोवाक्कायजान् दोषान् ज्ञानोत्थांश्च प्रमादजान्।
सर्वान् दहति योगाग्निस्तूलराशिमिवानलः॥
उपपातेषु सर्वेषु पातकेषु महत्सु च।
प्रविश्य रजनीपादं ब्रह्मध्यानं समाचरेत्॥
नित्यमेव तु कुर्वीत प्राणायामांस्तु षोडश।
अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः॥"

इत्यादिपरिव्राजकविषयं ग्राह्मम्। तेनाभिहितः संस्कारो ध्यानादिः स च कर्तव्यो भिक्षुणेत्याह। स्वशास्त्रेति। ऊर्ध्वरेतसां प्रमादच्युतब्रह्मचर्याणां कृतप्रायश्चित्तानां अधिकारोऽस्ति विद्यायामिति भावः।

कृतप्रायश्चित्तानामपि तेषां शिष्टाव्यवहार्यत्वमाह। वहिरिति। कृतप्रायश्चित्तैः सह शिष्टाचाररूपं कर्म विषयस्तत् किं विद्याङ्गं किं नेति संशये प्रायुक्तप्रायश्चित्तैरेव तेषां व्यवहार्यतासिद्धे रङ्गमिति प्राप्ते सिद्धान्तमाह। यदीति। मतिसार्थक्या पेतद्वयं व्याचष्टे। आरूढ इत्यादिना। दुश्चरिताचरणकर्मेणो लोकद्वयेऽपि कर्तुरशुद्धिं दधाति, तत्र प्रायश्चित्तेन लोकद्वयेऽपि कस्यचिदशुद्धिरपनीयते कस्यचित्तु पारलौकिकाशुद्धिरपाक्रियते ऐहिकाशुद्धिरनुवर्तते। तत्र ...

'आरूढपतितं विप्रं मण्डलाच्च विनिःसृतं।
उद्बद्धं कृमिदष्टञ्च स्पृष्ट्वा चान्द्रायणं चरेत्'॥ इति।

चैवमादिनिन्दातिशयस्मृतिभ्यः शिष्टाचाराच्च। न हि यज्ञाध्ययनविवाहादीनि तैः सहाचरन्ति शिष्टाः॥

## स्वामिनः फलश्रुतेरित्यात्रेयः॥ ४४॥

अङ्गेषूपासनेषु संशयः किन्तानि यजमानकर्माणि आहो-स्विदृत्विक्कर्माणि, किन्तावत् प्राप्तं यजमानकर्माणीति, कुतः

---

'बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः।
शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत्'॥ इति।

तदेवमारूढो नैष्ठिकमित्यादिस्मृतिलिङ्गादाचाराच्च परलोका-शुद्धेरपनीतत्वेऽपि अव्यवहार्यत्ववचनाच्च तैर्व्यवहारस्याचारस्य शिष्टा-कृतत्वं, तदेवमुक्ताचारश्लोकविद्यावत्त्वाभिधानात् प्रायश्चित्ते पादादि-सङ्गतिः। पूर्वपक्षे बालघ्नानित्यादिस्मृतिविरोधः सिद्धान्ते तदानुगुण्य-मिति भावः॥

अस्मिन् पापकारिणि तेन व्यवहारादन्यस्य स्वपकारवदत्रापि किम् उपासितुः कर्त्तरि तेन व्यवहारात् फलसम्बन्धोपकारमन्ययजमानस्य दर्शयन् पूर्वपक्षयति। स्वामिन इति। कर्माङ्गसम्बद्धान्युपासनानि विषयस्तेषु ऋत्विक्-कर्तृत्वधिया संशयमाह। अङ्गेष्विति। शास्त्रीयाङ्गाश्रितोपासनानां स्व-तन्त्रफलानामृत्विक्कर्तृकत्वेऽपि यजमानगामिफलत्वोक्तेरस्ति पादादिस-ङ्गतिः। पूर्वपक्षे कर्तृत्वभोक्तृत्वयोरेकाधिकरण्यासिद्धिः, सिद्धान्ते तत्र-त्य कर्तुरस्वातन्त्र्यात्तस्य यजमानाधीनत्वात्तत्कर्तृत्वमपि तदधीनमित्ये-काधिकरण्यस्याविरुद्धमिति सिद्धान्तस्य प्रश्नपूर्वकं पूर्वपक्षमाह। कि-मिति। तत्र हेतुं प्रश्नद्वारा दर्शयति। कुत इति। फलश्रुतेरेव विष-

फलश्रुतेः। फलं हि श्रूयते 'वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान् वृष्टौ पञ्चविधं सामोपास्ते' इत्यादि [छा०उ०]। तच्च स्वामिगामि न्याय्यं तस्य साङ्गे प्रयोगे, अधिकृतत्वादधिकृताधिकारत्वाच्चैवंजातीयकस्य। फलञ्च कर्तर्युपासनानां श्रूयते 'वर्षत्यस्मै य उपास्ते' इत्यादि [छा०उ०]। ननु ऋत्विजोऽपि फलं दृष्टं 'आत्मने वा यजमानाय वा यं कामं कामयते तमागायती'ति। न, तस्य वाचनिकत्वात्। तस्मात् स्वामिन एव फलवत्सूपासनेषु कर्तृत्वमित्यात्रेय आचार्यो मन्यते॥

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते॥४५॥

नैतदस्ति स्वामिकर्माण्युपासनानीति, ऋत्विक्कर्माण्येतानि

---

दर्शयति। फलं हीति। श्रुतमपि फलमृत्विग्गतं किन्न स्यादत आह- तच्चेति। तत्र हेतुः। तस्येति। उद्गीथाद्युपास्तिविधीनां प्राप्तोद्देशे- क्रत्वधिकारिण एव प्राप्तेस्तस्यैवोद्देश्यत्वयोगात् यदाग्नेयोपासनं गोदोहनवदधिकृताधिकारित्वात्क्रत्वधिकारिण एव गोदोहनवत् विद्याफलेन सङ्गतिरित्याह। अधिकृतेति। तथापि कथम् उपासनानां याजमानत्वं तत्राह। फलञ्चेति। एककर्तृत्वे फलितत्वमपि यजमानस्य तु कर्तृत्वभोक्तृत्वयोरैकाधिकरण्यादित्यर्थः। यजमानगामि फलं- स्यात्र व्यभिचारं शङ्कते। नन्विति। ऋत्विग्गतो याजमानफलं यथा क्वचिदपवादः स्यादित्याह। न, तस्येति। वाचनिकापवादाभावे तदं- स्थितिरित्युपसंहरति। तस्मादिति॥

अङ्गोपास्तीनां याजमानत्वात् न स्वतन्त्रफलतेति प्राप्ते सिद्धान्तयति आर्त्विज्यमिति। तत्र प्रतिज्ञां विभजते। नैतदिति।

स्युरित्यौडुलोमिराचार्यो मन्यते, किं कारणं, तस्मै हि साङ्गाय कर्मणे ऋत्विक् परिक्रीयते, तत्प्रयोगान्तःपातीनि चोद्गीथाद्युपासनानि अधिकृताधिकारत्वात्। तस्माद्गोदोहनादिकर्मनियमवदेव ऋत्विग्भिर्निर्वर्त्त्येरन्। तथा च 'तं ह बको दाल्भ्यो विदाञ्चकार स ह नैमिषीयाणामुद्गाता बभूव' इत्युद्गातृकर्तृकतां विज्ञानस्य दर्शयति। यत्तूक्तं कर्त्राश्रयं फलं श्रूयत इति, नैष दोषः, परार्थत्वादृत्विजोऽन्यत्र वचनात् फलसम्बन्धानुपपत्तेः॥

## श्रुतेश्च ॥४६॥

'यां वै काञ्चन यज्ञे ऋत्विज आशिषमाशासत इति यजमानायैव तामाशासत इति होवाचेति' तस्मादु हैवंविदुद्गाता ब्रूयात् कं ते काममागायानि' इति [छा०उ०] चर्त्विक्कर्तृकस्य

---

कथमन्यस्य फलमिति शङ्कते। किं कारणमिति। परिक्रयश्रवणेनोत्तरमाह। तस्मै हीति। ऋत्विजो यजमानेन स्वगामिने फलाय क्रीतत्वादनुपपत्ति-रित्यर्थः। स्वाङ्गकर्मार्थं क्रीतत्वेऽपि ध्यानार्थमक्रीतत्वात् कथमुपास्ती-नामार्त्विक्कर्तृत्वं तत्राह। तदिति। यज्ञोपास्तीनामधिकृताधिकारित्वे फलितमाह। तस्मादिति। तासामार्त्विक्कर्तृत्वे श्रौतं लिङ्गमाह। तथा चेति। तमुद्गीथाख्यं प्रणवं प्राणादिदृष्टिविशिष्टं बको नामतो दल्भस्या-पत्यं दाल्भ्यो विदाञ्चकार विदितवान्, विदित्वा च नैमिषीयाणां सत्रि-याणामुद्गाताऽऽसीदित्यर्थः। पूर्वपक्षबीजमनुवदति। यत्त्विति। उद्ग-गतो याजमानत्वेऽपि फलस्य वचनादपवादो यथा नैवं तत्रोद्गर्भस्याति-रित्युक्तमित्याह। नेत्यादिना॥

इतश्चोपास्तीनाम् ऋत्विक्कर्तृत्वं यजमानफलगामित्वं चेत्याह। श्रुते-श्चेति। उक्तमर्थं श्रुतिलिङ्गेन विशदयन्नुपसंहरति। तस्मादिति।

विज्ञानस्य यजमानगामि फलं दर्शयति, तस्मादङ्गोपासना-
न्त्विक्कर्मत्वसिद्धिः ॥

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥४७॥

'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्, बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः" इति बृहदारण्यके श्रूयते, तत्र संशयः मौनं विधीयते न वेति । न विधीयत इति तावत् प्राप्तं, बाल्येन तिष्ठा-

---

सिद्धे चोपासनानाम् ऋत्विक्कर्तृत्वे तन्निर्धारणानियमन्यायेन स्वतन्त्रफल-सिद्धिरिति भावः ॥

विद्वत्प्रभृतीनां मन्दाधिकारिणां धीसाधनोक्तिप्रसङ्गेनाङ्गोत्तम-मधमधीसाधनमेवं निरूप्य पुनरुत्तममध्यमधीसाधनं वक्तुमारभते। सह-कार्यन्तरेति। विषयवाक्यमुदाहरति। तस्मादिति। यस्मात्पूर्वे ब्राह्मणा विदित्वाऽऽत्मानमेव एषणाभ्यो व्युत्थाय च भिक्षाचर्यं चरन्ति स्म तस्मा-दधुनातनोऽपि ब्राह्मणः पाण्डित्यं षडङ्गाध्ययनजा ब्रह्मबुद्धिस्तद्वान् पण्डितः तस्य भावं पाण्डित्यं श्रवणं तन्निर्विद्य निश्चयेन लब्ध्वा बाल्येन ज्ञानबलभावेन युक्तितोऽसम्भावनानिरासरूपमननेन युक्तत्वेन ति-तिष्ठासेत् स्थातुमिच्छेत् । उक्तदार्ढ्यार्थं बाल्यं चेत्यादिरनुवादः। अथ मननानन्तरं मुनिर्मननशीलो निदिध्यासनपरः स्यात् मौनात् अमौनं पाण्डित्यं चामौनं च निदिध्यासनं निश्चयेन लब्ध्वा उक्तहेतुत्रयस्य ब्रह्म-हेतुत्वात् ब्रह्माहमित्यवगच्छतीति ब्राह्मणः साक्षात्कृतब्रह्म भवतीत्यर्थः। तत्र श्रुतं मौनं विषयीकृत्य मौनशब्दस्य सिद्धे पारिव्राज्ये ज्ञानं च ज्ञानाभ्यासे प्रयोगसिद्धेः संशयमाह। तत्रेति। निरुपाधिविद्यान्तरङ्ग-साधनमौनविधिसाधनात्पादादिसङ्गतिः। पूर्वपक्षे मौनस्यानुष्ठेयत्वा-

सेदित्यत्रैव विधेरवसितत्वात्। न ह्यथ मुनिरित्यत्र विधा-
यिका विभक्तिरुपलभ्यते, तस्मादयमनुवादो युक्तः। कुतः
प्राप्तिरिति चेत् मुनिपण्डितशब्दयोर्ज्ञानार्थत्वात्, पाण्डित्यं
निर्विद्येत्येव प्राप्तं मौनम्। अपि चामौनञ्च मौनञ्च निर्वि-
द्याथ ब्राह्मण इत्यत्र तावद् ब्राह्मणत्वं न विधीयते, प्रागेव
प्राप्तत्वात्, तस्मादथ ब्राह्मण इति प्रशंसावादः, तथैवाथ मुनि-
रित्यपि भवितुमर्हति समाननिर्देशत्वादित्येवं प्राप्ते ब्रूमः,
सहकार्यन्तरविधिरिति। विद्यासहकारिणो मौनस्य बाल्य-
पाण्डित्यवद्विधिरेवाश्रयितव्यः अपूर्वत्वात्। ननु पाण्डित्य-

---

सिद्धिः, विद्वान्ते तस्यानुष्ठेयत्वसिद्धिरिति मत्वा तं वेत्यादिवाक्यशेषा-
दङ्गोपासनवत्त्रिकर्मेतिवत् अथ ब्राह्मण इति विधिहीनमव्ययेपाद्य
मुनिरित्येषोऽपि न विधिरिति पूर्वपक्षयति। नेत्यादिना। ननु बाल्ये-
नेत्युपक्रमे विधिश्रुतेर्मौनेऽपि विधिरस्तु नेत्याह। बाल्येनेति। तदेवोप-
पादयति। न हीति। यद्यत्रापि विधेयत्वं तर्हि विधिः श्रूयेत बाल्यवच्च
न श्रूयते अतः श्रोतव्यत्वे सत्यश्रवणाद्विध्यभावसिद्धिरित्यर्थः। तर्हि मौन-
वाक्यस्य का गतिरस्ति तत्राह। तस्मादिति। अनधिगतस्यानुवादायोगा-
दन्यत्र विध्यनुपलब्धेर्विधिरेवायमिति मनुते। कुत इति। पाण्डित्य-
विधानादेव मौनमपि सिद्धं तस्यैव मौनत्वादित्याह। ब्रूम इति। मुनि-
शब्दस्य भिक्षुवचनत्वेऽपि तत्राप्यस्य विधाना इत्यनुवाद एवेति मत्वा
मौनस्य चाविधेयत्वे हेत्वन्तरमाह। अपि चेति। एकवाक्यतानुरोधात्
मौनवाक्येऽपि न विधिरित्यर्थः। यदा पाण्डित्येन मौनस्य प्राप्तिस्तदा
विधीयमानबाल्यशेषत्वप्रसङ्गः, न हि पाण्डित्यमात्रेणैव प्राप्तं किन्तु
बाल्येऽनुष्ठितेऽनन्तरं मननापरपर्यायं पाण्डित्यं प्राप्तं स्यात्, तथा च तत्
प्राप्तं, यदा मौनामौनयोःश्रमस्य विध्यन्तरप्राप्तस्य अनुवादस्तदा च ब्रा-
ह्मणानुवादसमभिव्याहारेण श्रूयत इति व्यक्ता स्तुतिरिति भावः।
तस्मादिति। बाल्यपाण्डित्यातिरिक्तस्य मौनस्याविधेयत्वात् न तत् सह-

शब्देनैव मौनस्यावगतत्वमुक्तं, नैष दोषः, मुनिशब्दस्य ज्ञानातिशयार्थत्वान्मननान्मुनिरिति च व्युत्पत्तिसम्भवात् 'मुनीनामप्यहं व्यासः" इति च प्रयोगदर्शनात्। ननु मुनिशब्द उत्तमाश्रमवचनोऽपि श्रूयते 'गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थम्' इत्यत्र। न, 'वाल्मीकिर्मुनिपुङ्गवः" इत्यादिषु व्यभिचारदर्शनात्, इतराश्रमसन्निधानात्तु, पारिशेष्यात् तत्रोत्तमाश्रमोपादानं, ज्ञानप्रधानत्वादुत्तमाश्रमस्य। तस्माद्बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं ज्ञानातिशयरूपं विधीयते। यत्तु बाल्य एव विधेः पर्यवसानमिति, तथाप्यपूर्वत्वान्मुनित्वस्य विधेयत्वमाश्रीयते, मुनिः स्यादिति निर्वेदनीयत्वनिर्देशादपि मौनस्य बाल्यपाण्डित्यवद्विधेयत्व-

---

मौनमनुष्ठेयमिति प्राप्तं पक्षमनूद्य सिद्धान्तमाह। एवमिति। अपूर्वत्वमसिद्धमिति शङ्कते। नन्विति। पण्डितशब्दस्य ज्ञानमात्रार्थत्वात् मुनिशब्दस्य तदतिशयगामित्वात् अर्थभेदं च पाण्डित्यशब्देन ज्ञानमात्रमर्प्यत इत्याह। नेत्यादिना। रूढप्रयोगाभावे कथं तदर्थत्वमत आह। मुनीनामिति। आश्रमेऽपि प्रयोगदर्शनात् अनियतत्वाज्ज्ञानातिशयार्थत्वस्य चाव्याविधानादयुक्तमेवेति शङ्कते। नन्विति। उत्तमाश्रमे मुनिशब्दोऽसाधारणः साधारणो वेति विकल्प्याद्यं प्रत्याह। नेति। साधारणत्वे त्वेकस्यानेकार्थत्वयोगात् प्रकृतमित्यभिप्रेत्य प्रयोगस्य गत्यन्तरमाह। इतरेति। मौनस्यापूर्वत्वमुपपाद्य तृतीयमिति पदं व्याख्याय फलितमाह। तस्मादिति। वाक्यभेदप्रसङ्गात् एकस्यैव विधिरित्युक्तं तत्राह। यत्त्विति। उपरिष्टादपि मौनं वाक्यभेदेन विधेयमित्यत्र हेत्वन्तरमाह। निर्वेदनीयेत्विति। यस्मादिदं मौनं विद्यासहकारित्वेन विधीयते तत्राह। मद्वत इति। विशेषणप्रापकं श्रुतवति। कर्तव्यमिति।

ऽऽश्रयणं, तद्वतो विद्यावतः संन्यासिनः। कथं विद्यावतः संन्यासिन इत्यवगम्यते तदधिकारात् 'आत्मानं विदित्वा पुत्राद्येषणाभ्यो व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति। ननु सति विद्यावत्त्वे प्राप्नोत्येव तत्र विद्यातिशयः किं मौनविधिना इत्यत आह। पक्षेणेति। एतदुक्तं भवति यस्मिन् पक्षे भेददर्शनप्राबल्यान्न प्राप्नोति तस्मिन्नेष विधिरिति। विध्यादिवत् यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्येवंजातीयके विध्यादौ सहकारित्वेनाऽग्न्याधानादिकमङ्गजातं विधीयते एवमविधिप्रधानेऽप्यस्मिन् विद्यावाक्ये मौनविधिरित्यर्थः। एवं बाल्यादिविशिष्टे कैवल्याश्रमे श्रुतिसिद्धे विद्यमाने कस्मात्

---

प्रकरणं तथेत्याह। तद्वदिति। पक्षेणेति पदं शङ्कोत्तरत्वेनावतारयति। नन्वित्यादिना। ब्रह्मैव प्रत्यगद्वयं वस्तु द्वैतं च [illegible] शास्त्रयुक्तिभ्यां सिद्धे तत्साक्षात्कारसाधनाभ्यासे स्वयम् एव पुरुषस्य [illegible] अनर्थको विधिरिति चोदिते [illegible] तु [illegible] साक्षात्कारहेतुभावस्याप्राप्तत्वादेष्टव्यस्तद्विधिरिति समाधिः। विद्यावत्त्वाधिकारादिति [illegible] विद्यावत इति विद्यातिशययुक्तो नोच्यते किन्तु विद्योदय [illegible] पक्षे कदाचिद्भेददर्शन प्राप्नोत्यतो विधेरर्थवत्त्वमिति सूत्रपदार्थं विवृणोति। विध्यादिवदिति। [illegible] विध्यादिति। [illegible] प्रधान, विधेरादिर्विधिरिति। तदेव [illegible] यथेति। [illegible] दर्शपूर्णमासविधिः, समिदादिस्तु [illegible] योजयति। एवं [illegible] नोपपद्यते। [illegible] ब्रूते [illegible] इत्याह। एवमिति। [illegible] कैवल्याश्रमे [illegible]

च्छान्दोग्ये गृहिणोपसंहारः 'अभिसमावृत्य कुटुम्बे" इत्या-
तेन ह्युपसंहरन् तद्विषयमादरं दर्शयतीत्यत उत्तरं पठति।

## कृत्स्नभावात् तु गृहिणोपसंहारः॥ ४८ ॥

तुशब्दो विशेषणार्थः, कृत्स्नभावोऽस्य विशिष्यते, बहुलायासानि हि बहून्याश्रमकर्माणि यज्ञादीनि तं प्रति कर्तव्यतयोपदिष्टानि आश्रमान्तरकर्माणि च यथासम्भवमहिंसेन्द्रियसंयमादीनि तस्यापि विद्यन्ते, तस्मात् गृहमेधिनोपसंहारो न विरुध्यते ॥

## मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥

यथा मौनं गार्हस्थ्यञ्चैतावाश्रमौ श्रुतिसम्मतावेवमितरावपि वानप्रस्थगुरुकुलवासौ। दर्शिता हि पुरस्तात् श्रुतिः "तप एव द्वितीयो ब्रह्मचार्य्याचार्यकुलवासी तृतीयः" इत्यादि

---

मित्याह। तेनेति। बहुलायाससाध्यकर्मबाहुल्यात् तेनोपसंहारो ग्रन्थस्य तेनैव समापनादित्याह। अत इति॥

सूत्रं व्याचष्टे। तुशब्द इति। ननु यथा गृहिणो यज्ञादीनि कर्तव्यत्वेन उक्तानि तथाऽऽश्रमान्तराणामपि करणसंयमादीनि कर्माणि विद्यन्ते, तथा च कोऽस्य विशेषस्तत्राह। आश्रमान्तरेति। बहुधर्म-विशेषे सिद्धे फलितमाह। तस्मादिति॥

मौनं गार्हस्थ्यमित्याश्रमद्वयोक्तेरितराश्रमाभावशङ्का कस्यचिद्भवेत् तन्निरासार्थमाह। मौनवदिति। कथं तयोः श्रुतिमत्त्वं तत्राह। दर्शितेति। श्रुतिमत्त्वाविशेषे फलितमाह। तस्मादिति। इतरेषामिति बहुत्वात् गार्हस्थ्यस्यापि परामर्शो न तु भिक्षुवत् उपन्यास इत्याशयः। इतरेषामिति। गायत्रः, ब्राह्मः, प्राजापत्यः, बृहन् इति ब्रह्मचारी चतुर्विधः। गृहस्थोऽपि वार्त्तावृत्तिः, शालीनवृत्तिः, यायावरः, घोर-

तस्मात्त्वतुल्यमप्याश्रमाणामुपदेशाविशेषात् तुल्यवत् विकल्पसमुच्चयाभ्यां प्रतिपत्तिः, इतरेषामिति द्वयोराश्रमयोर्बहुवचनं वृत्तिभेदापेक्षयानुष्ठानभेदापेक्षया वेति द्रष्टव्यम् ॥

## अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥

'तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इति बाल्यमनुष्ठेयतया श्रूयते। तत्र बालस्य भावः कर्म वा बाल्यमिति तद्धिते सति बालभावस्य वयोविशेषस्येच्छया सम्पादयितुमशक्यत्वात् यथोपपादमूत्रपुरीषत्वादिबालचरितमन्त-

---

सन्न्यासी इति चतुर्विधः। वानप्रस्थश्च वैखानसोदुम्बरवालखिल्यफेनपप्रभेदैश्चतुर्विधः। तथा परिव्राडपि कुटीचकबहूदकहंसपरमहंसप्रभेदैश्चतुर्विध इति येऽमी प्रभेदा आश्रमास्तत्तद्धर्मविशेषपक्षाः श्रुतिस्मृतिप्रसिद्धास्ततो ब्रह्मचारिणि वानप्रस्थे चानुष्ठानभेदमनुष्ठानभेदं वाऽपेक्ष्य बहुत्वं गार्हस्थ्यमपेक्ष्य, तस्य प्रागेवाभिहितत्वेनोक्तत्वादित्यर्थः॥

बाल्यस्य विधेयत्वमुपेत्यावान्तरवाक्यभेदेन मौनमपि विधेयत्वात् मुमुक्षुणा कार्यमित्युक्तमिदानीं किन्तत् बाल्यमिति वीक्षायामाह। अनाविष्कुर्वन्निति। अनुष्ठेयत्वेन श्रुतं बाल्यं विषयत्वेनोदाहरति। तस्मादिति। तत्र बाल्ये विषये संशय इति सम्बन्धः। संशयकारणमाह। बालस्येति। तर्हि बालभावो वयोविशेषोऽपि पलमामिव यश्च इदपरे सिद्धमाह। शक्येति। तर्हितत्कृत्या परिशिष्टं बाल्यमाश्रित्य संशयमभिनयति। यथेति। बाल्यशब्दार्थविवेचनेन सत्वमपुनर्वृत्तिविद्यान्तरगतसंवादापि निरूपणात्मादशादिसङ्गतिः। पूर्वपक्षे लिङ्गमात्रस्यापि विदुषोऽनुष्ठेयं सिध्यति, सिद्धान्ते बाल्यस्याप्रदर्शेन्द्रियत्वादिरूपभावशुद्धेरनुष्ठेयत्वात् न विदुषो यथेष्टचेष्टासिद्धिरिति मत्वा प्रश्नपूर्वकं पूर्वपक्षमाह। किमावदिति। यदयं चारो वदन वादी भक्षणं भक्षले ...

र्गता वा भावविशुद्धिरदम्भदर्पप्ररूढेन्द्रियत्वादिरहितता वा बाल्यं स्यादिति संशयः, किं तावत् प्राप्तं कामचारवादभक्षता यथोपपादमूत्रपुरीषत्वञ्च प्रसिद्धतरं लोके बाल्यमिति तद्ग्रहणं युक्तम्। ननु पतितत्वादिदोषप्राप्तेर्न युक्तं कामचारतादाचरणं न विद्यावतः सन्न्यासिनो वचनसामर्थ्याद्दोषनिवृत्तेः पशुहिंसादिष्विवेत्येवं प्राप्तेऽभिधीयते। न, वचनस्य गत्यन्तरसम्भवात्। अविरुद्धे ह्यन्यस्मिन् बाल्यशब्दाभिधेये लभ्यमाने न विध्यन्तरव्याघातकल्पना युक्ता। प्रधानोपकाराय चाङ्गं विधीयते ज्ञानाभ्यासश्च प्रधानमिह यतीनामनुष्ठेयं

---

यस्य स तथा तस्य भावस्तत्ता। यथोपपादं यथासम्भवं, यत्र क्वापि मूत्रपुरीषं च स्येति यथोक्तस्तस्य भावस्तत्त्वम्। तत्र लोकप्रसिद्धिं हेतुमाह प्रसिद्धेति। शास्त्रान्तरविरोधादयुक्तस्तत्त्वविषयाल्पस्य विधेयत्वमिति शङ्कते। नन्विति। आदिशब्देन शिष्टगर्हा गृह्यते। सामान्यशास्त्राद्विशेषविधेः स्यादित्याह। नेत्यादिना। समानविधेर्विशेषविधिना सङ्कोचे दृष्टान्तमाह। पश्विति। विदुषो यथेष्टचेष्टायामपि न दोषोऽस्तीति प्राप्तमनूद्य सिद्धान्तमाह। एवमिति। विदुषो यथेष्टचेष्टा न विधेया शास्त्रान्तरविरोधादिति प्रतिजानीते। नेति। सामान्यशास्त्रस्य सङ्कोचो बाल्येन तिष्ठासेदिति वचनादित्याशङ्क्याह। वचनस्येति। सामान्यप्रवृत्तविधिशास्त्राविरुद्धेऽर्थे सम्भवति तद्विरुद्धसङ्कल्पनायोगात् न कामचारादि विधेयमित्युक्तमेव व्यनक्ति। अविरुद्धे हीति। इतश्च कामचारादि न विधेयमित्याह। प्रधानेति। किमत्र प्रधानं यदङ्गं बाल्यादि विधीयते तदाह। ज्ञानेति। उक्तप्रधानोपकारित्वाभावान्न कामचारादि विधेयमित्युक्तं तद्विरोधित्वाच्च तदविधेयमित्याह। नु हीति। किन्तर्हि विधेयं बाल्यं तदाह। तथादिति। इहेति प्रकृतः श्रौतः।

न च सकलायां बालचर्यायामङ्गीक्रियमाणायां ज्ञानाभ्यासः सम्भाव्यते, तस्मादान्तरो भावविशेषो बालस्याप्ररूढेन्द्रियत्वादिरिह बाल्यमाश्रीयते। तदाह अनाविष्कुर्वन्निति। ज्ञानाध्ययनधार्मिकत्वादिभिरात्मानमविख्यापयन् दम्भदर्पादिरहितो भवेत् यथा बालोऽप्ररूढेन्द्रियतया न परेष्वात्मानमाविष्कर्तुमीहते तद्वत्। एवं ह्यस्य वाक्यस्य प्रधानोपकार्यर्थानुगम उपपद्यते। तथा चोक्तं स्मृतिकारैः-

'यन्न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम्।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित् स ब्राह्मणः॥
गूढधर्माश्रितो विद्वान्, अज्ञातचरितं चरेत्।
अन्धवत् जडवच्चाऽपि मूकवच्च महीं चरेत्॥
'अव्यक्तलिङ्गोऽव्यक्ताचारः' इति चैवमादि॥

---

उक्तेऽर्थे सूत्रमादाय योजयति। तदाहेति। कथं यथोक्तेऽर्थे बाल्यशब्दः प्रयुज्यते तत्राह। यथेति, अन्वयादिति पदं व्याकरोति। एवं हीति। अप्ररूढेन्द्रियत्वादिरूपभावशुद्धिरूपस्य बाल्यस्य प्रधानोपकारित्वे मानमाह। तथा चेति। कुलीनत्वप्रकटनं सत्त्वं, तद्वैपरीत्यमसत्त्वं, शास्त्रार्थज्ञानराहित्यमश्रुतत्वं, तद्वैपरीत्यं बहुश्रुतत्वं, सदाचारनिरतत्वं सुवृत्तत्वं, दुराचारनिरतत्वं दुर्वृत्तत्वम् इति भेदः। तत्किमिदानीं मुमुक्षोर्योग्यस्य सदु- श्रोत्रांस्येव किञ्चित् अनुष्ठेयं तत्राह। गूढेति। चक्षुरादीन्द्रियपारवश्यं निरसितम् अन्धवदित्युक्तम्। रसनादिपारवश्यं निरस्यति। जडवदिति। ज्ञानेन्द्रियपारवश्यं परिहृत्य कर्मेन्द्रियपारवश्यं परिहरति। मूकवदिति। धर्मध्वजत्वाप्रकटनमव्यक्तलिङ्गत्वं, मदेन सुप्रवृत्तोऽपरवशकर्मेन्द्रियस्य श्रवणादिपरस्य मोक्षार्थं तत्त्वज्ञानम् अवश्यमाप्नोतीति भावः॥

# ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥

सर्वापेक्षा च यज्ञादिश्रुतेरित्यत आरभ्योच्चावचं विद्यासा-
धनमवधारितं तत्फलं विद्या सिध्यन्ती किमिहैव जन्मनि
सिध्यति उत कदाचिदमुत्रापीति चिन्त्यते, किं तावत् प्राप्तम्
इहैवेति। किं कारणं श्रवणादिपूर्विका हि विद्या न कश्-
चिदमुत्र विद्या मे जायतामित्यभिसन्धाय श्रवणादिषु प्रवर्तते
समान एव तु जन्मनि विद्याजन्माभिसन्धाय तेषु प्रवर्तमानो
दृश्यते। यज्ञादीन्यपि श्रवणादिद्वारेणैव विद्यां जनयन्ति प्रमाण-

वृत्तमनूद्योच्चावचं विद्याहेतुमुक्त्वा तत्फलं विद्याजन्मकालं निरू-
पयति। ऐहिकमिति। उक्तहेत्वधीनधीजन्मविषये कारीर्यादि-
फले चोभयोपलब्धेस्तत्तुल्यत्वात् पूर्वकं संशयमाह। सर्वेति। श्र-
वणादिसामग्री प्रतिबन्धशून्या विशिष्टधीप्रसवभूमिरित्युक्तेरत्र पादसं-
गतिः। पूर्वपक्षे श्रवणादीनां विद्योपायत्वनियमासिद्धिः, सिद्धान्ते
प्रतिबन्धाभावापेक्षया तेषां तन्नियमसिद्धिरित्युपेत्य प्रश्नपूर्वकमैहिक-
नियमं पूर्वपक्षमाह। किमिति। फलत्वे विद्योपलब्धौ तन्नियमं नास्ति
हेतुरिति यद्धते। किमिति। तत्र कारणमाह। श्रवणादीति। विद्या-
दिहेतुत्वापि धीहेतुत्वं श्रवणादेः स्यादित्याशङ्क्याह। न कश्चिदिति। का-
र्ताई तेषु प्रवृत्तिरित्याशङ्क्य तेषां कारीर्यादितुल्यत्वमाह। समान इति।
श्रवणादीनां चक्षुरादिवत्तद्धीसाधनत्वात् कालान्तरीयफलोपलम्भाय बहु-
कर्मानुष्ठानाभाववत् जन्मान्तरीयविद्यायै श्रवणादिषु प्रवृत्त्ययोगात् दृश्य-
मानसंसारदुःखनिवृत्तये च विद्यासाधनत्वात् कारीर्यादितुल्यत्वम-
न्येन विद्या जनयेत्यर्थः। यज्ञादीनां जन्मान्तरीयफलानां धीहेतुत्व-
विविदिषाद्वारकत्वात् जन्मान्तरे धीजन्मेत्याशङ्क्याह। यज्ञेति। तेषां

जन्यत्वाद्विद्यायाः। तस्मादैहिकमेव विद्याजन्मेत्येवं प्राप्ते वदामः, ऐहिकं विद्याजन्म भवति असति प्रस्तुतप्रतिबन्धे इति। एतदुक्तं भवति यदा प्रक्रान्तस्य विद्यासाधनस्य कश्चित् प्रतिबन्धो न क्रियते उपस्थितविपाकेन कर्मान्तरेण तदेहैव विद्या उपपद्यते, यदा तु खलु प्रतिबन्धः क्रियते तदाऽमुत्रेति। उपस्थितविपाकत्वञ्च कर्मणो देशकालनिमित्तोपनिपाताद्भवति। यानि चैकस्य कर्मणो विपाचकानि देशकालनिमित्तानि न तान्येवान्यस्यापीति नियन्तुं शक्यते यतो विरुद्धफलान्यपि कर्माणि भवन्ति, शास्त्रमप्यस्य कर्मण इदं फलमित्येतावति पर्यवसितं न देशकालनिमित्तविशेषमपि सङ्कीर्तयति। साध-

---

धीशुद्ध्या श्रवणादिघटकत्वात् घटितेषु क्रियायज्ञाद्यङ्गत्वमित्यैहिकत्वनियम इत्यर्थः। श्रवणादीनां कारीर्यादिवदृष्टफलत्वं फलितमाह। तस्मादिति। श्रवणादिषु कृतेष्वपि न चेदस्य धीः स्यात्तेषामतदुपायत्वमिति प्राप्तमनूद्य चित्तावदनियतफलधीसाधनमिति सिद्धान्तमाह। एवमिति। कृतेष्वपि श्रवणादिषु कदाचिद्विद्या नोत्पद्यते चेत्तर्हि तेषां तदुपायत्वमनियतं स्यादित्याशङ्क्याह। एतदिति। कृतेष्वपि श्रवणादिषु फल विद्यानुदये कारीर्यादाविव प्रतिबन्धो वा पौष्कल्याभावो वा तेषां कल्पनीयः, प्रतिबन्धहीना हि सामग्री कार्ये हेतुर्न चैतावता तद्धेतुत्वहानिरित्यर्थः। उपस्थितविपाकश्रवणादिविरोधात् कर्मण एव प्रतिबन्धकत्वमाह। उपस्थितेति। तदेव देशादिभिर्विद्यार्थमेव श्रवणादिकर्म क्रियते न विपच्यते तत्राह। यानीति। भोगार्थस्य कर्मणो ज्ञानार्थस्य च श्रवणादेर्देशकालनिमित्तैकत्वाभावे हेतुमाह। यत इति। कर्मणा श्रवणादीनां प्रतिबन्धे तेभ्यो विद्योत्पत्तेरादिवाक्यं व्याहन्येतेत्याशङ्क्याह। शास्त्रमिति। तथापि कर्मण एव प्रतिबन्धकत्वं न श्रवणादीनामिति कुतो नियम इत्यत आह। [illegible]ति। वस्तुतस्तु विद्याभावे कारीर्यादिवत् प्रतिबन्धादिकल्पनमेव

नवीर्यविशेषात्त्वतीन्द्रिया हि कस्यचित् शक्तिराविर्भवतीति तद् प्रतिबद्धा परस्य तिष्ठति। न चाविशेषेण विद्यायामभिसन्धि नोत्पद्यते इहामुत्र वा मे विद्या जायतामित्यभिसन्धेर्निरङ्कुशत्वात्। श्रवणादिद्वारेणापि विद्योत्पद्यमाना प्रतिबन्धक्षयापेक्षयैवोत्पद्यते। तथा च श्रुतिः दुर्बोधत्वमात्मनो दर्शयति—

'श्रवणायापि बहुभिर्यो न लभ्यः
शृण्वन्तोऽपि बहवो यन्न विदुः।
आश्चर्यो वक्ता कुशलोऽस्य लब्धा
आश्चर्यो ज्ञाता कुशलानुशिष्टः' ॥ इति।

गर्भस्थ एव च वामदेवः प्रतिपेदे ब्रह्मभावमिति वदन्तो

---

धिय आमुष्मिकत्वकल्पनमयुक्तमिहैव मे विद्या स्यादित्यभिसन्धिविरोधादिति तत्राह। न चेति। दृश्यमानसंसारदुःखस्यानेकजन्मगामित्वं जानतो यदा कदाचिदनर्थनिवृत्तिः स्यादित्यभिसन्धेः साधनसामर्थ्यानुसारेण प्रमाणितत्वादित्याह। अभिसन्धेरिति। यत्तु श्रवणादीनां चक्षुरादिवद् दृष्टफलत्वमिति तत्राह। श्रवणादीति। तेषां विधानाददृष्टद्वारापि साधनत्वमवधारयद्वगतं यज्ञादीनामनियतफलानां न साधनत्वविधेव विद्योत्पत्तेरनियतत्वमित्यर्थः। यत्तु ज्ञानादीनां घटकत्वात् घटितेषु श्रवणादिषु विद्याऽवश्यम्भाविनीति, तत्र प्रतिबन्धसत्त्वस्य श्रौतलिङ्गसिद्धत्वानुपपत्तेरित्याह। तथा चेति। आत्मनः श्रवणमपि दुष्करं बहूनामित्याह। श्रवणायेति। कथञ्चन श्रवणेऽपि तत्फलज्ञानं दुर्लभमित्याह। शृण्वन्त इति। तत्र हेतुः। आश्चर्य इति। यथावदस्यात्मनो वक्ताऽऽश्चर्योऽद्भुतः यत् कश्चिदेव सम्भवति सम्यगाचार्यशिक्षावपि तत्कुशला लब्धा साक्षात्कर्ता अस्याश्चर्यं स्तवतु साक्षात्कारः कुशलेनाचार्येणानुशिष्टोऽपि साक्षात् परोक्षतो ज्ञाताऽप्याश्चर्य एवेत्यर्थः। समस्यासुमिकत्वे धियो लिङ्गमाह।

जन्मान्तरसञ्चितात् साधनादपि जन्मान्तरे विद्योत्पत्तिं दर्शयति। न हि गर्भस्थस्यैवैहिकं किञ्चित् साधनं सम्भाव्यते। स्मृतावपि ‘अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण! गच्छति’ इत्यर्जुनेन पृष्टो भगवान् वासुदेवः ‘न हि कल्याणकृत् कश्चित् दुर्गतिं तात! गच्छति’ इत्युक्त्वा पुनस्तस्य पुण्यलोकप्राप्तिं साधुकुले सम्भूतिञ्चाभिधाय, अनन्तरं तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम्’ इत्यादिना ‘अनेकजन्मसंसिद्धस्ततो याति परां गतिम्’ इत्यन्तेनैतदेव दर्शयति। तस्मादैहिकमामुष्मिकं वा विद्याजन्म प्रतिबन्धक्षयापेक्षयेति स्थितं॥

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः॥ ५२॥

यथा मुमुक्षोर्विद्यासाधनावलम्बिनः साधनवीर्यविशेषात् विद्यालक्षणे फले ऐहिकामुष्मिकफलत्वकृतो विशेषप्रतिनियमो दृष्टः, एवं मुक्तिलक्षणेऽप्युत्कर्षापकर्षकृतः कश्चिद्विशेषप्रतिनि-

---

गर्भस्थ इति। कथानुपपत्त्या श्रुतिरिममर्थं दर्शयति तत्राह। न हीति। जन्मान्तरसञ्चितं साधनं जन्मान्तरेऽपि धियं साधयतीत्यत्र स्मृतिमाह। स्मृतावपीति। श्रवणादीनां पौष्कल्येऽपि प्रतिबन्धविलम्बात् पश्चादफल-चित्वादिवदनियतकालत्वसिद्धेर्नानैकान्तिकफलत्वं तेषामित्युपसंहरति। तस्मादिति॥

विद्योदये फले कालोत्कर्षापकर्षकृतो विशेषनियमो दर्शितः, सम्प्रति विद्याफलमोक्षे कस्यचिदपि विशेषनियमस्याभावं दर्शयति। एवमिति। विद्याफलं मुक्तिर्विषयः, सा किं विद्यायदुत्कर्षापकर्षकृतविशेषवती किं वा

यमः स्यादित्याशङ्क्याह। एवं मुक्तिफलानियम इति। न खलु मुक्तिफले कश्चिदेवम्भूतो विशेषप्रतिनियम आशङ्कितव्यः कुतः, तदवस्थावधृतेः। मुक्त्यवस्था हि सर्ववेदान्तेष्वेकरूपैवावधार्यते, ब्रह्मैव हि मुक्त्यवस्था, न च ब्रह्मणोऽनेकाकारयोगोऽस्ति एकलिङ्गत्वावधारणात् 'अस्थूलमनणु' 'स एष नेति नेत्यात्मा' 'यत्र नान्यत् पश्यति' ब्रह्मैवेदममृतं पुरस्तात्' इदं सर्वं यदयमात्मा' 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कम्पश्येत्'

---

नेति फलस्योभयथादृष्टे संशये प्रकृतविद्याफलस्य प्रसङ्गतो निरतिशयत्वोक्त्यादादिसङ्गतिः। पूर्वपक्षे मोक्षस्य कर्मसाध्यतया पुरुषार्थाधिकरणसिद्धिः, सिद्धान्ते तस्य ज्ञानैकसाध्यत्वात् तत्सिद्धिरित्यभिप्रेत्य पूर्वपक्षमाह। यथेति। मुक्तिरुपचयापचयवती फलत्वात् विद्यायदित्युक्तावतस्याः कर्मसाध्यत्वाधिगमात् पुरुषार्थाधिकरणत्वमयुक्तमित्याशङ्क्य सिद्धान्तयतार्थं प्रतिज्ञां विभजते। न खल्विति। उक्तेऽनुमाने आगमबाधमाशङ्क्य निरवकाशेति शङ्कते। कुत इति। मुक्तिस्वरूपप्रश्नैकरूप्यायशास्त्रविरोधात् नानुमेति मत्वा सूत्रावयवमादाय व्याचष्टे। तदवस्थेति। मुक्तिर्नाम काचिदवस्था विद्यते चेत् अद्वितीयत्वविरोधात् जायदवस्थावत् अवस्थापि निवृत्तिमती स्यादित्याशङ्क्याह। ब्रह्मैवेति। कथमेतावता मुक्तेरुत्कर्षकृतविशेषराहित्यमित्याशङ्क्याह। न चेति। न स्थानतोऽप्यधिकरणे निर्विशेषत्वमस्थूलादिश्रुत्या ब्रह्मणो निरूपितमिति स्मारयति। एकेति। इतश्च मुक्तेर्निरतिशयत्वमित्याह। अपिचेति। कालोपचयापचयाभ्यां ज्वालोपचयापचयदृष्टेरन्तरङ्गबहिरङ्गतद्भावादिकाधनोपचयापचयाभ्यां विद्योपचयापचयसम्भवात् तत्फले तत्कार्ये भेदः स्यातामित्याशङ्क्य हेत्वन्तरं स्फोरयति। न विद्येति। विद्यैव सार्थया स्वसाध्येऽपि कथञ्चिदतिशयमादध्यादित्याशङ्क्याह। अङ्गीति। तर्हि मुमुक्षूणां विद्यार्थिनां महत्त्वानर्थक्यं तत्राह। विद्येति। तथा-

इत्यादि श्रुतिभ्यः। अपि च विद्यासाधनं स्ववीर्यविशेषात् स्वफल एव विद्यायां कञ्चिदतिशयमासञ्जयेत् न विद्याफले मुक्तौ तद्ध्यसाध्यं नित्यसिद्धस्वभावमेव विद्ययाधिगम्यत इत्यसकृदवादिष्म। न च तस्यामप्युत्कर्षात्मकोऽतिशय उपपद्यते, निकृष्टाया विद्यात्वाभावात्, उत्कृष्टैव विद्या भवति, तस्मात् तस्यां चिराचिरोत्पत्तिरूपो विशेषो भवेत् न तु मुक्तौ कश्चिदतिशयसम्भवोऽस्ति। विद्याभेदाभावादपि तत्फलभेदनियमाभावः कर्मफलवत्, न हि मुक्तिसाधनभूताया विद्यायाः कर्मणामिव भेदोऽस्ति। सगुणासु तु विद्यासु मनोमयः प्राणशरीरः' इत्याद्यासु गुणावापोद्वापवशात् भेदोपपत्तौ सत्यामुपपद्यते यथास्वं फलभेदनियमः कर्मफलवत्। तथा च लिङ्गदर्शनं 'तं यथा यथोपासते तदेव भवति'

---

मतिशयमाश्रित्य मुक्तौ नातिशयोऽस्तीत्युक्तमिदानीं विद्यायामपि मोक्षहेतुतत्त्वसाक्षात्काररूपायामतिशयवत्तीत्याह। न चेति। कथं तर्हि पूर्वाधिकरणे विद्याया विशेषो दर्शितस्तत्राह। तस्मादिति। मुक्तावपि तर्हि तादृशोऽतिशयो भविष्यति तत्राह। न त्विति। विद्योत्पत्तिनान्तरीयकत्वेनाविद्यानिवृत्तिरूपाया मुक्तेरदृष्टजन्यत्वादित्यर्थः। मुक्तेर्निर्विशेषत्वे हेत्वन्तरमाह। विद्येति। एकरूपस्यात्मनस्तदाकारविद्यायां विशेषाभावादनेकरूपे फलोत्पादकत्वायोगात् तत्फले विशेषासिद्धिरित्यर्थः। विद्यायां भेदाभावं प्रपञ्चयति। न हीति। सगुणविद्यावद्विद्यात्वादात्मविद्यायां भेदः स्यादित्याशङ्क्य विषयभेदात्तत्र भेदोऽपि नात्र विषयभेदोऽस्तीत्याह। सगुणास्विति। तत्र फलभेदे मानमाह। तथा चेति। दार्ष्टान्तिके विशेषमाह। नैवमिति। तत्त्वविद्याविषये गुणाभावं स्मारयति। तथा चेति। कस्यचित् निर्गुणविद्यावतः पुरुषस्य गतिः फलमिति यावत्। तत्र

इति नैवं निर्गुणायां विद्यायां गुणाभावात्। तथा च स्मृतिः 'न हि गतिरधिकास्ति कस्यचित् सति हि गुणे प्रवदन्त्यतुल्यताम्' इति। तदवस्थावधृतेस्तदवस्थावधृतेरिति पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयति॥

इति श्रीशारीरकमीमांसाभाष्ये श्रीमच्छङ्करभगवत्पादकृतौ तृतीयाध्यायस्य चतुर्थः पादः।

तृतीयाध्यायः समाप्तः।

---

न्यूनाधिकभाव्याभावे हेतुमाह। सति हीति। पुनरुक्तेरर्थमाह। तदवस्थेति। तदेवं मुक्तेर्निरतिशयत्वात् न कर्मसाध्यतेति युक्तं पुरुषार्थाधिकरणमिति भावः॥

इति श्रीगुद्धानन्दपाद्यशिष्यभगवदानन्दज्ञानकृतौ शारीरकभाष्यव्याख्यायां तृतीयाध्यायस्य चतुर्थः पादः॥

अध्यायश्च समाप्तः॥

ॐ परमात्मने नमः।

आवृत्तिरसकृदुपदेशात्॥ १॥

तृतीयेऽध्याये परापरासु विद्यासु साधनाश्रयो विचारः प्रायेणात्यगात्, अथेह चतुर्थेऽध्याये फलाश्रय आगमिष्यति, प्रसङ्गागतञ्चान्यदपि किञ्चित् चिन्तयिष्यते, प्रथमं तावत् कतिभिश्चिदधिकरणैः साधनाश्रयविचारशेषमेवानुसरामः। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इति चैवमादिश्रवणेषु संशयः, किं सकृत्प्रत्ययः कर्त्तव्य आहोस्विदावृत्त्येति, किं तावत् प्राप्तं सकृत्प्रत्ययः

---

ॐ रामचन्द्राय नमः।

यज्ज्ञानाज्जीवतो मुक्तिरुत्क्रान्तिर्गतिवर्जिता।
लभ्यते तत्परं ब्रह्म रामनामास्मि निर्भयम्॥ १॥

ॐ। आवृत्तिरसकृदुपदेशात्। साधनं निरूप्य फलं निरूप्यत इत्यध्याययोर्हेतुफलभावं सङ्गतिमाह। तृतीय इति। फलप्रसङ्गेनोत्क्रान्तिरर्चिरादिमार्गस्य विचारार्थं इत्याह। प्रसङ्गेति। पूर्वं पादद्वयेन मुमुक्षुं सन्न्यासादि साधनं चिन्तितं, सम्प्रति फलार्थोपासनशब्दवाच्यावृत्त्यादिकं प्रधा-नेषादिकरणाष्टकं चिन्त्यते, तदारभ्य जीवन्मुक्तस्य द्वितीयपादे

स्यात् प्रयाजादिवत्, तावता शास्त्रस्य कृतार्थत्वात्, अनूद्यमानायां ह्यावृत्तौ क्रियमाणायामशास्त्रार्थः कृतो भवेत्। नन्वसकृदुपदेशा उदाहृताः 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादयः। एवमपि यावच्छब्दमावर्तयेत् सकृच्छ्रवणं सकृन्मननं सकृन्निदिध्यासनञ्चेति नातिरिक्तं, सकृदुपदेशेषु तु वेद उपासीतेत्यादिष्वनावृत्तिरित्येवं प्राप्ते ब्रूमः प्रत्ययावृत्तिः कर्त्तव्या। कुतः, असकृदुपदेशात्। 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्येवंजातीयको ह्यसकृदुपदेशः प्रत्ययावृत्तिं सूचयति। ननूक्तं यावच्छब्दमेवावर्तयेन्नाधिकमिति।

---

उत्क्रान्तिस्तृतीये अर्चिरादिमार्गस्य गन्तव्यस्य च निर्णयश्चतुर्थे ज्ञानोपासनयोः फलनिर्णय इति पादार्थविवेकः। आद्याधिकरणस्य श्रवणादिसाधनं विषयमनूद्य द्वेधानुष्ठानदर्शनात्संशयमाह। आत्मा वा इति। श्रौतात्मधीसाधनफलविचारात्मकत्वात् सर्वाधिकरणानां श्रुतिशास्त्राध्यायसङ्गतयः उक्तास्तत्पादार्थसम्बन्धात् तत्तत्पादसङ्गतिः, मोक्षे विशेषाभाववत् श्रवणादावावृत्तिविशेषो नास्तीति दृष्टान्तलक्षणाय सङ्गत्या पूर्वपक्षमाह। किं तावदिति। अत्र पूर्वपक्षे श्रवणादेः प्रयाजवददृष्टार्थत्वात् सकृदनुष्ठानफलं, सिद्धान्ते त्ववघातवत् दृष्टार्थत्वात् आवृत्तिफलावृत्तिरिति भेदः। असकृदुपदेशान्यथानुपपत्त्या साधनवृत्तौ शास्त्रस्य तात्पर्यमिति शङ्कते। नन्वसकृदिति। श्रवणादीनां समुच्चयविधानेनासकृदुक्तेरन्यार्थोपपत्तेर्नावृत्तौ तात्पर्यमित्याह। एवमपीति। ससुपदार्थसाक्षात्कारसाधनेष्वप्यनावृत्तिमाह। सकृदिति। तदप्यसकृदुपदेश श्रवणादिसमुच्चययोरन्यतरसूचकत्वेनान्यथासिद्धः, तथापि दृष्टे सम्भवत्यदृष्टकल्पनानुपपत्तेः श्रवणादेरावृत्तिद्वारा साक्षात्कारफलस्य यदुक्तादौ दृष्टत्वादसकृदुक्तिरावृत्तिं सूचयति। दृष्टार्थत्वादिति। न्यायानुभवादित्वात्। न दर्शनपर्य्यवसानस्यादिति। ध्यानस्य त्वावृत्तेर्वैदोपासीतेति यद्वे कुरु-

न, दर्शनपर्यवसानत्वादेषाम्। दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति, यथाऽवघातादीनि तण्डुलादिनिष्पत्तिपर्यवसानानि तद्वत्। अपि चोपासनं निदिध्यासनं चेत्यन्तर्णीतावृत्तिगुणैव क्रियाऽभिधीयते। तथा हि लोके गुरुमुपास्ते राजानमुपास्ते इति च यस्तात्पर्येण गुर्वादीननुवर्तते स एवमुच्यते। तथा ध्यायति प्रोषितनाथा पतिमिति या निरन्तरस्मरणा पतिं प्रति सोत्कण्ठा सैवमभिधीयते। विद्युपास्त्योश्च वेदान्तेषु व्यतिकरेण प्रयोगो दृश्यते, क्वचिद्विदिनोपक्रम्योपास्तिनोपसंहरति, यथा 'यस्तद्वेद यत् स वेद स मयैतदुक्तः' इत्यत्र 'अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से' इति। क्वचिच्चोपास्तिनोपक्रम्य विदिनोपसंहरति 'यथा मनो ब्रह्मेत्युपासीत' इत्यत्र

---

त्वात् न केवलार्थिकत्वमित्याह। अपि चेति। अस्तूपास्तिशब्दस्यार्थसेवाचित्वं तथापि वेदेतिशब्दोक्तवेदनेऽप्युपचारेण कथमावृत्तिसिद्धिरित्यत आह। विद्युपास्त्योरिति। शब्दयोरेकार्थत्वमुदाहरति। क्वचिदिति। स रैक्वो यद्वेद तत्सर्वं तस्य रैक्वादन्योऽपि यः कश्चिद्वेद तत्फले सर्वोऽन्तर्भवतीत्येतदुक्तो ऽयं मयोत्कृष्टत्वेन स रैक्व उक्तः इति हंसं प्रति हंसान्तरवचनं, तच्छ्रुत्वा रैक्वं गत्वोवाच जानश्रुतिः, हे भगव! एतां रैक्वविदितां देवतां मेऽनुशाधि मह्यमुपदिशेत्यर्थः। एवं सगुणनिर्गुणसाक्षात्कारसाधनस्यावृत्तिः श्रौती चार्थसिद्धा च दृष्टार्थत्वात्, अवघातनयोक्तसकृदुपदेशादर्थसिद्धैवावृत्तिरिति विवेकः। आदित्यरश्म्योरैक्येऽपि भेदे रश्म्याद्युपासनात् मम त्वमेक एव पुत्रोऽसीति कौषीतकिः पुत्रमुवाच

'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद' इति। तस्मात् सकृदुपदेशेष्वप्यावृत्तिसिद्धिः। असकृदुपदेशस्त्वावृत्तेः सूचकः॥

लिङ्गाच्च॥ २॥

लिङ्गमपि प्रत्ययावृत्तिं प्रत्याययति। तथा हि उद्गीथविज्ञानं प्रस्तुत्य 'आदित्य उद्गीथः' [छा०उ०] इत्येतदेकपुत्रतादोषेणापोद्य 'रश्मींस्त्वं पर्यावर्तयात्' इति [छा०उ०] रश्मिबहुत्वविज्ञानं बहुपुत्रतायै विदधत् सिद्धवत् प्रत्ययावृत्तिं दर्शयति। तस्मात् तत्सामान्यात् सर्वप्रत्ययेष्वावृत्तिसिद्धिः।

अत्राह भवतु नाम साध्यफलेषु प्रत्ययेष्वावृत्तिः तेष्वावृत्तिसाध्यस्यातिशयस्य सम्भवात्। यस्तु परब्रह्मविषयः प्रत्ययो नित्यशुद्धबुद्धमुक्तस्वभावमेवात्मभूतं परं ब्रह्म समर्पयति तत्र किमर्थावृत्तिरिति। सकृच्छ्रुतौ ब्रह्मात्मत्वप्रतीत्यनुपपत्ते-

---

अतस्त्वं तथा मा कृथाः किन्तु बहून् रश्मीनादित्यस्य पर्यावर्तय तान् इ-गावर्तयस्वेत्यर्थः। ततोऽपि बहवः पुत्राः स्युः॥

अत्र पर्यावृत्तिशब्दात्सिद्धवदुद्गीथध्यानस्यावृत्तिरुक्ता ततो ध्यान-सामान्यात् फलपर्यन्तसामान्यात् या लिङ्गात्सर्वत्र श्रवणमननध्याने-ष्वावृत्तिसिद्धिरित्याह। लिङ्गाच्चेति। एवं तावत् गुणनिर्गुणसाक्षात्कार-साधनेष्वावृत्तिरुक्ता मत्वा सगुणध्यानादेरावृत्तिमङ्गीकृत्य निर्गुणश्रवणा-दिष्वावृत्तिमाक्षिपति। अत्राहेत्यादिना। वाक्यं निर्गुणसाक्षात्कार-जनने शक्तं न वा, आद्ये सकृच्छ्रुतवाक्यात्साक्षात्कारसिद्धेरावृत्ति-वैयर्थ्यमित्युक्त्वा द्वितीयं शङ्कते। सकृदिति। अशक्तस्यावृत्तावपि फलानुपपत्ते-रित्याह। नेति। तथापीति सकृदशक्तस्य युक्तिसाहित्यात् शक्तिरित्यर्थः। वाक्ययुक्तिभ्यां परोक्षज्ञाने जातेऽप्यपरोक्षज्ञानार्थमावृत्तिरि-

वृत्त्यभ्युपगम इति चेत्, न आवृत्तावपि तदनुपपत्तेः। यदि हि "तत्त्वमसि" इत्येवंजातीयकं वाक्यं सकृच्छ्रूयमाणं ब्रह्मात्मत्वप्रतीतिं नोत्पादयेत् ततस्तदेव चावर्तमानमुत्पादयिष्यतीति का प्रत्याशा स्यात्। अथोच्येत न केवलं वाक्यं कञ्चिदर्थं साक्षात्कर्तुं शक्नोत्यतो युक्त्यपेक्षं वाक्यमनुभावयिष्यति ब्रह्मात्मत्वमिति, तथाप्यावृत्त्यानर्थक्यमेव, साऽपि हि युक्तिः सकृत्प्रवृत्तैव स्वमर्थमनुभावयिष्यति। अथापि स्यात् युक्त्या वाक्येन च सामान्यविषयमेव विज्ञानं क्रियते न विशेषविषयं यथाऽस्ति मे हृदये शूलमित्यतो वाक्यात् गात्रकम्पादिलिङ्गाच्च शूलसद्भावसामान्यमेव परः प्रतिपद्यते न विशेषमनुभवति, यथा स एव शूली विशेषानुभवश्चाविद्याया निवर्तकः तदर्थावृत्तिरिति चेत्, न, असकृदपि तावन्मात्रे क्रियमाणे विशेषविज्ञानोत्पत्त्यसम्भवात्, न हि सकृत्प्रयुक्ताभ्यां शास्त्रयुक्तिभ्यामनवगतो विशेषः शतकृत्वोऽपि प्रयुज्यमानाभ्यामवगन्तुं शक्यते, तस्मात् यदि शास्त्रयुक्तिभ्यां विशेषः प्रतिपाद्येत यदि

---

शङ्कते। अथापि स्यादिति। तयोः परोक्षज्ञानहेतुत्वस्वाभाव्यात् आवृत्तावपि न साक्षात्कारः स्यादिति परिहरति। नासकृदपीति। यदि तयोः साक्षात्कारसामर्थ्यं यदि वा परोक्षज्ञानसामर्थ्यम् उभयथा आवृत्त्यनर्थक्यमित्याह। तस्मादिति। प्रमाणवैचित्र्यादप्यावृत्त्यानर्थक्यमित्याह। न चेति। प्रमेयज्ञानं च शास्त्र तदेत्याह। अपि चेति। द्विविधो ह्यधिकारी स्यात् कश्चित् जन्मान्तराभ्यासात् निरस्तसमस्तावरणादिप्रतिबन्धः कश्चिन्न

